KÂVYAMÂLÂ. 64.



THE

# PRÂCHÎNA-LEKHA-MÂLÂ

OR

# A COLLECTION OF

## Ancient Historical Records.

Vol. II.



EDITED BY

MAHÂMAHOPÂDHYÂYA PAṆḌIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂṆḌURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJI DÂDÂJI'S "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1897.



*Price* 1½ *Rupee*.

काव्यमाला. ६४.

# प्राचीनलेखमाला।

(द्वितीयो भागः।)

लवपुरओरिएण्टलकॉलेजमुख्याध्यापकेन
महामहोपाध्यायपण्डितशिवदत्तेन,
परबोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधिता।

सा च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीता।

१८९७



मूल्यं १॥ रूप्यकः।

# प्राचीनलेखमालाया अनुक्रमणी।

# प्राचीनलेखमाला ।

## ( ६३ )

### विजयनगरमहाराजवंशीयस्य कर्नाटक-द्वितीय-रङ्गस्य दानपत्रम् ।

श्रीवेङ्कटेशाय नमः ।

यस्य संपर्कपुण्येन नारीरत्नमभूच्छिला ।
यदुपास्यं सुमनसां तद्वस्तुद्वन्द्वमाश्रये ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शताः ।
विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये ॥
जयति क्षीरजलधेर्जातं सव्येक्षणं हरेः ।
आलम्बनं चकोराणाममरायुष्करं महः ॥

पौत्रस्तस्य पुरूरवा बुधसुतस्तस्यायुरस्यात्मजः
संजज्ञे नहुषो ययातिरभवत्तस्माच्च पूरुस्ततः ।
तद्वंशे भरतो बभूव नृपतिस्तत्संततौ शंतनु-
स्तत्तुर्यो विजयोऽभिमन्युरुदभूत्तस्मात्परीक्षित्ततः ॥
नन्दस्तस्याष्टमोऽभूत्समजनि नवमस्तस्य राज्ञश्चलिक्क-
क्ष्मापस्तत्ससमः श्रीपतिरुचिरभवद्राजपूर्वो नरेन्द्रः ।
तस्यासीद्विज्जलेन्द्रो दशम इह नृपो वीरहेमालिराय-
स्तार्तीयीको मुरारौ कृतनतिरुदभूत्तस्य मायापुरीशः ॥
तत्तुर्योऽजनि तातपिन्नमहीपालो निजालोकन-
त्रस्तामित्रगणस्ततोऽजनि हरन्दुर्गाणि सप्ताहितात् ।
अह्नैकेन स सोमिदेवनृपतिस्तस्यैव जज्ञे सुतो
वीरो राघवदेवराडिति ततः श्रीपिन्नमोऽभून्नृपः ॥

आरवीटिनगरीविभोर[भू]त्तस्य बुक्कधरणीपतिः सुतः ।
येन सालुवनृसिंहराज्यमभ्येधमानमहसा स्थिरीकृतम् ॥

स्वःकामिनीः स्वतनुकान्तिभिराक्षिपन्तीं
बुक्कावनीपतिलको बुधकल्पशाखी ।
कल्याणिनीं कमलनाभ इवाब्धिकन्यां
बल्लाम्बिकामुदवहद्बहुमान्यशीलाम् ॥

सुतेव कलशाम्बुधेः सुरभिलाशुगं माधवा-
त्कुमारमिव शंकरात्कुमहीभृतः कन्यका ।
जयन्तममरप्रभोरपि शचीव बुक्काधिपा-
च्छ्रुतं जगति वल्लभालभत रामराजं सुतम् ॥

श्रीरामराजक्षितिपस्य तस्य चिन्तामणीरर्थिकदम्बकानाम् ।
लक्ष्मीरिवाम्भोरुहलोचनस्य लक्काम्बिकामुष्य महिष्यलासीत् ॥

तस्याधिकैः समभवत्तनयस्तपोभिः
श्रीरङ्गराजनृपतिः शशिवंशदीपः ।
आसन्समुल्लसति धामनि यस्य चित्रं
नेत्राणि वैरिसुहृशां च निरञ्जनानि ॥

सतीं तिरुमलाम्बिकां चरितलीलयारुन्धती-
प्रथामपि तितिक्षया वसुमतीयशो रुन्धतीम् ।
हिमांशुरिव रोहिणीं हृदयहारिणीं सद्गुणै-
रमोदत सधर्मिणीमयमवाप्य वीराग्रणीः ॥

रचितनयविचारं रामराजं च धीरं
वरतिरुमलरायं वेङ्कटाद्रिक्षितीशम् ।
अजनयत स एतानानुपूर्व्यात्कुमारा-
निह तिरुमलदेव्यामेव राजा महौजाः ॥

सकलभुवनकण्टकानरातीन्समिति निहत्य स रामराजधीरः(वीरः) ।
भरतमनु भगीरथादिराजप्रथितयशाः प्रशशास चक्रमुर्व्याः ॥

व्यराजत श्रीवरवेङ्कटाद्रिराजः क्षितौ लक्ष्मणचारुमूर्तिः।
ज्याघोषदूरीकृतमेघनादः कुर्वन्सुमित्राशयहर्षपोषम् ॥

त्रिषु श्रीरङ्गक्ष्मापरिवृढकुमारेष्वधरिणं
विजित्यारिक्ष्मापांक्तिरुमलमहाराजनृपतिः।
महौजाः साम्राज्ये सुमतिरभिषिक्तो निरुपमे
प्रशास्त्युर्वीं सर्वामपि तिसृषु मूर्तिष्विव हरिः ॥

यशस्विनामग्रसरस्य यस्य पट्टाभिषेके सति पार्थिवेन्दोः।
दानाम्बुपूरैरभिषिच्यमाना देवीपदं भूमिरियं दधाति ॥

सामादयो विधिमुखादिव सत्यवाचः
सामाद्युपायनिवहा इव सांयुगीनात्।
रामादयो दशरथादिव राजमौले-
स्तस्मादमेययशसस्तनया बभूवुः ॥

राजा ततोऽभूद्रघुनाथनामा श्रीरङ्गराजः श्रितपारिजातः।
श्रीरामराजः शिशिरांशुरुर्व्यां विख्यातिमान्वेङ्कटदेवरायः ॥

श्रीरङ्गरायः सहजेषु तेषु पारंगतो नीतिपयःपयोधेः।
अष्टासु दिक्षु प्रथितस्य लेभे पट्टाभिषेकं पे(पि)नुगोण्डराज्ये ॥

अथ श्रीवेङ्कटपतिदेवरायो नयोज्ज्वलः।
अवनीमशिषत्कीर्त्या दिशो दश विशोभयन् ॥

तज्ज्यायसः सुरद्रुमलज्जावहचरितरामराजविभोः।
जातस्तिरुमलराजः ख्यातः श्रीरङ्गराजोऽपि ॥

[ततः] श्रीरङ्गरायस्य तनया विनयाधिकाः।
अजायन्त दयावन्तः श्रुतवन्तो यशस्विनः ॥

श्रीरङ्गरायनृपतेस्तनयेषु तेषु
पारं गिरामधिगतः कविपुंगवानाम्।
रत्नेषु कौस्तुभ इवाम्बुधिसंभवेषु
श्रीरामरायनृपतिः सुचिरं व्यलासीत् ॥

पूर्वं विश्रुतरामराजनृपतेः श्रीरामभद्राकृतेः
कल्याणोदयशालिनस्तनुभवाः पञ्च प्रपञ्चावने ।
दक्षा नीतिपथानुगाः समभवन्क्षीरापगाकामिनो
गीर्वाणालयभूरुहा इव बुधश्रेणीष्टदानोत्सुकाः ॥

विख्यातचर्येषु नृपेषु तेषु श्रीरङ्गराजः शिशिरांशुरुर्व्याः ।
विश्वत्रये विश्रुतकीर्तिरासीत्सौरेषु शालेष्विव पारिजातः ॥

श्रीरङ्गराजस्य तपोविशेषैः संतोषिणः शेषगिरीश्वरस्य ।
कारुण्यभूम्ना कमनीयशोभौ पुत्रावभूतां पुरुहूतभोगौ ॥

पे(पि)दवेङ्कटेन्द्रपिनवेङ्कटाधिराडिति नामकौ प्रकृतिपालनोत्सुकौ ।
खरदूषणप्रहृतिदक्षिणावुभौ ददतः प्रमोदमिव रामलक्ष्मणौ ॥

श्रीशाली पे(पि)दवेङ्कटेन्द्रनृपतिर्ज्येष्ठो वयोभिस्तयोः
शौर्यौदार्यगभीरताधृतिकलापूर्वैश्च सर्वैर्गुणैः ।
यस्यारातिनृपालभेदनकलायात्रासु सेनारजः-
पूरैर्भूर्जलधिर्भवेदिति हरि[श्चिन्तेति] धत्ते [स्थितौ] ॥

श्रीरङ्गराजेन्द्रकुमारकेऽस्मिन्वीरोत्तमे वेङ्कटदेवराये ।
पट्टाभिषेके पे(पि)नुगोण्डराज्ये तदाभिषिक्ताः सुधियोऽपि हेम्ना ॥

ख्यातस्तस्य पितामहानुजतया श्रीवेङ्कटाद्रिक्षमा-
पालश्रीललनास्वयंवृतपतेर्जातानुकम्पास्पदम् ।
आसीदुद्धतशत्रुगन्धकरटिप्रध्वंसबद्धव्रतो(ते)
हर्यक्षः कविलोकरक्षणकलाप्रत्यग्रभोजाकृतिः ॥

तस्य श्रीरङ्गपति[ः] क्षोणीपतिरात्मभूर्गुणाब्धिरभूत् ।
यस्यौदार्यमहिम्ना कल्पतरुः क्वापि नन्दने वसति ॥

राज्ञस्तस्य गुणाद्भुतस्य सुकृतैः प्राचीनजन्मार्जितैः
पुत्रोऽभूत्पुरुहूतकल्पमहिमा गोपालराजाग्रणीः ।

---

१. 'कल्पद्रुमाणामिव पारिजातः' इति रघुः. २. 'श्चित्तेश्च' मुद्रितपाठः. ३. 'स्थितिम्' मुद्रितपाठः.

सर्वेषां विदुषां समीहितफलं दत्वा जगत्यां स्वयं
　　यो विस्मारयति स्म दानचतुरान्भोजादिकान्पार्थिवान् ॥

[1]सोऽयं प्रियासहचरः सुकृती तपोभि-
　　राराधयद्वेङ्कटशैलनाथम् ।
प्रीतस्तदानीमगदीदभीष्ट-
　　दायी स देवः कृपया तमेनम् ॥

पुत्रः सन्धरणीमवाप मधुना श्रीरङ्गरायाभिधो
　　विख्यातश्चि(ःपि)न वेङ्कटेन्द्रनृपतेरुग्रैस्तपोवैभवैः ।
पूर्वं श्रीवसुदेवभूर्बलरिपोः कृष्णाभिधोऽयं यथा
　　नन्दः प्रागिव तं सुतं कलयतां श्रीरङ्गरायाभिधम् ॥

श्रीरङ्गेश्वरदत्तराज्यमहिमा श्रीरङ्गरायाग्रणी-
　　पादाम्भोजविनम्रभोजमगधक्ष्मापार्पितप्राभृतः ।
सर्वेषां पृथिवीभुजामधिशिरोविन्यस्तपादाम्बुजः
　　पृथ्वीं पालयते नयेन महता सप्तार्णवीमेखलाम् ॥

वाराशिगाम्भीर्यविशेषधुर्यचौराशिदुर्गैकविभालवर्यः ।
पराष्टदिग्रायमनःप्रकामभयंकरः शार्ङ्गधरान्तरङ्गः ॥
सारवीर रमया समुल्लसन्नारवीटिपुरहारनायकः ।
कुण्डलीश्वरमहाभुज[ः] श्रयन्मण्डलीकधरणीवराहताम् ॥

　　आत्रेयगोत्रजानामग्रसरो भूभुजामुदारयशाः ।
　　[2]............................................................ ॥

सोऽयं नीतिजिताद्रिभूपतिततिः सुत्रामशास्त्री सुधी-
　　सार्थानां भुजतेजसा स्ववशयन्कर्णाटसिंहासनम् ।
आ सेतोरपि चाहिमाद्रि विमतान्संहृत्य शासन्मुदा ।
　　सर्वोर्वीं प्रचकास्ति सिन्धुपरिघां श्रीरङ्गरायाग्रणीः ॥

---

१. अस्मिन्वृत्ते प्रथमः पादो वसन्ततिलकात्मकः, अवशिष्टा इन्द्रावज्रात्मकाः.
२. आदर्शे त्रुटिचिह्नं नास्ति.

रसर्तुबाणचन्द्राख्यगणिते शकवत्सरे ।
तारुण्याख्ये महावर्षे मासि फाल्गुणनामके ॥
पक्षे वलक्षे पुण्यर्क्षे द्वादश्यां च महातिथौ ।
श्रीवेङ्कटेशपादाब्जसंनिधौ श्रेयसां निधौ ।
कौण्डिन्यगोत्रजाताय वरापस्तम्बसूत्रिणे ॥
यजुःशाखावतामग्र्ययायिनेऽभीष्टदायिने ।
मिष्टान्नदानसंतुष्टशिष्टाचारद्विजन्मने ॥
मागण्टिभमहाराजपौत्रायातियशस्विने ।
यल्लमराजपुत्राय कौण्डण्याख्याय धीमते ॥
कान्तं तिरुवदिराज्ये वलुदलंवड्डुचावडौ (?) ।
ययल्वानर्सूरिसीमायां पादूरिप्पत्तुविश्रुतम् (?) ॥
श्रीआर्यानेत्तग्रामस्य प्राचीं दिशमुपाश्रितम् ।
कूटडिग्रामरत्नस्य दक्षिणस्यां दिशि स्थितम् ॥
प्रख्यातमट्टे ग्रामस्य पश्चिमाशामुपाश्रितम् ।
वालत्ताळे महाग्रामस्योत्तरस्यां दिशि स्थितम् ॥
प्रख्यातचिन्नमःशेट्टिसमुद्रप्रतिनामकम् ।
कल्लकुर्शिमहाग्रामं सर्वमस्योपशोभितम् ॥
सर्वमान्यं चतुःसीमासहितं च समन्ततः ।
निधिनिक्षेपपाषाणसिद्धसाध्यजलान्वितम् ॥
अक्षिण्यागामिसंयुक्तं गणभोज्यं सभूरुहम् ।
वापीकूपतटाकैश्च कच्छारामैश्च संयुतम् ॥
पुत्रपौत्रादिभिर्भोज्यं क्रमादाचन्द्रतारकम् ।
दानादमनविक्रीतियोग्यं विनिमयोचितम् ॥
परीतः प्रयतैः स्निग्धैः पुरोहितपुरोगमैः ।
विविधैर्विबुधैः श्रौतपथिकैरधिकैर्गिरा ॥
श्रीरङ्गरायभूपालो माननीयो मनस्विनाम् ।
सहिरण्यपयोधारापूर्वगं दत्तवान्मुदा ॥

वीरश्रीरङ्गरायक्षितिपतिवर्यस्य कीर्तिधुर्यस्य ।
शासनमिदं सुधीजनकुवलयचन्द्रस्य भूमहेन्द्रस्य ॥
वीरश्रीरङ्गरायोक्त्या प्राह पौत्रः सभापतिः ।
कामकोटिसुतो रामकविशासनवाङ्मयम् ॥
वीरश्रीरङ्गरायक्ष्मापतिदेशेन सोमनाथार्यः ।
शासनमलिखत्कामयतनयः श्रीगणपर्यायपौत्रमणिः ॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम् ।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम् ॥
स्वदत्ताद्द्विगुणं पुण्यं परदत्तानुपालनम् ।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
एकैव भगिनी लोके सर्वेषामेव भूभुजाम् ।
न भोज्या न करग्राह्या विप्रदत्ता वसुंधरा ॥
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामचन्द्रः ॥

(इण्डियन् आण्टिक्वेरी १३।१५६–१६०)

# (६४)

## कोटप्रान्तोपलब्धमहाराजशिवगणकारित-शिवमन्दिरप्रशस्तिः ।

ॐ नमः शिवाय ।

नमः सकलसंसारसागरोत्तारहेतवे ।
तमोगर्ताभिसंपातहस्तालम्बाय शंभवे ॥
श्वेतद्वीपानुकाराः क्वचिदपरमितैरिन्दुपादैः पतद्भि-
र्नित्यस्थैः सान्धकाराः क्वचिदपि निभृतैः फाणियैर्भोगभागैः ।

सोष्माणो नेत्रभाभिः क्वचिदतिशिशिरा जह्नुकन्याजलौघै-
रित्थंभावैर्विरुद्धैरपि जनितमुदः पान्तु शंभोर्जटा वः ॥
भोगीन्द्रस्य फणामणिद्युतिमिलन्मौलीन्दुलोलांशवो
नेत्राग्निच्छुरिभस्मधूमकपिशैर्ज्वालाशिखाग्रैः क्वचित् ।
मुक्ताकारमरुन्नदीजलकणैराकीर्णशोभाः क्वचि-
च्चेत्थं शाश्वतभूषणव्यतिकराः शंभोर्जटाः पान्तु वः ॥
स्थाणोर्वः पातु मूर्धा सर इव सततव्योमगङ्गाम्बुलोल-
स्फूर्जद्भोगीन्द्रपङ्कश्लथविकटजटाजूटकह्लारहारी ।
मन्दं यत्र स्फुरन्त्यो धवलनरशिरोवारिजन्मान्तराले
स्पष्टः प्रोद्यन्मृणालाङ्कुरनिकर इवाभान्ति मौलीन्दुभासः ।
नेत्रक्रोडप्रसक्तोज्ज्वलदहनशिखा[पिङ्ग]भासां जटानां
भारं संयम्य कृत्वा सममममृतकरोद्भासि मौलीन्दुबिम्बम् ।
हस्ताभ्यामूर्ध्वमुद्यद्विषशिखिवदनग्रन्थिमातत्य नागं
स्थाणुः प्रारब्धनृत्तो जगदवतु लयोत्कम्पिपादाङ्गुलीकः ॥

चूडाचारुमणीन्दुमण्डितभुवः सद्भोगिनामाश्रयः
पक्षच्छेदभयार्तिसंकटवतां रक्षाक्षमो भूभृताम् ।
दूराभ्यागतवाहिनीपरिकरो रत्न[प्रकाशो]ज्ज्वलः
श्रीमानित्थमुदारसागरसमो मौर्यान्वयो दृश्यते ॥
दिङ्नागा इव जात्यसंभृतमुदो दानोज्ज्वलैराननै-
र्विस्रम्भेण रमन्त्यभीतमनसो मानोद्धुराः सर्वतः ।
सद्वंशत्ववशप्रसिद्धयशसो यस्मिन्प्रसिद्धा गुणैः
श्लाघ्या भद्रतया च सत्त्वबहुलाः पक्षैः समं भूभृतः ॥

इत्थं भवत्सु भूपेषु भुञ्जत्सु सकलां महीम् ।
धवलात्मा नृपस्तत्र यशसा धवलोऽभवत् ॥

---

१. पादादौ चकारोऽनुचितः. २. 'प्रिय' इति मुद्रितः पाठः. ३. 'तरः' इति साधीयान्पाठः. ४. '–प्रकार–' इति मुद्रितः पाठः.

कायादिप्रकटार्जितैरहरहः स्वैरेव दोषैः सदा
निर्वस्त्राः सततक्षु[धः] प्रतिदिनं स्पष्टीभवद्यातनाः।
रात्रीसंचरणा भृशं परगृहेष्वित्थं विजित्यारयो
येनाद्यापि विकीर्णतां सुविपदो नीताः पिशाचा इव॥
कोपालूनमहेभकुम्भविगलन्मुक्ताफलालंकृत-
स्फीतास्रस्रुतिमण्डिता अपि मुहुर्येनोर्जितेन स्वयम्।
उन्नालैरिव पङ्कजैः पुनरपि च्छिन्नैः शिरोभिर्द्विषां
विक्रान्तेन विभूषिता रणभुवस्त्यक्ता नरैः कातरैः॥
इत्थं तस्य चिरंतनो द्विजवरः सद्वीर्यसत्तायुध-
प्रीतिप्रोतनरेन्द्रसत्कृतिमुदः पात्रं प्रसिद्धो गुणैः।
यस्याद्यापि रणाङ्गणे विलसितं संसूचयन्ति द्विष-
च्छुप्यच्छोणितमर्मरा रणभुवः प्रेतप्रियाः प्रायशः॥
शब्दस्यार्थ इव प्रह्लादनपटोर्मार्गस्त्रयीसंज्ञितो
धर्मः सेव्यविशुद्धभावसरलो न्यायस्य मूलं सतः।
प्रामाण्यं प्रगतस्य··········यः साध्यस्य संसिद्धये
तस्याभू[दति]संयतः पृथुमखः श्रीसं(श)ङ्ककाख्यो नृपः॥
द्रेङ्गिणी नाम तस्यासीद्धर्मपत्नी द्विजोद्भवा।
तस्यां तस्याभवद्वीरः सूनुः कृतगुणाकरः॥
यशस्वी रूपवान्दाता श्रीमाञ्शिवगणो नृपः।
शिवस्य नूनं स गणो येन तद्भक्ततां गतः॥
खड्गाघातदलत्तनुत्रविचटद्वह्निस्फुलिङ्गोज्ज्वल-
ज्वालादग्धकबन्धकण्ठकुहरप्रोन्मुक्तदानोल्बणे।
नाराचैर्मथिताननाकुलखगप्रोद्भ्रान्तरक्तासव-
प्रीतप्रेतजनो रणे रतधिया येनासकृच्चर्चितः॥
ज्ञात्वा जन्मजरावियोगमरणक्लेशैरशेषैश्चितं
स्वार्थस्याप्ययमेव योग उचितो लोके प्रसिद्धः सताम्।

१. 'प्रेत' इति मुद्रितः पाठः. २. '–आसवम्' इति मुद्रितः पाठः.

तेनेदं परमेश्वरस्य भवनं धर्मात्मना कारितं
यद्दृष्ट्वैव समस्तलोकवपुषां नष्टं कलेः कल्मषम् ॥
पुष्पाशोकसमीरणेन सुरभावुत्फुल्लचूताङ्कुरे
[काले] मत्तविलोलषट्पदकुलैर्व्यारुद्धदिङ्मण्डले।
जातेऽपाङ्गनिरीक्षणैककथके नारीजनस्य स्मरे
क्लृप्तं सद्भवनं भवस्य सुधिया तेनेह कण्वाश्रमे॥
काले दोलाकुलानां तनुवलनभरात्प्रस्फुटत्कञ्चुकानां
कान्तानां दृश्यमानैः कुचकलशभुजा[व्यक्त]संभोगचिह्नैः।
यस्मि[न्प्रिया] (?) मुख्यस्थितिझटितिनमत्सस्मितार्धेक्षणानां
भ्रूभङ्गैरेव रम्यैर्हृदयविनिहितः सूच्यते प्रेमबन्धः॥
मत्तद्विरेफझंकारिसहकारविराजिताः।
संवीक्ष्य ककुभो बाष्पं मुञ्चन्ति पथिकाङ्गनाः॥
धूपादिगन्धदीपार्थं खण्डस्फुटितहेतुना(तवे)।
ग्रामौ दत्तौ क्षयो निमिः (?) सर्वाङ्काञ्चोणिपद्रकौ॥
पालयन्तु नृपाः सर्वे येषां भूमिरियं भवेत्।
एवं कृते ते धर्मार्थं नूनं यान्ति शिवालयम्॥
संसारसागरं घोरमनेन धर्मसेतुना।
तारयिष्यत्यसौ नूनं जन्यो चात्मानमेव च॥
यावत्ससागरां पृथ्वीं सनगां च सकाननाम्।
यावदिन्दुस्तपेद्भानुस्तावत्कीर्तिर्भविष्यति॥
संवत्सरशतैर्यातैः सपञ्चनवत्यर्गलैः।
सप्तभिर्मालवेशानां मन्दिरं धूर्जटेः कृतम्॥
अलुब्धः प्रियवादी च शिवभक्तिरतः सदा।
कारापकः शब्दगुणो धार्मिकः शंसितव्रतः॥
दक्षः प्राज्ञो विधिनीतात्मा शूरभक्तः प्रियंवदः।
तृप्तोऽत्र दुं.पुकश्चास्मि (?) कायस्थो गोमिकाङ्गजः॥

१. '–भुजां भोजिका–' इति मुद्रितः पाठः.

उत्कीर्णं शिवनागेन द्वार(रे) शिवस्य सूनुना ।
सूनुना भट्टसुरभेर्देवट्टेन श्रुतोज्ज्वलाः ॥
श्लोका अमी कृता भक्त्या मौलिचन्द्रसुधाजुषः ।
कृष्णसुतो गुणाढ्यश्च सूत्रधारोऽत्र णण्णकः ॥
एतत्कण्वाश्रमं ज्ञात्वा सर्वपापहरं शुभम् ।
कृतं हि मन्दिरं शंभोर्धर्मकीर्तिविवर्धनम् ॥
यतिहीनं शब्दहीनं मात्राहीनं तु यद्भवेत् ।
तत्सर्वं साधु चित्तेन मर्षणीयं बुधैः सदा ॥

(इण्डियन् आण्टिक्वेरी १३।१६३-१६५)

---

# (६५)

## शिवमन्दिरप्रशस्तिः ।

ॐ नमः शिवाय ।

सोमः सोमपवित्रिताधरदलैः संस्तूयते यो द्विजैः
　सौम्यैः सामसमूहसङ्गविमलैः सोमार्चित[ः] सामगैः ।
कैलासे कलकोकिलालिबहुले देवैश्च दैत्यादिभिः
　सोऽव्यात्सोमसुधावपुर्भुवि भवो भावान्वितान्भक्तिदः ॥
योगी योगिवरैरगे गणगणैर्यक्षैश्च यक्षालये
　सिद्धैः सिद्धिबलैरलं सुखनिधिर्लोके च लोकाधिपैः ।
विद्यापादविलेपनादिविभवैर्विद्याधरैः सादरं
　पूज्यो यः सततं समाधिकुसुमैर्भावोज्ज्वलैः सोऽवतात् ॥
त्यक्त्वामात्यनृपे कलावपि सुधीः सत्त्वोज्झितप्राणिनि
　सत्योपेतगुणाकरो नययुतस्त्यागी क्षमी योगवित् ।
शूर[ः] क्रूरजनं प्रति क्रमवशाच्छ्रीपुण्ययुक्तं कुलं
　त्यक्त्वासौ धनसंपदोऽवकुलजः श्रीयोगचर्यां गतः ॥

तेनेदं सुसमाहितेन मनसा संरक्षणायापदां
शंभोश्चारुसु(शु)भैरकारि भवनं षाषाणकूटैरिदम् ।
आस्ते यत्र झरेश्वरः सह गणैः शंभुर्विभूर्भूतिद-
स्तीर्थान्यत्र समाहितान्यवितथं श्रीपुष्करादीन्यपि ॥
[1]यं दृष्ट्वापि कथाप्रपञ्चरचनान्नामादिसंकीर्तना-
त्संपर्काद्यदि कौतुकाद्भुवि जनः कुर्यादथाराधनम् ॥
त्यक्त्वा पापमशेषमुग्रभयदं पापैः समापूर्यते ॥
संवत् ७८३ चैत्रे सुदि ५ पञ्चम्यां निवनमिह

(इण्डियन् आण्टिक्वेरी १३।२५०-२५१)

## ( ६६ )

### यादव–सेउणचन्द्रनृपतेर्दानपत्रम् ।

ॐ स्वस्ति जयोऽभ्युदयश्च ।

त्रैलोक्येशः सृजति भगवाँल्लब्धमाहात्म्यतेजा-
श्चित्ताराध्यः परमतपसां योगिनां ध्यायतां यः ।
अप्रत्यक्षं भवति विबुधानामपि प्रायशोऽसौ
देवः सोऽयं यदुपतिपतेः शंकरः शंकरो नु ॥
आदौ ख्यातदृढप्रहारनृपतिः श्रीविष्णुरूपः स हि
त्वायातो निजवंशशेखरतनुर्द्वारावतीपत्तनात् ।
संग्रामे रिपुहस्तिपत्तिशिरसां संच्छेदभेदे दृढ-
श्चन्द्रादित्यपुरं प्रसिद्धमकरोत्प्राक्संभवं यो भुवि ॥
श्रीमत्सेउणचन्द्रनामनृवरस्तस्मादभूद्भूमिपो
नित्यं देशे[2]········पदातिविषये सन्नाम संपादयन् ।
येनाकारि पुरं च सेउणपुरं श्रीसिन्दिनेरे वरे
तत्पुत्रः कुलदीपको गुणनिधिः श्रीढ्राडियप्पस्ततः ॥

---

१. पादत्रयमेव लब्धम्. २. त्रुटिचिह्नमादर्शपुस्तके नास्ति.

आसीत्सत्तदशेषभूतलशशी श्रीमान्बृहद्भिल्लिमः
श्रीराजस्तदनन्तरं [illegible]पतिर्[illegible]लो महीमण्डनः(म्) ।
अर्वाक्तस्य बभूव भूतलहरिः श्रीवद्दिगाख्यो नृप-
स्तस्माच्छ्रीवरभिल्लमक्षितिपतेः मत्यक्षधर्माभवत् ॥
भार्या यस्य च झज्झराजतनया श्रीलस्थियन्त्राह्वया
धर्मत्यागविवेकबुद्धिसुगुणा श्रीराष्ट्रकूटान्वया ।
याजातानवबालनाजसमये यदन्वया(यद्वंशजा) धारिता
सप्ताङ्गोद्यतराज्यभारधरणाद्राज्यत्रयाध्यार्ततः ॥
चालुक्यान्वयमण्डलीकतिलकाच्छ्रीगोगिराजाकरा-
दुत्पन्ना दुहितात्रयाद्गुणवती धाम्ना कुलद्योतिता(का) ।
स्त्रीरत्नं बत वेधसा प्रकटितं सामन्तरत्नाशया(?)
श्रीनाइ(ई)यलदेविनामसुभगा श्रीपट्टराज्ञी सदा ॥
श्रीतेसूकमहीपतिः समभवद्यस्याङ्कश्लिष्टा(?) ततः
श्री[मद्]भिल्लमधराधरः(भूपतिः) समुदितः श्रीमण्डलीकाख्यया ।
त्रैलोक्यं निजवंशकीर्ति[कैलया] संभूषयन्यादवो
दक्षो दुष्कृतिमर्दनस्य चरणौ संपूजयन्भूतले ॥
दोर्दण्डप्रबलासिघातनिहतः संग्रामरामेण [भू-]
शक्रः श्वाहवमल्लदेवनृपते प्रौढाङ्ककारेण हि ।
शश्वल्लब्धसुचक्रवर्तिपदकालंकारिणा राजसु
संसारस्थिति[कारकेण] गुणिना तेनोद्भवद्धर्मिणा ॥
यस्यार्धाङ्गनिषक्तसुन्दरतनुः प्रत्यक्षलक्ष्मीगुणा
हाम्मा श्रीजयसिंहदेवदुहिता श्रीअव्वल(ल्)देवी सती ।
या चात्राहवमल्लदेवभगिनी चालुक्यवंशान्वया(शोद्भवा)
श्रेष्ठा कायविशेषकारणपदे सद्धर्मपत्नी क्षितौ ॥

---

१. 'लस्थि अव्वा' 'लच्छि अव्वा' इति शोधितः पाठः. २. 'निर्मलतया' इत्यादर्शस्थपाठे छन्दोभङ्गः, वा 'कीर्ति'शब्दनिष्काशने 'निजवंशनिर्मलतया' इति पाठः. ३. 'मातङ्केन' इति मुद्रितः पाठः.

तद्वंशोद्भवसेउणेन्दुनृपतिर्जातोऽत्र धर्माधिकः
सर्वान्भूवलयाश्रितान्क्षितिपतीन्निर्जित्य शौर्यासिना।
राज्यं येन समुद्धृतं सतिलकं स्वर्गं गते भिल्लमे
यद्वत्सूकररूपसाम्यहरिणा लोकत्रयं चोद्धृतम् ॥

गोत्रान्वये यमनियमस्वाध्यायध्यानानुष्ठानरतपरमशैवश्रीसोमदेवाचार्याः, तस्य (तेषां) शिष्याः परमगुरुभक्तिसंपन्ना अनेकशिवागमतत्त्वज्ञाः शब्दशास्त्रविशारदा दीक्षापरीक्षादानसमर्थाः श्रीमत्सर्वदेवाचार्या राजगुरवः तेभ्यः शकसंवत् एकनवत्यधिकनवशतेषु संवत् ९९१ सौम्यसंवत्सरीयश्रावणसुदि चतुर्दश्यां गुरुदिने राजगुरोर्भणित्व(?) (गुरुनिमित्त) दक्षिणायां पादप्रक्षालनार्घ्यादिकं कृत्वा श्रीसेउणचन्द्रमहामण्डलेश्वरेण अतिभक्तितत्परेण महाप्रचण्डदण्डनायक[:] श्रीधर। महामात्यश्रीवासुदेवैय। महाप्रधाननायकश्रीभभियाक। संधिविग्रहिश्रीनायक। पातलकरणीश्रीमरवैयानायक। राजाध्यक्षश्रीआपैयाक। महत्तमश्री आमादित्यो मौलिकृतहस्तद्वयेन सह सद्भिर्धर्मार्थप्रेरकैः सततं सकलपरिग्रहविदितं सिंहिग्रामद्वादस(श)के चिञ्चुलिग्रामः प्रदत्तः। तस्य च आघाटनानि पूर्वदिग्भागे डोङ्गरदन्त। आग्नेय्यां डोङ्गरसत्क उत्तरपानीयप्रवाहः। दक्षिणे चिञ्चालानामतडाग। नैर्ऋत्ये वडगम्भाग्राम पूर्वतो डोङ्गरदन्त। पश्चिमे तलठेलीपर्यन्त। वायव्ये तलाडलीच। उत्तरतो(तः) सिसिग्रामीय डोङ्गरदन्ततथा वटवृक्षश्च। ईशान्यां महुयग्रामीयनीगुडीयालानाम तडागं तयसेवै। इत्यष्टसीमोपलक्षितः सवृक्षमालाकुलः स्वसीमापर्यन्तः सकाष्ठतृणोदकः समस्तद्रव्योपायसमन्वितः स्वचक्रपरचक्रोत्थितविदुलादिद्रव्योपक्षयाद्युपद्रवादिविवर्जितः अकरवातोत्तरः सर्वभोगसमन्वितः परिपालनीयः।

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥
मद्वंशजा वा परवंशजा वा ये पुण्यवन्तो मम धर्ममेवम्।
प्रपालयिष्यन्ति नृपास्तु सर्वे कृताञ्जलिः सादरमाह सर्वान् ॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यतुल्यानि भवन्ति तानि को नाम साधुः पुनराददीत॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
गयागोदावरीगङ्गाप्रयागादिषु दानतः।
यत्फलं तत्फलं सर्वं भवेद्भूमिप्रपालनात्॥
परत्र संवलं(मतं) दिव्यं भूमिदानात्परं नहि।
तस्मात्सर्वादरेणापि भूमिदानं प्रपालयेत्॥
रत्नान्नपानगोष्ठ्याद्यं सर्वं भूमौ प्रजायते।
तस्माद्भूमिप्रदानेन नरो भवति सर्वदः॥
देवस्वानि हरन्तीह नरा नरकनिर्भयाः।
ब्रह्मस्वानि तु ये मोहात्पच्यन्ते नरकेषु ते॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
दिव्यं(षष्टिः) वर्षसहस्राणि विष्ठायां जायते क्रिमिः॥
वापीकूपतडागैश्च वाजपेयशतैरपि।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति।
द्वावेतौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ॥
चन्द्रार्कौ च तथा भूमिर्नभस्तापनवानिलः (?)।
तारकाश्चानलश्चैव धर्मराजस्तथैव च॥
तिस्रः संध्यास्त्रयोवेदास्त्रयोदेवास्त्रयोऽग्नयः।
अहोरात्रं च(त्रश्च) दानस्य एते वै साक्षिणः स्मृताः॥
हर्ता देवस्य यो भूमिं ब्राह्मण(स्या)पि यो हरेत्।
स्वदत्तां परदत्तां वा स याति नरकं नरः॥
सर्वं वा भूमिहरणाद्धृतमेव न संशयः।
भूमिहर्ता वसेत्तस्मान्नरके कालमक्षयम्॥

यावत्सूर्यशशाङ्कौ च यावद्भूधरसागराः।
तावत्पुत्रप्रपौत्रेभ्यो ग्रामः पाल्यो नृपोत्तमैः॥

पूर्वलोकैः प्रदत्तं देवब्राह्मणसहितं पालनीयं राज्ञानुतुष्टेन निरन्तरमिति शासनं समाप्तम्। पातलकरणीभरथनायकप्रतिहस्तकप्रेकरयेण लिखितम्। स्तंबुसुतः(त)सेकारेयानैयकेन घटितम्। मङ्गलं महाश्री[ः]॥

(इण्डियन् आण्टिक्केरी १२।११९-१२१)

---

# (६७)

## यादव-सेउणदेवनृपतेर्द्वितीयं दानपत्रम्।

ॐ पञ्चपरमेष्ठिभ्यो नमः।

स्वस्ति श्रीशकसंवत् १०६२ दुन्दुभिसंवत्सरान्तर्गतज्येष्ठसुदि पञ्चदश्यां सोमेऽनुराधानक्षत्रे सिद्धयोगेऽस्यां संवत्सरमासपक्षदिवसपूर्वायां तिथौ समधिगताशेषपञ्चमहाशब्दद्वारावतीपुरपरमेश्वरविष्णुवंशोद्भवयादवकुलकमलकलिकाविकासभास्करयादवनारागणसामन्तपितामहसामन्तअमरा इत्यादिसमस्तनिजराजावलीविराजितमहासामन्तश्रीसेउणदेवविजयराज्ये तत्पादप्रसादावाप्तमहामहत्तमप्रतापसंतापितवैरिवर्गः संग्रामशौण्डः शूरवैरिघटाविमर्दनकण्ठीरवोऽनवरतदानार्द्रीकृतदक्षिणकरप्रकोष्ठो निशितनिस्त्रिंशविदारितारातिकरिकुम्भस्थलगलितमुक्ताफलमण्डितरणाङ्गनो मनस्विनीमानोन्मूलनकंदर्पो दर्पाधर्मरहितशौर्यौदार्यदयादाक्षिण्यधर्मगुणसत्वोत्साहमन्त्रशीलसंपन्नः प्रजापालनानन्दशत्रुपराजयानन्दतोषितः कीर्तिप्लावितदिग्वलयोऽनेकराजनीतिशास्त्रोक्तवर्धितबुद्धिकौशलसहस्त्रविज्ञानप्रभुत्वमन्त्रोत्साहशक्तिसामर्थ्यरूपलावण्यविचित्रवक्तव्यताभोगोपभोगराष्ट्रकौशलाद्यनेकविषयगुणगणालंकृतो व्यर्थीकृतपरिपन्थिमनोरथः संग्रामविजयलक्ष्यालानस्तम्भः रत्नाकर इवानन्तगाम्भीर्ययुक्तः हिमाद्रिरिवापरिमितमहिमान्वितः षाड्गुण्य-

---

१. 'प्रपौत्रादिभ्यः' इति मुद्रितः पाठः. २. पक्षे अनन्तो विष्णुः, गाम्भीर्यमगाधता च. ३. वासवदत्ताश्लेषहरणेऽपि पक्षे क्लिष्टोऽर्थः.

संपत्ताविपर्यतानिष्ठः देवद्विजगुरुवराचार्यसाधुपूजाभिरतः दीनानाथोद्धार-णक्षमः रविरिव प्रति दिवसोपचीयमानोदयः परिहासप्राकारः ईदृग्गुणवि-शिष्टश्रीपाणुमडडरीसर्वव्यापारे कुर्वति सतीत्येतस्मिन्काले प्रवर्तमाने श्री-सेउणाख्येन महानृपेण प्रधानयुक्तेन विचार्य भक्त्या देवाय चन्द्रद्युतये दत्तं हट्टद्वयं मारविवर्जितं च । श्रीसाधुवत्सराजेन स्वकुलतिलकभूतेन देवद्विजगुरुवराचार्यपूजाभिरतेन श्रीलाथसाधुना स्वकीयं हट्टदानं कृतं तथा गृहदानं च कृतम् ।

चन्द्र[प्र]भाय देवाय कंदर्पदहनाय च ।
विशुद्धदेहरूपाय सर्वसत्त्वहिताय च ॥

तथा नगरे वर्षं प्रति द्रम्मपञ्चकं कृतम् ।

आयुः पुत्रा धनं सौख्यं सौभाग्यं राज्यमक्षयम् ।
आभिश्रेष्ठ्यं यशः स्वर्गं भूमिदो लभते फलम् ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
दाता चैवानुमन्ता च स्वर्गस्योपरि तिष्ठति ।
हर्ता हारयिता भूमेः पच्यते रौरवे ध्रुवम् ।
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥

श्रीकोल(ले)श्वरपण्डितसुतेन दुष्टगणकगजकण्ठीरवेण साधुगणकचर-णारविन्दमकरन्दलुब्धषट्पदेन श्रीदिवाकरपण्डितेन हट्टशासनमिदं शैल-(शिला)पट्टे लिखितमिति⋯⋯मङ्गलं महाश्री[ः]

(इण्डियन् आण्टिक्वेरी १२।१२७-१२८)

---

## (६८)

### श्रीविजयादित्यमहाराजानां दानपत्रम् ।

स्वस्ति श्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां

---

१. कादम्बरीश्लेषोऽयम्. २. आदर्शे गद्यसंक्रान्तोऽयं श्लोकः.

कौशिकीवरप्रसादलब्धराज्यानां मातृगन(ण)परिपालितानां स्वामिमहासेनपादानुध्यातानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनक्षणक्षणवशीकृतारातिमण्डलानामश्वमेधावभृथस्नानपवित्रीकृतवपुषां चालुक्यानां कुलमलंकरिष्णोः सत्याश्रयवल्लभेन्द्रस्य भ्राता कुब्जविष्णुवर्धनोऽष्टादश वर्षाणि वेङ्गीदेशमपालयत् । तदात्मजो जयसिंहस्त्रयस्त्रिंशतम् । तदनुजेन्द्रराजनन्दनो विष्णुवर्धनो नव । तत्सूनुर्माङ्गियुवराजः पञ्चविंशतिम् । तत्पुत्रो जयसिंहस्त्रयोदश । तदवरजः कक्किलिः षण्मासान् । तस्य ज्येष्ठो भ्राता विष्णुवर्धनस्तमुच्चाट्य सप्तत्रिंशतम् । तत्पुत्रो विजयादित्यभट्टारकोऽष्टादश । तत्सुतो विष्णुवर्धनः सप्तत्रिंशतम् । तत्सुतो विजयादित्यनरेन्द्रमृगराजश्चाष्टचत्वारिंशतम् । तत्सुतः कलिविष्णुवर्धनोऽध्यर्धवर्षम् । तत्सुतो गुणगाङ्कविजयादित्यश्चतुश्चत्वारिंशतम् । तदनुजविक्रमादित्यभूपतेः सूनुश्चालुक्यभीमभूपालस्त्रिंशतम् । तत्पुत्रः कोल्लभिगण्डविजयादित्यः षण्मासान् । तत्सूनुरम्मराजः सप्त वर्षाणि । तत्सुतं विजयादित्यं बालमुच्चाट्य तालपो मासमेकम् । तं जित्वा चालुक्यभीमतनयो विक्रमादित्य एकादश मासान् । ततस्तालपराजस्य सुतो युद्धमल्लः सप्त वर्षाणि । तत्पुत्रः कोल्लभिगण्डविजयादित्यसुतो भीमराजो द्वादश वर्षाणि ।

तस्य महेश्वरमूर्तेरुमासमानाकृतेः कुमारामः ।
लोकमहादेव्याः खलु यः समभवदम्मराजाख्यः ॥
जलजातपत्रचामरकलशाङ्कुशलक्षणाङ्ककरचरणतलः ।
लसदाजान्ववलम्बितभुजयुगपरिघो गिरीन्द्रसानूरस्कः ॥
यो रूपेण मनोजं विभवेन महेन्द्रमहिमकरमुरुमहसा ।
हरमरिपुरदहनेन न्यक्कुर्वन्भाति विदितदिगवनिकीर्तिः ॥

स सकलरिपुनृपतिमुकुटतटघटितमणिगणमधुकरनिकरपरिचुम्बितचरणसरसीरुहयुगलो युगलोचनपदकमलविलसद्द्विरेफायमानो मानोन्नतानतोद्धतसमस्तलोकः समस्तभुवनाश्रयश्रीविजयादित्यमहाराजाधिराजः परमेश्वरः

परमभट्टारकः परमब्राह्मण्यः वेलनान्दुविषयनिवासनो राष्ट्रकूटप्रमुखान्कुटु-
म्बिनः समाहूयेत्थमाज्ञापयति—

विद्वत्कवीन्द्रप्रभवं प्रसिद्धं पूज्योदयं भूरिगुणाधिवासम्।
धर्मिष्ठभूमिर्नियमस्वधाम पात्रं परं काश्यपगोत्रमासीत्॥
तत्र भूसुरयथोचितविद्याकर्मशक्तविधिनिर्मलदेहः।
वेदविद्विदितशास्त्रसमूहो विद्दमय्य इति विश्रुतकीर्तिः॥
भूदेववंशाम्बुधिशीतरश्मिर्विद्वत्सरोजाकरभानुभानुः।
तत्सूनुरम्भोजभवोपमानो विद्यामयो विद्दमयप्रसिद्धः॥
अरुन्धत्या विशिष्टस्य वशिष्टस्योपमामयात्।
पतिव्रतात्मया धर्मपत्न्या यश्चानमव्वया॥
कुलक्रमायातमुदारभावमनन्यदृष्टाश्रुतपूर्वरूपम्।
दव(ध)द्धराधारिवरोपमानस्तयोः सुतः कोरमियाभिधानः॥
श्रीलोकमहादेव्या समवर्ध्यत योऽसदम्बया प्रीत्या।
चातुर्यनागरकयोरावासस्थानमिति मनोहरयोः॥
अपहसति वाग्मिता वाग्वनितां यत्र स्थिता महाचतुरे।
असुजनधरानागरिकजलजभवबहुमुखप्रियं सततम्॥
उत्पद्यते प्रसङ्गात्सुजनतया स्वात्मसहजया यस्य।
विभवः पतिप्रशंस्यश्चित्रमिदं साधुवाद इति॥
रसिकानामतिरसिकश्चतुराणामधिकचतुर एवायम्।
कोरमियनामधेयो विदुषामत्यन्तविज्ञानी॥
सेवितसमस्तभूपतिहृदयस्थितिभाग्गुणोपपन्नोऽमूल्यः।
मुक्ताफलसच्चरितः कोरमियो वस्तुपुरुष इत्युपपन्नम्॥
अनागतज्ञानविवेकिनी धीरनिन्द्यचारित्रपरे हि चेष्टा।
अशेषभोगोपगतं मनश्च अहो महत्कोरमियस्य पुण्यम्॥

तस्मै कूरमियनाम्ने सुवर्णभाण्डागारश्रीकरणमुख्याय। एलवक्रनामग्रामः
सर्वकरपरिहारेणाग्रहारीकृत्योदकपूर्वमुत्तरायणनिमित्तेऽस्माभिर्दत्त इति वि-

दितमस्तु वः। अस्यावधयः—पूर्वतः—गोमट्टभनु सीमा, आग्नेयतः—इग्गूवर्टि सीमा, दक्षिणतः—इंथूरी सीमा, नैर्ऋतिपश्चिमाभ्यां—बेपपरती सीमा, वायव्यतः—तुरीमिण्डी सीमा, उत्तरेशानाभ्यां—अद्वुद्दनूरी सीमा॥ अस्योपरि न केनचिद्बाधा कर्तव्या। यः करोति स पञ्चमहापातको भवति। तथोक्तं व्यासेन—

बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्।
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः॥

आज्ञापतिः **कटकराजः**। **पोटनभट्टः** काव्यम्। **जोन्ताचार्य**लिखितम्॥

(इण्डियन् आण्टिक्वेरी १२।९१-९३)

---

# (६९)

## वलभीवल्लभशासनपत्रम्।

ॐ स्वस्ति वलभीतः प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तप्रहारशतलब्धप्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणीबलावाप्तराज्यश्रियः परममाहेश्वरश्रीभटार्कादव्यवच्छिन्नराजवंशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणताराति चूडारत्नप्रभासंसक्तपादनख(र)श्मिसंहतिः सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दो रूपकान्तिस्थैर्यगा[म्भी]र्यबुद्धिसंपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलप्रत्यर्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः परममाहेश्वरः **श्रीगुहसेनः**, तस्य सुतस्तत्पादनखमयूखसंतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानसंपद्रूपलोभादिवा-

श्रितः सरभसमाभिगामिकै[र्गुणैः] सहजशक्तिशिक्षाविशेषविस्मापिताखिल-धनुर्धरः प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मदायानाम्, अपाकर्ता प्रजोपघातकारिणामुपप्लवानाम्, दर्शयिता श्रीसरस्वत्योरभिवासस्य, संहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसंप्राप्तविमलपार्थिवश्रीः परममाहेश्वरः **श्रीधरसेनः**, तस्य सुतस्तत्पादानुध्यातः सकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डलः समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरांसपीठोदूढगुरुमनोरथभारः सर्वविद्यापरावरविभागाधिगमविमलमतिरपि सर्वतः सुभाषितलवेनापि सुखोपपादनीयपरितोषः समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसुव्यक्तपरमकल्याणस्वभावः खिलीकृतयुगनृपतिपथविशोधनाधिगतोदग्रकीर्तिर्धर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढधर्मादित्यद्वितीयनामा परममाहेश्वरः **श्रीशीलादित्यः**, तस्यानुजस्तत्पादानुध्यातः स्वयमुपेन्द्रगुरुणेव गुरुणात्यादरवता समभिलषणीयामपि राजलक्ष्मीं स्कन्धासक्तां परमभद्र इव धुर्यस्तदाज्ञासंपादनैकरसतयैवोद्वहन्खेदसुखरतिभ्यामनायासितसत्त्वसंपत्तिः प्रभावसंपद्वशीकृतनृपतिशतशिरोरत्नच्छायोपगूढपादपीठोऽपि परावज्ञाभिमानरसानालिङ्गितमनोवृत्तिः प्रणतिमेकां परित्यज्य प्रख्यातपौरुषाभिमानैरप्यरातिभिरनासादितप्रतिक्रियोपायः कृतनिखिलभुवनामोदविमलगुणसंहतिः प्रसभविघटितसकलकलिविलसितगतिर्नीचजनाधिरोहिभिरशेषैर्दोषैरनामृष्टात्युन्नतहृदयः प्रख्यातपौरुषास्त्रकौशलातिशयगणतिथविपक्षक्षितिपतिलक्ष्मीस्वयंग्रहप्रकाशितप्रवीरपुरुषप्रथमसंख्याधिगमः परममाहेश्वरः **श्रीखरग्रहः**, तस्य तनयस्तत्पादानुध्यातः सकलविद्याधिगमविहितनिखिलविद्वज्जनमनःपरितोषातिशयः सत्त्वसंपदा त्यागौदार्येण च विगतानुसंधानाशमाहितारातिपक्षमनोरथाक्षभङ्गः सम्यगुपलक्षितानेकशास्त्रकलालोकचरितगह्वरविभागोऽपि परमभद्रप्रकृतिरकृत्रिमप्रश्रयविनयशोभाविभूषणः समरशतजयपताकाहरण[प्रत्य]लो(?)दग्रबाहुदण्डविध्वंसितनिखिल— (अग्रे त्रुटितम्)

(इण्डियन् आण्टिक्वेरी १२।१४८—४९)

---

## (७०)

## श्रीजाइकदेवानां दानपत्रम् ।

ॐ स्वस्ति विक्रमसंवत्सरशतेषु सप्तसु चतुर्नवत्यधिकेष्वङ्कतः ७९४ कार्तिकमासापरपरपक्षेऽमावास्यायामादित्यवारे ज्येष्ठानक्षत्रे रविग्रहणपर्वणि—अस्यां संवत्सरमासपक्षदिवसपूर्वायां तिथावद्येह भूमिलिकायां सौराष्ट्रमण्डलाधिपतिः परमभट्टारकमहाराजाधिराजपरमेश्वरः श्रीजाइकदेवो महामात्यमट्टनारायणधर्मसहायानुमतेन संसारस्यानित्यतां ज्ञात्वात्मधर्मयशोभिवृद्धये रवेरुपरागसमये धर्मकालमपेच्छय(क्ष्य) चतुर्वेदविदे···· संतानाय मुन्त(द्र)लगोत्राय त्रिप्रवरायेश्वरनाम्ने ब्राह्मणाय तद्धेनिकानाम ग्रामं सतृणकाष्ठजलं सवृक्षमालाकुलं देवदायवर्जमुदकपूर्वं भूमिलिकामण्डलमध्ये दत्तवान् । इदानीं कालान्तरमुक्तिनिश्चयकरणार्थमस्य ग्रामस्य चतुर्दिशमाघाटा लिख्यन्ते—उत्तरभागे सामापखे(क्षे)त्रे समुद्रः, पूर्वभागे सवनगरुजा नालिका रोहरधारासमेता, दक्षिणभागे सयलाशातकान्तगरिचा नदी यावत् । पश्चिमभागे पर्वतस्य धारा समुद्रगामिनी । एवं चतुर्घाटाविशुद्धां तद्धनिकाग्रामभूमिमीश्वरनामा ब्राह्मणो भुञ्जन्भोज[य]न्वा न केनापि परिपन्थनीयः ।

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
मयि राज्ञि व्यतिक्रान्ते योऽन्यो राजा भविष्यति ।
तस्याहं करलग्नोऽस्मि शासनं न व्यतिक्रमेत् ॥

लिखितमिदं शासनं महाक्षपटलिकेन नरहरिनाम्ना मयेति ॥ शिवमस्तु ॥

(इण्डियन् आण्टिक्केरी १२ । १५५)

---

## (७१)

## मङ्गलपुर(मङ्गरोल)समुपलब्धा वापीप्रशस्तिः ।

ॐ नमः शिवाय ।

मुकुटः स हरस्य पातु वः शशिपङ्केरुहकन्दकाङ्क्षया ।
गमनादचिरेण यत्र सा सुरहंसीव पपात जाह्नवी ॥

कृत्वा राज्यमुपारमन्नरपतिः श्रीसिद्धराजो यदा
दैवादुत्तमकीर्तिमण्डितमहीपृष्ठो गरिष्ठो गुणैः ।
आचक्राम झटित्यचिन्त्यमहिमा तद्राज्यसिंहासनं
श्रीमानेषं कुमारपालनृपतिः पुण्यप्ररूढोदयः ॥
राज्येऽमुष्य महीभुजोऽभवदिह श्रीगूहिलाख्यान्वये
श्रीसाहार इति प्रभूतगरिमाधारो धरामण्डनम् ।
चौलुक्याङ्गनिगूहकः सजहिगः ख्यातस्तनूजस्तत-
स्तत्पुत्रा बलिनो बभूवुरवनौ सौराष्ट्ररक्षाक्षमान् ॥
एषामेकतमो वीरः सोमराज इति क्षितौ ।
विख्यातो विदधे देवं पितुर्नाम्ना महेश्वरम् ॥
श्रीसोमनाथदेवस्य जगत्यां पुण्यवृद्धये ।
इन्दुकुन्दयशाश्चक्रे कीर्तिं मेरुसमाश्रितम् ॥
पूजार्थमस्य देवस्य भ्राता ज्येष्ठोऽस्य मूलुकः ।
सुराष्ट्रानायकः प्रादाच्छासनं कुलशासनम् ॥

ठ[कुर]श्रीसहजिगपुत्रठ[कुर]श्रीमूलुकेन श्रीसहजिगेश्वरदेवस्यानवरतपञ्चोपचारपूजाहेतोः श्रीमन्मङ्गलपुरशुल्कमण्डपिकायां दिनं प्रति का[र्षापणम्] १, तथा तलाराभाव्यमध्याद्दिनं प्रति का[र्षापणम्] १, तथा बलीवर्दछाटमाणकाभाव्येछाटां प्रति का० १, कणभृतगडकं प्रति का० १, तथा रासभछाटां प्रति का० ॥, तथा समस्तलोकेन निःशेषवल्लीकारैश्च पत्रभरावीडहरा केरी चाटुया प्रभृतीनां प्रत्येकं का० ॥, तथा पत्रभृत उंटभरकं प्रति का० २॥, पत्रभृतगन्त्रीं प्रति द्रम्मः १, क्षेत्रं प्रति उच्चताभाव्ये का० १, तथा आगरमध्ये खुंटितखरालिसाहा प्रति का० १, तथानयैव स्थित्या चोरुया वडे वलहजे च आह्यम् । तथा लाठिवद्रापथके वहन्तशुल्कमण्डपिकामध्याद्दिनं प्रति ठ०श्रीमूलुकेन रूपकैकः प्रदत्तः । तथा चोरूयावडेऽन्यसमस्तबृहत्पुरुषैरेकमतीभूय चतुराघाटनविशुद्धा यथाप्रसिद्धपरिभोगा सवृक्षमालाकुला वीसणवेलीग्राममार्गसमासन्ना देगयात्रावी

नाम वापी राजानुमत्या श्रीसहजिगेश्वराय प्रदत्ता । तथा श्रीवामनस्थल्यां शुल्कमण्डपिकायां दिनं प्रति का० १, तथा घृतमध्ये दिनं प्रति का० १, तथा पत्रकुट्यां भरां प्रति पत्रशत १, तथा वीडहरा करी वाटुयाप्रभृतीनां प्रत्येकं पत्र १०, तथा तलाराभाव्यमध्यात्ताम्बूलिकहट्टे प्रति प्रतिदिनं पत्र २, मडावा पू ॥ १,

देवदाय[:] समस्तोयं समस्तैर्भाविभूमिपैः ।
पालनीयोऽनुमान्यश्च दानाच्छ्रेयोनुपालनम् ॥
शिवः पात्रं जनो दाता पालकः पुण्यभाक्परम् ।
लोपकृच्च महापापी विचार्यैवं प्रपालयेत् ॥

यत उक्तं च—

बहुभिर्वसुधा वु(भु)क्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

श्रीमद्विक्रमसंवत् १२०२ तथा श्रीसिंहसंवत् ३२ आश्विनवदि १३ सोमे प्रशस्तिरियं नि[र्मिता] । कृतिरियं परमपाशुपताचार्यमहापण्डितश्रीप्रसर्वज्ञस्य ॥

(भावनगरप्राचीनशोधसंग्रहे १।५—७)

## ( ७२ )

## उदयपुरवायव्यकोणे सारणेश्वरमहादेवमन्दिरोपलब्धलेखः ।

ॐ ।

पान्तु पद्माङ्गसंसङ्गचञ्चद्रोमाञ्चवीचयः ।
श्यामाः कलिन्दतनयापूरा इव हरेर्भुजाः ॥

राज्ञी महालक्ष्म्यभिधानविश्रुता
तदङ्गजोऽप्यल्लटमेदिनीपतिः ।
तदीयपुत्रो नरवाहनाभिधः
सगुन्दलः सोढकसिद्धसील्लुकाः ॥

सांधिविग्रहिकदुर्लभराजो मातृदेवसहितः सदुदेवः ।
अक्षटाच्छ(क्ष)पटलाभिनियुक्तौ विश्रुतावपि मयूरसमुद्रौ ॥
वसन्तराजद्विजनागरुद्रौ सभूवणौ मावषनारकौ च ।
रिपिः प्रमाता गुहिषोऽथ गर्गस्त्रिविक्रमोऽवन्दि(न्ति)पतिश्च नागः ॥
भिषगविराजो रुद्रादित्यो वज्रटलिम्बादिसच्छभाः ।
अम्मुलसंगमवीरसजोज्जा वैश्रवणाविकभक्तिम्मोह[ा]ः ॥
संगमवेल्लकनागाः जज्जेल्लकवासुदेवदुम्बटकाः ।
यक्षकाद्या देशी तथा वणिग्देवराजश्च ॥
प्रतीहारयशःपुष्पो रुद्रहासोऽथ राहटः ।
धर्मः काष्ठिकसाहारः श्रीधरो वनृटिस्तथा ॥
हूणश्च कृषुराजोऽन्यः सर्वदेवोऽपि गौष्ठिकः ।
कृतमायतनं चेदममात्ये मम्मटे सति ॥
पुण्यप्रबन्धपरिपाकिमकीर्तयोऽमी
संसारसागरमसारमिमं गभीरम् ।
बुद्ध्वाद्रिराजशिखरोत्थमचीकरन्त
पोतायमानमिदमायतनं मुरारेः ॥
कर्णाटमध्यविषयोद्भवलाटटक्का
अन्येऽपि केचिदिह ये वणिजो विशन्ति ।
तैः कल्पितं मधुरिपोः प्रतिपूजनाय
दानं न केनचिदपि व्यभिचारणीयम् ॥
द्रम्ममेकं करी दद्यात्तुरगो रूपकद्वयम् ।
द्रम्मार्धविंशकं शृङ्गी लाटहट्टे तुलाढकौ ॥
एकादशीशुक्लदिनेऽखिलायः कन्दूद्भृतां स्याद्धटिका पणस्य ।
द्यूतंधराणामपि पे[टकं] स्यादेकैकशस्तैलपणं च घाणे ॥
रन्धनीनां गते मासे रूपकोऽथ चतुःसरम् ।
प्रत्यहं मालिकानां च दानमेतदिह स्फुटम् ॥

कार्तिकसितपञ्चम्यामश्रवणाख्या सुसूत्रधारेण ।
प्रारब्धं देवगृहं काले वसुशून्यदिक्संख्ये ॥
दशदिग्विक्रमकाले वैशाखे शुद्धसप्तमीदिवसे ।
हरिरिह निवेशितोऽयं वह्निप्रतिमो वराहेण ॥
तथा निरूपिताशेषश्रीमद्भल्लट[भूपतिः] ।
लेखितारौ च कायस्थौ पालवेल्लकसंज्ञकौ ॥
गोपप्रभासमहिधरनारायणभट्टसर्वदेवाद्याः ।
अम्मकसहिताः सर्वे निश्चितमिह गोष्ठिका ह्येते ॥

(भावनगरप्राचीनशोधसंग्रहे १।१५–१७)

---

## (७३)

## भावनगरे महुवाबन्दरग्रामे लक्ष्मीनारायणमन्दिरोपलब्धलेखः ।

ॐ नमः सर्वज्ञाय ।

स्वस्ति स्वस्तिमति प्रसिद्धनृपतिश्रीविक्रमातिक्रमा-
त्संवद्विष्णुपदद्वयेषुजगतीसंख्ये प्रजानां पतौ ।
मित्रे चोत्तरगे प्रचण्डकिरणे धन्ये मधौ माधवे
शुक्ले पूर्णतिथौ गुरौ च गुरुभे सद्योगभोगक्षणे ॥
बालाकान्तरगे पुरे मधुमतीसंज्ञे निवासोचिते
श्रीमत्कामगवीखुरोद्भवभवे वंशे शिवे संभवः ।
श्रीरामार्पितचामरातपहरप्रौढिप्रतिष्ठान्वितः
श्रेष्ठिश्रीनरपाल एष समभूच्छ्रीकृष्णसेवापरः ॥
तत्पुत्रोऽतः पवित्रो हरिपरिचरणः श्रेष्ठिमल्लोऽत्र पल्ह-
स्तस्मादप्याविरासीदमितवितरणोऽस्त्यस्य सत्यप्रभावः ।
श्रेष्ठिश्रीरामनामा कृतसुकृतचयः संयुतो जातुसत्या
सन्मत्या विष्णुभक्त्या [नि]वसति सदने ब्रह्मणो वेदवेदः ॥

तदनु गणितपूर्वाद्विप्रपुण्यप्रथाया-
त्कलिमलदलनोऽयं मोकलो निर्मलायाम् ।
प्रथयति वरवापीं तत्प्रतीचीनभूमौ
मधुरसलिलपूर्णां श्रेयसे तत्र पित्रोः ॥
अनुतिष्ठेदधिष्ठानं मृष्टायां दृष्टनिर्जले ।
स तिष्ठेदिष्टमुद्दिष्टंदिष्टं शिष्टैस्त्रिविष्टपे ॥

नीलोद्वाहं यो हरिमेधं सुनिधानं कुर्यात्पुत्रो गोत्रपवित्रोऽभिजनेन ।
दद्यादन्नं भूमिगजाश्वोभयवक्त्रा भूयाद्भावात्तीर्थसुपर्वद्विजभक्तः ॥

गोहिल्लोऽसौ रणे शूरः सारङ्गः शार्ङ्गिसेवकः ।
तदुर्व्यां कुरुते वापीं धर्मधीर्मोढमोकलः ॥

उक्तं च श्रीभारते—

'गोमांसे गोगवाक्रान्ते गोरसे गगने गते ।
गोमात्रं गोरसं दद्याद्गोसहस्रफलं लभेत् ॥'[1]
श्रीकान्तं कृतदैत्यान्त देव सेवकवत्सल ।
त्वया विना प्रभुः कोऽत्र ज्ञातुं कर्म क्रियापदे ॥
पुराणपुरुषः पायादपायात्त्वां कृपादृशा ।
जलशायी प्रणीतोऽत्र यो लक्ष्म्या सह मोकलः ।

उक्तं च धर्मारण्यपुराणे—

पुरा सृष्टिसमारम्भे स्वयंभूर्भगवान्स्वयम् ।
अस्थापयन्महास्थानमिदं मोहविमोहनम् ।
धर्मारण्यं कृते प्रोक्तं त्रेतायां सत्यमन्दिरम् ।
द्वापरे वेदभुवनं कलौ मोहेरकं मतम् ॥

स्वस्ति श्रीमन्नृपविक्रमार्कसमयातीतसंवत् १९०० वर्षे प्रजापतिनाम्नि संवत्सरे उत्तरायणे वसन्तर्तौ वैशाखशुक्लपञ्चम्यां गुरौ श्रीमधुमत्याः पश्चिमे प्रदेशे निर्जले माता सतीबाई जानु, पिता श्रेष्ठि श्रीरामा, भ्रातृ श्रे०

---

१. 'वृषसंक्रमणमासे सूर्यस्य किरणैराक्रान्ते पृथिव्या रसे आकाशं गते सति गोतृप्तिजनकं जलरसं दद्यात्तर्हि गोसहस्रफलं लभेत' इत्यर्थः.

राघवश्रेयसे श्रेष्ठिमोकलः भ्रातृसांगलीवासहितो मार्गे शृङ्गाटके मृष्टोदकपूर्णां वापीं निर्ममीते ॥ श्री ॥

(भावनगरप्राचीनशोधसंग्रहे १।६८-७०)

---

# ( ७४ )

## मरु(मारवाड)देशीय-सादडीग्रामपार्श्वे राणकपुरजैनमन्दिरप्रशस्तिः ।

स्वस्तिश्रीचतुर्मुखजिनयुगादीश्वराय नमः ।

श्रीमद्विक्रमतः १४९६ संख्यवर्षे श्रीमेदपाट(मेवाड)राजाधिराजश्रीबप्प (१) श्रीगुहिल (२) भोज (३) शील (४) कालभोज (५) भर्तृभट (६) सिंह (७) महायक (८) राज्ञीसुतयुतस्वसुवर्णतुलातोलकश्रीखुम्भाण (९) श्रीमदल्लट (१०) नरवाहन (११) शक्तिकुमार (१२) शुचिवर्म (१३) कीर्तिवर्म (१४) योगराज (१५) वैरट (१६) वंशपाल (१७) वैरीसिंह (१८) वीरसिंह (१९) श्रीअरीसिंह (२०) चोडसिंह (२१) विक्रमसिंह (२२) रणसिंह (२३) खेमसिंह (२४) सामन्तसिंह (२५) कुमारसिंह (२६) मथनसिंह (२७) पद्मसिंह (२८) जैत्रसिंह (२९) तेजस्विसिंह (३०) समरसिंह (३१) चाहुमानश्रीकीतूकनृप-श्रीअल्लावदीन-सुरत्राणजैत्रबप्पवंश्यश्रीभुवनसिंह (३२) सुतश्रीजयसिंह (३३) मालवेशगोगादेवजैत्रलक्ष्मणसिंह (३४) पुत्रश्रीअजयसिंह (३५) भ्रातृश्रीअरिसिंह (३६) श्रीहम्मीर (३७) श्रीखेतसिंह (३८) श्रीलक्षाह्वयनरेन्द्र (३९) नन्दनसुवर्णदानपुण्यपरोपकारादिसारगुणसुरद्रुमविश्रामनन्दन श्रीमोकलमहीपति (४०) कुलकाननपञ्चाननस्य विषमतमाभं सारङ्गपुरनागपुरगागरणनराणकाजयमेरुमण्डोरमण्डलकरबूदीखाट्टचाटसूजानादिनानामहादुर्गलीलामात्रग्रहणप्रमाणितजितकाशित्वाभिमानस्य निजभुजोर्जितसमुपार्जितानेकभद्रगजेन्द्रस्य म्लेच्छमहीपालव्यालचक्रवालविदलनविहंगमेन्द्रस्य प्रचण्डदोर्दण्डखण्डिताभिनिवेशनानादेशनरेशभालमालालालितपादारविन्दस्यास्खलितललितलक्ष्मीविलासगोविन्द-

स्य कुनयघनहनदहनदवानलायमानप्रतापव्याप्तपलायमानसकलबलूलप्रतिकूल-
क्ष्मापव्यापदवृन्दस्य प्रबलपराक्रमाक्रान्तढिल्लीमण्डलगुर्जरत्रासुरत्राणदत्तातप-
त्रप्रथितहिन्दुसुरत्राणबिरुदस्य सुवर्णसत्रागारस्य षड्दर्शनधर्माधारस्य चतु-
रङ्गवाहिनीवाहिनीपारावारस्य कीर्तिधर्मप्रजापालनसत्त्वादिगुणक्रियमाणश्री-
रामयुधिष्ठिरादिनरेश्वरानुकारस्य राणाश्रीकुम्भकर्णसर्वोर्वीपतिसार्वभौमस्य
विजयमानराज्ये तस्य प्रसादपात्रेण विनयविवेकधैर्यौदार्यशुभकर्मनिर्मल-
शीलाद्यद्भुतगुणमणिमयाभरणभासुरगात्रेण श्रीमहम्मदसुरत्राणदत्तफुरमाण-
साधुश्रीगुणराजसंघपतिसाहचर्यकृताश्चर्यकारिदेवालयाद्याडम्बरपुरःसरः श्री-
शत्रुंजयादितीर्थयात्रेण अजाहरि पिण्डरवाटकसालेरादिबहुस्थाननवीनजैन-
विहारजीर्णोद्धारपदस्थापनाविषमसमयसत्रागारनानाप्रकारपरोपकारश्रीसंघ-
सत्काराद्यगण्यपुण्यमहार्थक्रयाणकपूर्यमाणभवार्णवतारणक्षममनुष्यजन्मयान-
पात्रेण प्राग्वाटवंशावतंस सं० सागरसुत सं० कुरपालभा० [र्या] कामलदे-
पुत्रपरमार्हत सं० धरणाकेन ज्येष्ठभ्रातृ सं० रत्ना भा० रत्नादेपुत्र सं० ला-
षा-सजा-सोना सालिगस्व भा० सं० धारलदेपुत्रजावडादिप्रवर्धे-
मानसंतानयुतेन राणपुरनगरे राणाश्रीकुम्भकर्णनरेन्द्रेण स्वनाम्ना निवे-
शिततदीयसुप्रसादादेशतस्त्रैलोक्यदीपकाभिधानः श्रीचतुर्मुखयुगादीश्वरवि-
हारः कारितः। प्रतिष्ठितः। श्रीबृहत्तपागच्छे श्रीजगच्चन्द्रसूरिश्रीदेवे-
न्द्रसूरिसंताने श्रीमच्छ्रीदेसुन्दरसूरिपट्टप्रभाकरपरमगुरुसुविहितपुरंदरग-
च्छाधिराजश्रीसोमसुन्दरसूरिभिः॥ कृतमिदं च सूत्रधारदेपाकस्य। अयं
च श्रीचतुर्मुखविहार आचन्द्रार्कं नन्दतात्॥ शुभं भवतात्॥

(भावनगरप्राचीनशोधसंग्रह १, ५६–५८)

---

## (७५)

## बाणासुरवंशीयविक्रमादित्यानां शासनपत्रम्।

स्वस्ति श्री

यत्तत्त्वप्रकटीकृतावतितरां वेदोऽपि नाळं यतः
स्थित्युत्पत्तिलयाः समस्तजगतां यन्मन्वते योगिनः।

साक्षान्नम्रसुरेन्द्रवृन्दमुकुटव्यालीनरत्नावली-
शोणांशुप्रसरञ्जिताङ्घ्रियुगलो भूत्यै शिवः सोऽस्तु वः ॥
क्षीरोदं मथितुं मनोभिरतुलं देवासुरैर्मन्दरं
हित्वाक्षिप्त इवाञ्जनाद्रिरिव यस्तत्राधिकं राजते ।
यो भोगीन्द्रनिविष्टमूर्तिरनिशं भूयोऽमृतस्याप्तये
रक्षेद्वः सुरवृन्दवन्दितपत(द)द्वन्द्वः स नारायणः ॥
यः प्रादादसुराधिपो मुखवरे दत्त्वार्घमादाय गां
सद्वीपां सचराचरामधिमुदा देवाय दैत्यद्विषे ।
सोऽभूद्वामनरूपिणे बलिरिति ख्यातः सुरोपद्रव-
व्यापारैकरतः शिवाङ्घ्रिकमलद्वन्द्वार्चनैकव्रतः ॥
तस्मादभूद्गुणनिधिर्बलवांस्तनूजो
यत्राध्यवर्तत महानमलः प्रसादः ।
शंभोः शशाङ्कशकलद्युतिराजिमौले-
र्बाणः कृपाणनिहितारिबलः सुरारिः ॥
तस्यान्ववाये महति प्रसूतः क्षीरार्णवे शीतमरीचिरन्यः ।
बाणाधिराजो युधि शातखड्गखण्डीकृताराातिरखण्डतेजाः ॥
बाणाधिराजप्रमुखेष्वतीतेष्वनेकशो बाणनृपेष्वथान्त्यः ।
अजायतास्मिञ्जयनन्दवर्मा साक्षाज्जयश्रीवसतिः श्रियश्च ॥
स रक्षति स्म क्षितिमेकवीर आन्ध्रास्पथः पश्चिमतो बलीयान् ।
वधूमिवानन्यसमां कुलोत्थां राजन्यचूडामणिरञ्जिताङ्घ्रिः ॥
तस्मादजनिष्ट सुतो विजयादित्योऽन्तरस्त(स्थ)रिपुवर्गः ।
रणभुवि यस्य न तिष्ठन्त्यरयपयाग्रते(?) भियाक्रान्ताः ॥
तस्मात्समस्तरिपुतक्षणदक्षबाहो-
रक्षीणपुण्ययशसां प्रभवस्तनूजः ।
आसीदनङ्ग इव यो वनिताजनानां
श्रीमल्लदेव इति यो जगदेकमल्लः ॥

तेनाशेषनिरस्तवैरिनिकरो देव्यां हरेणातुलः
पार्वत्यामुदपादि षण्मुख इव श्रीमान्सुतो यः सुधीः ।
यत्कीर्तिर्विशदा दिगन्तकरिणां कर्णेषु सच्चामरी-
भूता भूपतिवन्द्यपादयुगल[ः] श्रीबाणविद्याधरः ॥

तस्यात्मजोऽभवदपास्तसमस्तशत्रु-
विद्याचतुष्टयनिविष्टमतिर्विनीतः ।
दुर्वारवीर्ययशसां प्रभवस्तरस्वी
यः पापदुःखरहितः प्रभुमेरुदेवः ॥

अभवदनुपमश्रीरानतारातिवर्ग-
प्रथितपृथुलकीर्तिः सूनुरस्माद्विनीतः ।
क्षितिपतिकुलमुख्यः पार्वतीशाङ्घ्रिपद्म-
द्वयनिहितमतिर्यो विक्रमादित्यनामा ॥

तस्यापि विजयादित्यनामधेयोऽभवत्सुतः ।
यद्विक्रमेण वित्रस्ताः पलायन्तेऽरयो युधि ॥

पुलविप्पवगण्ड इति प्रथितं रिपुदुःसहमस्य च नाम परम् ।
अभवद्युधि यत्करवालतलं द्विपवारिमुचोऽस्रजलं ववृषुः ॥

अनुगतनयमार्गो बाणवंशैकदीपः
प्रणतरिपुसमाजः कृष्णराजप्रियो यः ।
अजनि विजयबाहुः सूनुरस्याधिकश्री-
रपगतदुरितेतिर्विक्रमादित्यनामा ॥

स ह्यशेषनृपतिमुकुटकोटिरत्नद्युतिरञ्जितपदरेणुर्नानाविधभूरिपरनृपपक्ष-दोःखण्डविजयलब्धविपुलयशोभिपूर्णबाहुमण्डलो विविधविचित्ररत्नविलीनवलयस्वकरतलगृहीतचारुहेमकुम्भनिस्रवद्वारिधारापूर्वकमखिलवेदवेदाङ्गतर्कतत्त्वसंवित्स्वकर्मनिरतेभ्यः स्वमनोनिहितान्तःसंवित्प्रदानशीलेभ्यो द्विजवरेभ्य उदयेन्दुमङ्गलनिवासिभ्य एवंभूत—                    (अग्रे त्रुटितम्)

(इण्डियन् आण्टिक्वेरी १३।७–८)

## (७६)

## श्रीमहाराजनन्दप्रभञ्जनवर्मणां दानपत्रम् ।

स्वस्ति विजयसारपल्लिवासकात्परमभागवतो मातापितृपादानुध्यातः सकलकलिङ्गाधिपतिः श्रीमहाराजनन्दप्रभञ्जनवर्मा देयवाते कुटुम्बिनमाज्ञापयति—विदितमस्तु—'अक्षताग्रहरीयब्राह्मणहरिश्चन्द्रस्वामिने उदकपूर्वेणाकरं भरवानवर्जं पुण्यायुर्यशसामभिवृद्धये आचन्द्रतारकार्कप्रतिष्ठितमग्रहारं कृत्वा सर्वकरपरिहारैश्च परिहृत्य देवरातगोत्रचरणेभ्यः परदत्तम् । एवं ज्ञात्वा युष्माभिः पूर्वोचितमर्यादया सर्वोपस्थानं कर्तव्यम् । मेयं हिरण्याद्यं चोपनेयम् ।' भविष्यतश्च राज्ञो विज्ञापयामि—'धर्मं क्रमविक्रमाणामन्यतमयोगादवाप्यमनुशासतां प्रवृत्तकमिदं दानं स्वधर्ममनुपश्यद्भिः स्वदत्तिरिवायमग्रहारोऽनुपाल्यः ॥

अपि चात्र व्यासगीतश्लोकानुदाहरामि—

बहुभिर्वसुधा दत्ता राजानो वसुधाधिपैः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष युधिष्ठिर ।
महीं महीमतां श्रेष्ठ दानाच्छ्रेयोऽनुपालनम् ॥
षष्टिवर्षसहस्राणि स्वर्गे मोदति(?) भूमिदः ।
आक्षेप्ता चानुमन्ता च तानेव नरके वसेत् ॥

(इण्डियन् आण्टिक्केरी १३।४९–५०)

---

## (७७)

## श्रीचालुक्यकुलालंकारश्रीविजयादित्यमहाराजानां शासनपत्रम् ।

स्वस्ति श्रीमतां सकलभुवनसंस्तूयमानमानव्यसगोत्राणां हारीतिपुत्राणां कौशिकीवरप्रसादलब्धराज्यानां भगवन्नारायणप्रसादसमासादितवरवराहलाञ्छनेक्षणक्षणवशीकृताराातिमण्डलानामश्वमेधावभृत(थ)स्नानपवित्रीकृतवपुषां

चालुक्यानां कुलमलंकरिष्णुर्विविधयुद्धलब्धविजयसिद्धेर्भुवनमनोभिरामवि-
क्रा(क्र)मरामस्य पौत्रः प्रतापावनतपरमण्डलनृपतिमण्डलस्य **श्रीविष्णुव-
र्धन**महाराजस्य प्रियतनयो निजभुजनिशितासिधाराप्रशमितपरचक्रविक्रमः
शक्तित्रयालंकृतः क्षीरसागर इव लक्ष्मीप्रभवः, दिनकर इव सततरक्षित-
पद्मः[1], शशधर इव कुमुदवनप्रियः[2], धर्मज[3] इव निजधर्मनिर्मलः, धर्मजानुज[4]
इव दुःशासनक्षयकरः[5], मेरुरिव स्थिरस्थितिः, अतुलतुलाधृतकडधौतधौत-
दुर्बलमलिनः परमब्राह्मण्यो विष्णुरिव जिष्णुः, समस्तभुवनाश्रयः **श्रीविज-
यादित्य**महाराजाधिराजपरमेश्व[र]भट्टारकः कण्डेरुवातीविषये वन·········
व·····ग्रामस्य कु···············कप्रमुखान्कुटुम्बिनः सर्वानित्थमाज्ञापयति—
विदितमस्तु वः 'अस्माभिर्मिनमिनिवास्तव्याय काश्यपगोत्रायापस्तम्बसूत्राय
तैत्तिरीयब्रह्मचारिणे **तुर्कवर्म**त्रे(त्रिवे)दिपौत्रा(य) वेदाङ्गविदे षट्कर्म-
निरताय **द्रोणशर्म**द्विवेदिपुत्राय ब्राह्मणगुणगणालंकृताय प[भ]**भट्टारकाय**,
सूर्यग्रहणनिमित्तेऽस्मिन्नेव ग्रामे द्वादशवेण्डिककोद्रवबीजसंस्थितं··········
··················आवासनं सर्वकरपरि··································। पू-
र्वतः—कोरुपुरसीमा, दक्षिणतः—तरुखः, पश्चिमतः—रूमाती, उत्त-
रतः—रेण्वुवतीबोहरेण्वुवती··········चतुरवधि,

आज्ञप्तिरस्य धर्मस्य निर्मलो धर्मसंग्रहः।
बुधमानमलं(?) कश्चित्पुण्यवित्तो नरोत्तमः॥
बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम्।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः॥

(इण्डियन् आण्टिक्वेरी १३। ५५–५६)

---

१. पद्मं कमलम्, पद्मा लक्ष्मीः. २. कुमुदानां कैरवाणां वनस्य, कोः पृथिव्या मुदा हर्षेण अवनेन पालनेन प्रियः. ३. युधिष्ठिरः. ४. भीमसेनः. ५. दुःशासनो धृतराष्ट्रात्मजः, दुष्टशिक्षा च दुःशासनम्.

# (७७)

## राष्ट्रकूटकुलालंकारश्रीमदकालवर्षश्रीकृष्णराजस्य शासनपत्रम् ।

ओं ओं स्वस्ति ।

[1]सो(स) वोऽव्याद्वेधसा धाम यन्नाभिकमलं कृतम् ।
हरश्च यश्य(स्य) कान्तेन्दुकलया कमलंकृतम् ॥

आसीद्विशति(द्विषत्ति)मिरमुत्य(मुद्यत)मण्डलाग्रो
ध्वस्तिं नयन्नभिमुखो रणसर्वरीशु:(शर्वरीषु) ।
भूपः सु(शु)चिर्विधुरिव(वा)स्तदिगन्तकीर्ति[2]-
**गोंविन्दराज** इति राजसु राजसिङ्घ(सिंह)ः ॥

तस्यात्मजो जगति विश्रुतसु(शु)भ्रकीर्ति-
रार्तार्तिहारिहरिविक्रमनामधारी ।
भूपस्तृ(स्त्रि)विष्टपनृपानुकृतिः कृतज्ञः
**श्रीकर्कराज** इ[ति] गोत्रमणिर्बभूव ॥

तस्य प्रभिन्नकरटचु(च्यु)तदानदन्ति-
दन्तप्रहाररुचिरोल्लिखितांसपीटः ।
क्ष्माप[ः] क्षितौ क्षपितस(श)त्रुरभूतभू(त्तनू)जः
सद्राष्ट्रकु(कू)टकनकाद्द(द्रि)रिवेन्द्रराजा[ः] ॥

तस्योपार्जितमहसस्तनयश्चतुरुदधिवलयमालिन्या[ः] ।
भोक्ता भुव[ः] शतक्रतुश(स)दृश[ः] श्रीदन्तिदुर्गराजोऽभूत् ॥

काची(ञ्ची)शकेरलनराधिपचोलपाड्य(ण्ड्य)-
श्रीहर्षवज्रटविभेदविधानदक्षः ।
कर्णाटकं बलमचिन्त्यमजेयमन्यै-
र्भृत्यैः कियद्भिरपि यः सहसा जिगाय ॥

---

१. अस्मिल्लेखे प्रायः श्लोकाश्चतुर्थपञ्चमलेखस्था एव, अतोऽत्रोपयुक्तं टिप्पणमपि तत्रैव महामहोपाध्यायैः कृतमवलोकनीयम्. २ 'कीर्तिः प्रसादयशसोः' इति मेदिनी.

तस्मिन्दिवं प्रयाते वल्लभराजे कृतप्रजाबाधः ।
श्रीकर्कराजसूनुर्महीपतिः कृष्णराजोऽभूत् ॥

राहप्यमात्मभुजजातबलावलेप-
माजौ विजित्य निशितासिलताप्रहारैः ।
पालिधज(ध्वजा)वलिशुभामचिरेण यो हि
राजाधिराजपरमेश्वरतामवाप ॥

येन श्वेतातपत्रप्रहतरविकरव्राततापास्त(त्स)लीलं
जग्मे नासीरधूलीधवलितशिरसा वल्लभाख्यः सदाजौ ।
श्रीमद्गोविन्दराजो जितजगद[हि]तस्त्रैणवैधव्यदक्ष-
स्तस्यासीत्सूनुरेक[ः] क्षणरणदलितारातिमत्तेभकुम्भः ॥

तस्यानुजः श्रीध्रुवराजनामा महानुभावोऽप्रहतप्रतापः ।
प्रशा(सा)धिताशेषनरेन्द्रचक्रः क्रमेण बालार्कवपुर्बभूव ॥

या(जा)ते ज(य)त्र च राष्ट्रकूटतिलके सद्भूपचूडामणौ
गुर्वी तुष्टिरथाखिलस्य जगतः सुस्वामिनि प्रत्यहम् ।
सत्यं सत्यमिति प्रशासति सति क्ष्मामासमुद्रान्तिका-
मासीद्धर्मपरे गुणामृतनिधौ सत्यव्रताधिष्ठिते ॥

रक्षि(क्ष)ता येन निःशेषं चतुरम्भोधिसंयुतम् ।
राज्यं धर्मेण लोकानां कृता हृष्टिः परा हृदि ॥

तस्यात्मजो जगति सत्प्रथितोरुकीर्ति-
र्गोविन्दराज इति गोत्रललामभूतः ।
त्यागी पराक्रमधनः प्रकटप्रताप-
संतापिताहितजनो जनवल्लभोऽभूत् ॥

तत्पुत्रोऽत्र गते नाकमाकम्पितरिपुव्रजे ।
श्रीमहाराजस(श)र्वाख्यः ख्यातो राजाभवद्गुणैः ॥

अर्थिशु(षु) यथार्थतां यः समम्भ(भी)ष्टफला(ष्टावा)प्तिलब्धतोशेशु(षेषु) ।
वृद्धिं निनाय परमाममोघवर्षाभिधानस्य ॥

राजाभूत्तत्पितृव्यो रिपुभवविभवोद्भूत्यभावैकहेतु-
लक्ष्मीवानिन्द्रराजो गुणिनृपनिकरान्तश्चमत्कारकारी।
[रागादन्यान्व्युदस्य प्रकटितविषया यं नृपान्सेवमाना
राज्यश्रीरेव चक्रे सकलकविजनोद्गीततथ्यस्वभावम् ॥]
श्रीकर्कराज इति रक्षितराज्यभारः
सारं कु[ल]स्य तनयो नयशालिशौर्यः।
तस्याभवद्विभवनन्दितबन्धुसार्थः
पार्थ[ः] सदैव धनुशि(षि) प्रथमः शुचीनाम् ॥
स्वेच्छाग्नि(गृ)हीतविषयो(यान्) दृढसंघभाज[ः]
प्रोद्वृत्तदृप्ततरशुल्किकराष्ट्रकूटान्।
उत्खातखड्गनिजबाहुबलेन जित्वा
योऽमोघवर्षमचिराश्च(त्स्व)पदे व्यधत्त ॥
पुत्त्(त्री)यतस्तस्य महानुभाव[ः] कृती कृतज्ञ[ः] कृतधीर्यवीर्यः।
वशीकृताशेषनरेन्द्रवृन्दो बभूव सू[नुर्ध्रुवराजनामा ॥]
श्रीदन्तिवर्मण..........तस्य..............
..........................सुतः प्रबलप्रतापः ॥
यस्यानेकनरेन्द्रवृन्दविनुतस्यापू..............
................................द्विपन्नद्वयः।
प्रोत्खातासिलताप्रहारदलितद्विड्दन्तिकुम्भस्थलः
शूरः सज्जनवल्लभः ससरलः.............. ॥
........................................
........................................।
........................................
..............................पीतमथो यशश्च ॥

१. इदमुत्तरार्धमादर्शपुस्तकेऽनुपलब्धं चतुर्थलेखदृष्टं पूरितम्. २ 'वर्षं इति राज्यपदे' चतुर्थलेखपाठः. ३. चतुर्थलेखदृष्टः पूरितः.

येन खड्गद्वितीयेन वल्लभनृपस्य पश्यतः ।
उज्जयिन्यां रिपूञ्जित्वा दूरमुत्तम्भितं यशः ॥

तेनेदमनिलविद्युच्चञ्चलमालोक्य जीवितमसारम् ।
क्षितिदानपरमपुण्यः प्रवर्तितो धर्मदायोऽयम् ॥

स च समधिरा(ग)ताशेषस(म)हाशब्दम(हासामन्ता)धिपतिश्रीमदकालवर्षश्रीकृष्णराजः सर्वानेव समनुबोधयति—अस्तु वः संविदितम्—'यथा मया श्रीअङ्कूलेश्वरावस्थि[ते]न मातापित्रोरात्मनश्चैहिकामुष्मिकपुण्ययशोभिवृद्धये नर्मदायां भगवत्तीर्थे स्नात्वोदकातिस्व(स)र्गेण श्रीवरिअविव(वा)स्तव्यत्रैविद्यसामान्यकुण्डिनसगोत्राध्वर्युसब्रह्मचारिब्राह्मणश्रीअजवासावकसुताय श्रीतणुअवासावका[य]श्रीगुहेश्वरभ्रातरे(त्रे) द्वयो(द्वाभ्यां) प्रतिपादितः श्रीकोङ्कणविषयान्तर्गतवारिअविषोडशोत्त[रग्रामशत]मध्यवर्ति कविडसाड्यभिधानग्रामः । यस्याघाटनानि—पूर्वतः—वलछग्रामसीमा, दक्षिणतः—उत्तरपढवणकग्रामसीमा, पश्चिमतः—वरिअविपट्टनसीमा, उत्तरतः—वसुहारियकग्रामसीमा । एवं चतुराघाटनोपलक्षितः सोद्रङ्गः सपरिकरः, ससीमापर्यन्तः, सवृक्षमालाकुलः, सदण्डदशापराधः, सधान्यहिरण्यादेयोऽचाटभटप्रवेश्यः सर्वराजकीयानामहस्तप्रक्षेपणीय आचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनः पूर्वदत्तदेवदायब्रह्मदायरहितोऽभ्यन्तरसिद्ध्या शकनृपकालातीतसंवत्सरशतेष्वष्टसु दशोत्तरेषु ८१० चैत्रेऽमावास्यायां सूर्यग्रहणपर्वणि स्नात्वोदकातिसर्गेण बलिचरुवैश्वदेवाग्निहोत्रानुष्ठानादिक्र(क्रि)योच्छ(त्स)र्पणार्थं प्रतिपादितः । तदस्युतया (?) ब्रह्मदायस्थित्या भुञ्जतो भोजयतः कृश(ष)तः कर्षयतः प्रतिदिशतो वा न केनापि परिपन्थना कार्या । तथागामिनृपतिभिरस्मद्वंशजैरन्यैर्वा सहस्रमेकेन पालनीयः, द्रम्माश्च त्रिभिः स्कन्धकैर्देयाः । प्रथमं भाद्रपदे । द्वितीयं कार्तिके । तृतीयं माघे । एभिः स्थित्या सर्वराजकीयैः पालनीयः । न केनापि परिपन्थना कार्या । आगामिनृपतिभिरस्मद्वंशजैरन्यैर्वा 'सामान्यं भूमिदानफलम्' इत्यवधार्य विद्युल्लोलान्यनित्यान्यैश्वर्याणि तृणाग्रलग्नजलबि-

न्दुचञ्चलं च जीवितमाकलय्य स्वदायनिर्विशेषोऽस्मदायोऽनुमन्तव्यः पालनीयश्च । यश्चाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यादाच्छिद्यमानं वानुमोदेत स पञ्चभिर्महापातकैरुपपातकैश्च संयुक्तः स्यात् । उक्तं च भगवता व्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकत्रयं तेन भवेद्धि दत्तं यः काञ्चनं गां च महीं च दद्यात् ॥

विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदायं हरन्ति ये ॥

कन्यामेकां [गां तथै]कां भूम्यामप्येकमङ्गुलम् ।
हरन्नरकमायाति यावदाहू(भू)तसंप्लवम् ॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्माल्यनिष्ठीवसमानि तानि को नाम साधुः पुनराददीत ॥

स्वदत्तां परदत्तां वा यत्नाद्रक्ष नराधिप ।
महीं महीभुजां श्रेष्ठ दानाच्छ्रेयोनुपालनम् ॥

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

इति कमलदलाम्बुबिन्दुलोलां श्रियमनुचिन्त्य मनुष्यजीवितं च ।
अतिविमलमनोभिरात्मनीनैर्नहि पुरुषैः परकीर्तयो विलोप्याः ॥

दूतकोऽत्र महत्तमसर्वाधिकारी ब्राह्मण अल्लैयको नाम्ना । लिखितं चैतन्मया महासांधिविग्रहाधिकारिणा श्रीजज्जकेन श्रीकुल्लुकसूनुना । इति ॥ स्वहस्तोऽयं मम श्रीमदकालवर्षश्रीकृष्णराजस्य ॥

(इण्डियन् आण्टिकेरी १३।६६–६८)

---

# (७८)

## श्रीजयभटमहाराजानां दानपत्रम्।

स्वस्तिश्रीकायावतारवासकात्सततलक्ष्मीनिवासभूते तृष्णासंतापहारिणि दीनानाथविस्तृतानुभावे द्विजकुलोपजीव्यमानविभवशालिनि महति महाराजकर्णान्वये कमलाकर इव राजहंसः, प्रबलकलिकालविलसिताकुलितविमलस्वभावो गम्भीरोदारचरितविस्मापितसकललोकपालमानसः परमेश्वरश्रीदद्दः, तस्य सूनुरशङ्कितागतप्रणयिजनोपभुक्तविभवसंचयोपचीयमानमानो निर्वृति··················नेककण्टकवंशसंदोहदुर्ललितप्रतापानलो निशितनिस्त्रिंशधारादारितारातिकरिकुम्भमुक्ताफलच्छलोल्लसितासितयशोंशुकावगुण्ठितदिग्वधूवदनसरसिजः श्रीजयभटः, तस्यात्मजो महामुनिमनुप्रणीतप्रवचनाधिगमविवेकस्वधर्मानुष्ठानप्रवणिवर्णाश्रमव्यवस्थोन्मूलितसकलकलिकालावलेपः प्रणयिजनमनोरथविलयव्यतीतविभवसंपादनापनीताशेषपार्थिवदानाभिमानो मदविवशाङ्कुशातिवर्तिकुपितकरिनिवारणप्रथितगुरुगजाधिरोहणप्रभावो विपत्प्रपातपतितनरपतिशताभ्युद्धरणनिखिललोकविश्रुतपरोपकारकरणव्यसनः प्राच्यप्रतीच्याधिराजविजृम्भितमहासङ्ग्रामनरपतिसहस्रपरिवारितानेकगजघटाविघटनप्रकटितभुजवीर्यविख्यातबाहुसहायापरनामा परममहेश्वरः समधिगतपञ्चमहाशब्दश्रीदद्दः, तस्य सूनुरनेकसमरसंघट्टघनघटितगजघटापाटनपटुरसहिष्णुवनदावानलो दीनानाथातुरसुहृत्स्वजनबन्धुकुमुदाकरकौमुदीनिशाकरः, भागीरथीप्रवाह इव विपक्षक्षोभक्षमः, शान्तनुरिव समुद्भूतकलकलारावमहावाहिनीपतिः, आदिवराह इव स्वभुजबलप्रक्रमोद्धृतधरणिः, परममहेश्वरः समधिगतपञ्चमहाशब्दश्रीजयभटः कुशली सर्वानेव राजसामन्तभोगिकविषयपतिराष्ट्रग्राममहत्तराधिकारिकादीन्समनुदर्शयति—अस्तु वः संविदितम्—यथा मया मातापित्रोरात्मनश्चैहिकामुष्मिकपुण्ययशोभिवृद्धये गिरिनगरविनिर्गतश्रद्धिकाग्रहारवास्तव्यतचातुर्विधसामान्यप्रावायनसगोत्रवाजसनेयमाध्यंदिनसब्रह्मचारिब्राह्मणदत्तपु-

---

१. अयं कायावतारनामको वासकोऽधुना 'कावी' इति नाम्ना प्रसिद्धो 'भ्रूच'प्रान्ते 'गुजरात'देशे वर्तते. २. विपक्षाणां शत्रूणाम्, पक्षिपक्षाणां च. ३. वाहिन्यो नद्यः, सेनाश्च.

अब्राह्मणदेवस्वामिनेऽसत्कृतप्रकाशनाय कडुम्बराय बलिचरुवैश्वदेवाग्निहो-त्रातिथिपञ्चमहायज्ञादिक्रियोत्सर्पणार्थं कोरिल्लापथकान्तर्गतशमीपद्रकग्रामे पूर्वतः सीम्नि चतुष्षष्टिभूनिवर्तनप्रमाणं क्षेत्रम्, यस्याघाटनानि—पूर्वतः—गोलिकाग्रामसंधिः, दक्षिणतः—यमलखल्लराभिधानतडाकम्, तथा महत्तरम-हेश्वरसत्कक्षेत्रम्, वापितदेवकसत्कवापकक्षेत्रं च, अपरतः शमीपद्रकग्रामादेव धाहद्धाग्रामयायी पन्थाः, उत्तरतो वरुटखल्लराभिधानतडाकं तथा कोरि-ल्लावासी ब्राह्मणनर्मसत्कब्रह्मदेयक्षेत्रं च। एवमिदं चतुराघाटनोपलक्षितं क्षेत्रं सोद्रङ्गं सपरिकरं सभूतवातप्रत्ययं सधान्यहिरण्यादेयं सदशापराधं सो-त्पद्यमानविष्टिकं गृहस्थावरच्छलकरथ्याप्रवेशनिर्गमसगरचतुष्पदप्रचारवा-पीकूपतडाकपद्रोपजीव्यसमेतं सर्वराजकीयानामहस्तप्रक्षेपणीयं पूर्वप्रत्तदेव-ब्रह्मदायरहितं भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनं पुत्रपौत्रान्वयक्रमोपभोग्यम्—अद्य माघशुद्धपञ्चदश्यां चन्द्रोपरागे पुण्य-तिथावुदकातिसर्गेण ब्रह्मदायत्वेन प्रतिपादितम्। यस्योचितया ब्रह्मदाय-स्थित्या भुञ्जतः कृषतः कर्षयतः प्रतिदिशतो वा न कैश्चिद्व्यासेधे वर्तित-व्यम्। आगामिभद्रनृपतिभिरस्मद्वंश्यैरन्यैर्वायमस्मद्दायोऽनुमन्तव्यः पालयि-तव्यश्च। यश्चाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यादाच्छिद्यमानमनुमोदते, स पञ्चभिर्महापातकैः सोपपातकैः संयुक्तः स्यादिति। उक्तं च भगवता वेदव्यासेन—

षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः।
कृष्णाहयो हि जायन्ते भूमिदानं हरन्ति ये॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥
अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः।
लोकत्रयं तेन भवेत्तु दत्तं यः काञ्चनं गां च महीं च दद्यात्॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष युधिष्ठिर ।
महीं मतिमतां श्रेष्ठ दानाच्छ्रेयोनुपालनम् ॥

संवत्सरशतचतुष्टये षट्पञ्चाशदुत्तरके माघशुद्धपञ्चदश्यां लिखितमिदं ..................................................भोगिकपुत्रमहाबलाधिकृतकेशवेनेति । बलाधिकृतवायुल्लदूतकम् । सम्—४००+५०+६ ॥ [माघ सु. १०,+५ सो]मवारे ॥ निबाद्धम् ॥ स्वहस्तो मम श्रीजयभटस्य ॥

(इण्डियन् आण्टिक्वेरी १३।७७-७९)

## (७९)

## प्रशान्तरागापरनामधेयश्रीदद्दमहाराजानां दानपत्रम् ।

ॐ स्वस्ति नन्दीपुरतो[1] विविधविमलगुणरत्नसंपदुद्भासितसकलदिङ्मुखे परित्राताशेषसपक्षमहामहीभृति सततमविलङ्घितावधौ स्थैर्यगाम्भीर्यलावण्यवति महासत्त्वतयातिदुरवगाहे गुर्जरनरपतिवंशमहोदधौ श्रीसहजन्मा कृष्णाहृदयाहितास्पदः कौस्तुभमणिरिव विमलयशोदीधितिनिकरविनिहतकलितिमिरनिचयः, सत्पक्षो वैनतेय इवाकृष्टशत्रुनागकुलसंततिः उत्पतित एव दिनकरचरणकमलप्रणामापनीताशेषदुरितनिवहः सामन्तदद्दः । प्रतिदिनमपेतशङ्कं येन स्थितम् । अचलगुणनिकरकेसरिविराजितवपुषा विनीतारिगजकुम्भविगलितमुक्ताफलच्छलमनिकीर्णविमलयशोवितानेन रूपानुरूपं सत्त्वमुद्वहता केसरिकिशोरकेणेव, उपरि क्षितिभृताम् । यं चातिमलिनकलियुगतिमिरचन्द्रमसमनुदिवसमन्योन्यस्पर्धयेवाययुः कलासमूहादयो गुणाः, विक्रमानीतमदविलासालसगतयोऽरातिगजघटाः प्रमदाश्च । यस्य चाविरत-

१. अस्य नन्दीपुरस्य 'भडोच' नगरतः ऐशान्यां चतुस्त्रिंशन्मैलदूरे 'नान्दोद' इति नाम्ना ख्यातिरिति पण्डित इन्द्रजीपुत्रो भगवान्लालोऽवदत्. बूहरपण्डितस्तु भडोचनगरस्य पूर्वतो झडेश्वरद्वारे सत्तां ब्रवीति स्म.

दानप्रवाहप्रीतार्थिमधुकरकुलस्य रुचिरकीर्तिवशासहायस्य सततमस्खलितपदं प्रसरतः सद्वंशासितशोभागौरवस्य मद्रमतङ्गजस्येव करघातविनिहतक्षितिभृदुन्नततनूरुहस्य रेवानिर्झरसलिलप्रपातमधुरनिनदस्य, भगोद्भवाः(?) समुन्नतपयोधराहितश्रियो दयिता इव मुदे विन्ध्यनगोपत्यका । यश्चोपमीयते शशिनि सौम्यत्ववैमल्यशोभाकलाभिः, न कैलङ्केन । श्रीनिकेतशोभासमुदयाधःकृतकुलकैण्टकतया कमलाकरे, न पैङ्कजन्मतया; सत्त्वोत्साहविक्रमैर्मृगाधिराजे, न कैरूराश्रयतया; लावण्यस्थैर्यगाम्भीर्यस्थित्यनुपालनतया महोदधौ, न व्यैालाश्रयतया; सत्कटकसमुन्नतविद्यैाधरावासतया हिमाचले, न खैशपरिवारतया । यस्य च सद्भोगः शेषोरगस्येव विमलकिरणमणिशताविष्कृतगौरवः सकलजगत्साधारणः । यस्य प्रकाश्यते सत्कुलं शीलेन, प्रभुत्वमाज्ञया, शास्त्रमरातिप्रणिपातेन, कोपो निग्रहेण, प्रसादः प्रदानैः, धर्मो देवद्विजातिगुरुजनसपर्ययेति । तस्य सूनुः प्रतप्तरुचिरकनकावदातः कल्पतरुरिवाविरतमभिरुचितफलप्रदः सततमृतुगणस्येव वसन्तसमयः, वसन्तसमयस्येव प्रविकाशितनिबिडचूततरुवनाभोगः, सरस इव कमलनिवहः, कमलनिवहस्येव प्रबोधः, महाविषधरस्येव मणिः, मणेरिव स्वच्छतारभावः, महोदधेरिवामृतकलशः; अमृतकलशस्येवामरनदायित्वप्रभावः, करिण इव मदः, प्रमदाजनस्येव विलासः, विभवस्येव सत्पात्रविनियोगः, धर्मस्येव क्रतुः, क्रतोरिव स्वदक्षिणाकालः, प्रेम्ण इव सद्भावः, शशिन इवामलकलासमूहो नियतमलंकारभूतः सकलनिशाकराभिरूपवदनः, शक्तो वदान्यः, प्रबलरिपुबलानीकसमरसमवाप्तविजयश्रीः, श्रीवीतरागापरनामा श्रीजयभटः । कलिप्रतिपक्षभयाच्छरणार्थिन इव यमाश्रिताः सविनया गुणाः स्फुरितविमलकीर्तिसौदामनिना येन सकलजीवलोकानन्दकारिणा कालबलाहकेनेवावन्ध्यफलं गर्जता प्रणयिनामपनीतास्तृष्णासंतापदोषाः । यश्च शूरोऽपि सततमयशोभीरुः

१. 'कलङ्कोऽङ्केऽपवादे च' इति मेदिनी. २. कण्टकः क्षुद्रशत्रौ द्रुमाङ्गे च. ३. 'पङ्कोऽस्त्री कर्दमे पापे' इति मेदिनी. ४. 'क्रूरस्तु कठिने घोरे नृशंसे' इति मेदिनी. ५. व्यालाः सर्पाः खलश्च. ६. विद्याधराः पण्डिता देवविशेषाश्च. ७. खशा हीनजातीयविशेषाः.

अपगततृष्णोऽपि गुणार्जनाविच्छिन्नतर्षः, सर्वप्रदानाशीलोऽपि परयुवतिहृदयदानपराङ्मुखः, पटुरपि परपरिवादाभिधानजडधीः । यस्य च न विरोधि रूपं शीलस्य, यौवनं सद्वृत्तस्य, विभवः प्रदानस्य, त्रिवर्गसेवा परस्परापीडनस्य, प्रभुत्वं क्षान्तेः, कलिकालो गुणानामिति ॥ तस्य सूनुः सजलघनपटलनिर्गतरजनिकरकरावबोधित(कुमुदधवल)यशोप्रतानास्थगितनभोमण्डलोऽनेकसमरसंकटप्रमुखागतनिहतशत्रुसामन्तकुलवधू(प्रभातसमय)रुदितच्छलोद्गीयमानविमलनिस्त्रिंशप्रतापो देवद्विजातिगुरुचरणकमलप्रणामोद्धृष्टवज्रमणिकोटिरुचिरदीधितिविराजितमुकुटोद्भासितश्रीः दीनानाथातुराभ्यागतार्थिजनाक्लिष्टपरिपूरितविभवमनोरथोपचीयमानत्रिविष्टपैकसहायधर्मसंचयः प्रणयपरिकुपितमानिनीजनप्रणामपूर्वमधुरवचनोपपादितप्रसादप्रकाशीकृतविदग्धनागरिकस्वभावो विमलगुणनिकरपञ्जराक्षिप्तबहलकलितिमिरनिचयः समधिगतपञ्चमहाशब्दः श्रीदद्दः कुशली सर्वानेव राजसामन्तभोगिकविषयपतिराष्ट्रग्राममहत्तराधिकारिकादीन्समनुबोधयति—अस्तु वो विदितम्—अस्माभिरक्रूरेश्वरविषयान्तर्गतशिरीषपद्रकं एष ग्रामः सोद्रङ्गः सो[प]प[रि]करः सर्वादानसंग्राह्यः सर्वदित्यविष्टिप्रतिभेदिकापरिहीणो भूमिच्छिद्रन्यायेनाचाटभटप्रावेश्य आचन्द्रार्कार्णवक्षितिसमकालीनः पुत्रपौत्रान्वयभोग्यो जम्बूसरोविनिर्गताक्रूरेश्वरविषयान्तर्गतशिरीषपद्रवासिबहृचवत्ससगोत्राश्वलायनसब्रह्मचारिब्राह्मणभट्टग्ध्यापक तथा गोपादित्य, तथा भट्टिगण—विशाख—अग्निशर्म—द्रोण—काश्यपसगोत्रभट्टिदाम, तथा वत्र—अध्वर्युवाजसनेयडौण्डकीयसगोत्र—कण्वसब्रह्मचारिब्राह्मणतापिशर्म—द्वितापिशर्म—दत्तस्वामि—भागिस्वामि—पितृशर्म—भट्टि—द्रोण—धूम्रायणसगोत्रकर्काध्यापक—आवुक—कौण्डिन्यसगोत्र—वातशर्म—शैल—वोप—महादेव—वाव—माठरसगोत्रधर—विशाख—नन्दि—रामिल—हारीतसगोत्रधर्मधर—छान्दोग्यभरद्वाजसगोत्रकौथुमसब्रह्मचारिब्राह्मणइन्द्रशर्म—आदित्यराव—तापिशूर—इन्द्रशूर—ईश्वर—धर—दामधर—द्वि. ईश्वर—भरुकच्छविनिर्गतभेरज्जिकानिवासि—आथर्वणचौलिसगोत्रपिप्पलादसब्रह्मचारिब्राह्मणभद्र—वायुशर्म—द्रोणस्वामि—रुद्रादित्य—पूर्णस्वामि. एभ्यश्चतुश्चरणब्राह्मणेभ्यश्चातुर्विद्यपरिकल्पनपूर्वं बलि-

चरुवैश्वदेवाग्निहोत्रपञ्चमहायज्ञादिक्रियोत्सर्पणार्थं मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये कार्तिक्यामुदकातिसर्गेणातिसृष्टो यतोऽस्मद्वंश्यैरन्यैर्वागामिभोगपतिभिः प्रबलपवनप्रेरितोदधिजलत्तरङ्गचञ्चलं जीवलोकम्, अभावानुगतानसारान्विभवान्, दीर्घकालस्थेयसश्च गुणान्, आकलय्य सामान्यभोगभूप्रदानफलेप्सुभिः शशिकररुचिरं यशश्चिराय चिचीषुभिरयमस्मद्दायोऽनुमन्तव्यः पालनीयश्च ॥ यो वाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यादाच्छिद्यमानमनुमोदते स पञ्चभिर्महापातकैः सोपपातकैः संयुक्तः स्यात् ॥

उक्तं च भगवता वेदव्यासेन व्यासेन—

'षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदायं हरन्ति ये ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥'

इति ॥ संवत्सर—शतत्रयेशीत्यधिके कार्तिकशुद्धपञ्चदश्यां लिखितं संधिविग्रहाधिकरणाधिकृतरेवेण स्वमुखाज्ञेति ॥ सम्—३००+८० कार्तिक सुदि १०+५ ॥ दिनकरचरणार्चनरतस्य श्रीवीतरागसूनोः स्वहस्तोऽयं प्रशान्तरागस्य ॥

(इण्डियम् आण्टिक्केरी १३।८२-८४)

## (८०)

## प्रशान्तरागापराभिधेयश्रीदद्दमहाराजानां द्वितीयं दानपत्रम् ।

ॐ स्वस्ति नन्दिपुरतो विविधविमलगुणरत्नसंपदुपहसितसकलदिङ्मुखे परित्राताशेषसपक्षमहामहीभृति सततमविलङ्घिता(त)बन्धौ स्थैर्यगा-

म्भीर्यलावण्यवति महासत्त्वतयातिदुरवगाहे गुर्जरनृपतिवंशमहोदधौ श्रीसह-
जन्मा कृष्णहृदयाहितास्पदः कौस्तुभमणिरिव विमलयशोदीधितिनिकरवि-
निहतकलितिमिरनिचयः सत्पक्षो वैनतेय इवाकृष्टशत्रुनागकुलसंततिः, उ-
त्पतित एव दिनकरचरणकमलप्रणामापनीताशेषदुरितनिवहः सामन्तदद्दः
प्रतिदिनमपेतशङ्कं येन स्थितमचलगुणनिकरकेसरिविराजितवपुषा विनिह-
तारिगजकुम्भविगलितमुक्ताफलच्छलप्रकीर्णविमलयशोवितानेन रूपानुरूपं
सत्त्वमुद्वहता केसरिकिशोरकेणेवोपरिक्षितिभृताम् । येन चातिमलिनकलि-
युगतिमिरचन्द्रमसमनुदिवसमन्योन्यस्पर्धयेवाययुः कलासमूहादयो गुणाः
विक्रमानीतमदविलासगतयोऽरातिगजघटाः प्रमदाश्च । यस्य चाविरतदा-
नादिप्रवहप्रीणितार्थिमधुकरकुलस्य रुचिरकीर्तिवशासहायस्य सततमस्खलि-
तपदं प्रसरतः सद्वंशाहितशोभागौरवस्य भद्रमतङ्गजस्येव करघातविनिहत-
क्षितिभृदुन्नततनूरुहस्य रेवानिर्झरसलिलप्रपातमधुरनिनादस्य भगोद्भवाः(?)
समुन्नतपयोधराहितश्रियो दयिता इव मुदे विन्ध्यनगोपत्यकाः। यश्चोपमीयते
शशिनि सौम्यत्ववैमल्यशोभाकलाभिः, न कलङ्केन; श्रीनिकेतशोभासमुद-
याधःकृतकुलकण्टकतया कमलाकरे, न पङ्कजन्मतया; सत्त्वोत्साहविक्रमैर्मृ-
गाधिराजे क्रूराशयतया, लावण्यस्थैर्यगाम्भीर्यस्थित्यनुपालनतया महोदधौ,
न व्यालाश्रयतया; सत्कटकसमुन्नतविद्याधरावासतया हिमाचलेन खशय(प)-
रिवारतया । यस्य च सद्भोगः शेषोरगस्येव विमलकिरणमणिशताविष्कृत-
गौरवः सकलजगत्साधारणः । यस्य प्रकाश्यते सत्कुलं शीलेन प्रभुत्वमा-
ज्ञया, शास्त्रमरातिप्रणिपातेन, कोपो निग्रहेण, प्रसादः प्रदानैः, धर्मो दे-
वद्विजातिगुरुजनसपर्ययेति ॥

तस्य सूनुः प्रतप्तरुचिरकनकावदातः कल्पतरुरिवाविरतमभिरुचितफल-
प्रदः सततमृतुगणस्येव वसन्तसमयः, वसन्तसमयस्येव प्रविकसितनिबिड-
चूततरुवनाभोगः, सरस इव कमलनिवहः, कमलनिवहस्येव प्रबोधः, महा-
विषधरस्येव मणिः, मणेरिव स्वच्छतरभावः, महोदधेरिवामृतकलशः, अमृ-
तकलशस्येवामरणदायित्वप्रभावः, करिण इव मदः, प्रमदाजनस्येव विलासः,
विभवस्येव सत्पात्रविनियोगः, धर्मस्येव क्रतुः, क्रतोरिव स्वदक्षिणाकालः,

प्रेम्ण इव सद्भावः, शशिन इवामलकलासमूहः, नियतमलंकारभूतः सकलनिशाकराभिरूपवदनः शकलो वदान्यः प्रबलरिपुबलानीकसमरसमवाप्तविजयश्रीः श्रीवीतरागापरनामा श्रीजयभटः । कलिप्रतिपक्षभयाच्छरणार्थिन इव यमाश्रिताः सविनया गुणाः । स्फूर्तिविमलकीर्तिसौधमानिना येन सकलजीवलोकानन्दकारिणा कालबलाहकेनेवावन्ध्यफलं गर्जता प्रणयिनामपनीतास्तृष्णासंतापदोषाः । यश्च शूरोऽपि सततमयशोभीरुः, अपगततृष्णोऽपि गुणार्जनाविच्छिन्नतृष्णः, सर्वप्रदानशीलोऽपि परयुवतिहृदयदानपराङ्मुखः, पटुरपि परपरिवादाभिधानजडधीः । यस्य च न विरोधि रूपं शीलस्य, यौवनं सद्वृत्तस्य, विभवः प्रदानस्य, त्रिवर्गसेवा परस्परापीडनस्य, प्रभुत्वं क्षान्तेः, कलिकालो गुणानामिति ॥

तस्य सूनुः सजलघनपटलनिर्गतरजनिकरकरावबोधितकुमुदधवलयशःप्रतानास्थगितनभोमण्डलोऽनेकसमरसंकटप्रमुखागतनिहतशत्रुसामन्तकुलवधूप्रभातसमयरुदितच्छलोद्गीयमानविमलनिस्त्रिंशप्रतापो देवद्विजातिगुरुचरणकमलप्रणामोद्धृष्टवज्रमणिकोटिरुचिरदीधितिविराजितमुकुटोद्भासितश्रीर्दीनानाथातुराभ्यागतार्थिजनाक्लिष्टपरिपूरितविभवमनोरथोपचीयमानत्रिविष्टपैकसहायधर्मसंचयः प्रणयपरिकुपितमानिनीजनप्रणामपूर्वमधुरवचनोपपादितप्रसादप्रकाशीकृतविदग्धनागरिकस्वभावो विमलगुणकिरणपञ्जराक्षिप्तबहलकलितिमिरनिचयः समधिगतपञ्चमहाशब्दः श्रीदद्दः कुशली सर्वानेव राजसामन्तभोगिकविषयपतिराष्ट्रग्राममहत्तराधिकारिकादीन्समनुबोधयति—अस्तु वो विदितम्—अस्माभिरक्रूरेश्वरविषयान्तर्गतशिरीषपद्रक एष ग्रामः सोद्रङ्गः सो(स)परिकरः सर्वादानसंग्रहः सर्वदित्यविष्टिप्रातिभेदिकापरिहीणो भूमिच्छिद्रन्यायेनाचाटभटप्रवेश्य आचन्द्रार्कार्णवक्षितिस्थितिसमकालीनः पुत्रपौत्रान्वयभोग्यो जम्बूसरोवास्तव्यभारद्वाजसगोत्रकण्वसब्रह्मचारिब्राह्मण—आदित्यरवि तथा—तापिशूर—इन्द्रशूर—ईश्वर तथा—वत्ससगोत्रभट्टचध्यापक—गोपादित्य—वाड—विशाख—अग्निशर्म—भट्टिगण—द्रोण—माठरसगोत्र—विशाख—धर—नन्दि—राम—डौण्डकीयसगोत्र—तापिशर्म—द्वि. तापिशर्म—द्रोण—भट्टि—पितृशर्म—मागिस्वामि—दत्तस्वामि—लाक्ष्मण्यसगोत्र—धर—दाम-

धर—ईश्वर—कौण्डिण्यसगोत्र—बाव—घोष—शील—काश्यपसगोत्र—भट्टिदाम—वत्र—हारीतसगोत्रधर्मधर—धौम्रायणसगोत्रकर्काध्यापक—आवुक—इन्द्रशूरादिब्राह्मणेभ्यश्चतुस्त्रिंशद्भ्यो बलिचरुवैश्वदेवाग्निहोत्रपञ्चमहायज्ञादिक्रियोत्सर्पणार्थं मातापित्रोरात्मनश्च पुण्ययशोभिवृद्धये कार्तिक्यामुदकातिसर्गेणातिसृष्टो यतोऽस्मद्वंश्यैरन्यैर्वागामिभोगपतिभिः प्रबलपवनप्रेरितोदधिजलतरङ्गचञ्चलं जीवलोकम्, अभावानुगतानसारान्विभवान्दीर्घकालस्थेयसश्च गुणानाकलय्य सामान्यभोगभूप्रदानफलेप्सुभिः शशिकररुचिरं यशश्चिराय चिचीषुभिरयमस्मद्दायोऽनुमन्तव्यः पालनीयश्च । यो वाज्ञानतिमिरपटलावृतमतिराच्छिन्द्यात्, आच्छिद्यमानं नानुमोदते स पञ्चभिर्महापातकैः संयुक्तः स्यादिति । उक्तं च भगवता वेदव्यासेन व्यासेन—

'षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
कृष्णाहयो हि जायन्ते भूमिदायं हरन्ति ये ॥
बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥'

इति ॥ संवत्सरशतत्रये पञ्चाशीत्यधिके कार्तिकपूर्णिमायां लिखितं संधिविग्रहाधिकरणाधिकृतरेवेण स्वमुखाज्ञयेति ॥ सम्. ३००+८०+५, कार्तिक सु. १०+५, दिनकरचरणार्चनरतस्य श्रीवीतरागसूनोः स्वहस्तोऽयं प्रशान्तरागस्य ॥

(इण्डियन् आण्टिक्वेरी १३।८८-९०)

---

# (८१)

## कर्णाटकश्रीवेङ्कटपतिरायस्य दानपत्रम् ।

श्रीवेङ्कटेशाय नमः ।

यस्य संपर्कपुण्येन नारीरत्नमभूत्सि(च्छि)ला ।
यदुपास्यं सुमनसां तद्वस्तुद्वन्द्वमाश्रये ॥
यस्य द्विरदवक्त्राद्याः पारिषद्याः परश्शतम् ।
विघ्नं निघ्नन्ति भजतां विष्वक्सेनं तमाश्रये ॥
जयति क्षीरजलधेर्जातं सम्वे(न्ये)क्षणं हरेः ।
आलम्बनं चकोराणाममरायुष्करं महः ॥
पौत्रस्तस्य पुरूरवा भू(बु)धसुतस्तस्यायुरस्यात्मजः
संजज्ञे नहुषो ययातिरभवत्तस्माच्छ(च) पूरुस्ततः ।
तद्वंसे(शे) भरतो बभूव नृपतिस्तत्संततौ शंतनु-
स्तत्तुर्यो विजयोऽभिमन्युरुदभूत्तस्मात्परीक्षिस्ततः ॥
नन्दस्तस्याष्टमोऽभूत्समजनि नवमस्तस्य राज्ञश्चलिक्क-
क्ष्मापस्तत्सप्तमः श्रीपतिरुचिरभवद्राजपूर्वो नरेन्द्रः ।
तश्याशि(स्यासी)द्विज्जलि(ले)न्द्रो दशम इह नृपो वीरहेमालिराय-
स्तार्तीई(यी)को मुरारौ कृतनतिरुदभूस्त(त्त)स्य मायापुरीशः ॥
तत्तुर्योऽजनि तातपिन्नमहीपालो निजालोकन-
त्रस्ता(त्रस्ता)मित्रगणस्ततोऽजनि हरन्दुर्गाणि सपा(सा)हिताात् ।
अन्नै(ह्न)केन स सोमिदेवनृपतिस्तस्यैव जज्ञे सुतो
वीरो राघवदेवराडिति ततः श्रीपिन्नमोऽभून्नृपः ॥
आरवीटिनगरीविभोरभूद्य(द)स्य बुक्कधरणीपति[ः] सुतः ।
येन साळु(व)नृसिंहराज्यमप्येधमानमहसा स्थिरीकृत[म्] ॥

---

१. सोमाख्यम्. २. अर्जुनः. ३. इकारान्तोऽपि परीक्षिशब्दोऽस्ति. 'जनमेजय इव परीक्षितनयः' दमयन्तीश्लेषात्.

स्वा(स्वः)कामिनीं स्व(स्व)तनुकान्तिभिरालिपन्तीं
बुक्कावनीपतिलको भु(बु)धकल्पशाली।
कल्याणिनीं कमलनाम इवाब्धिकन्यां
बल्लाम्बिकामुदवहद्बहुमान्यशीलाम् ॥
सुतेव कलशाम्बुधे[:] सुरमिलाङ्गुगं माधवा-
त्कुमारमिव शंकरात्कुलमहीभृतः कन्यका।
जयन्तममरप्रभोरपि शचीव बुक्काधिपा-
च्छ्रुतं जगति बल्लमालभत रामराजं सुतम् ॥
सहस्रै(स्रैः) ससत्या सहितमपि यः सिन्धुजनुषां
सपातस्यानीकं समिति भुजशौर्येण महता।
विजित्यादत्तेश्मा(सा)दवनिगिरिदुर्गं विभुतया
विधूतेन्द्र[:] कासप्पुडयमपि विद्राव्य सहसा ॥
कन्दनवोलिदुर्गमुरुकंदलदभ्युदयो
बाहुबलेन यो बहुतरेण विजित्य हरेः।
संनिहितस्य तत्र चरणाम्बुषु भक्ततया
ज्ञातिभिरर्पितं सुघयति स निषेव्य विषम् ॥
श्रीरामराजक्षितिपस्य तस्य चिन्तामणेरर्थिकदम्बकानाम्।
लक्ष्मीरिवाम्भोरुहलोचनस्य लक्काम्बिकामुष्य महिष्यलासीत् ॥
तस्याधिके[:] समभवस्त(स्त)नयस्तपोभि[:]
श्रीरङ्गराजनृपति[:] शसि(शि)वंशदीपः।
आसन्समुल्लसति धामनि यस्य चित्रं
नेत्राणि वैरिसुदृशां च निरञ्जनानि ॥
सतीं तिरुमलाम्बिकां चरितलीलयारुन्धती-
प्रथामपि तितिक्षया वसुमतीयशो रुन्धतीम्।
हिमांशुरिव रोहिणीं हृदयहारिणीं श(स)द्गुणै-
रमोदत सधर्मिणीमयमवाप्य वीराग्रणीः ॥

१. पुष्पाङ्गुगं कामम्.

रचितनयविचारं रामराजं च धीरं
वरतिरुमलरायं वेंकटाद्रिक्षितीशम् ।
अजनयत स एतानानुपूर्व्या कुमारा-
निह तिरुमलदेव्यामेव राजा महौजाः ॥

सकलभुवनकण्टकानरातीन्समिति निहत्य स रामराजवीरः ।
भरतमनुभगीरथादिराजप्रथितयशाः प्रशशास चक्रमुर्व्याः ॥

वितरणपरिपाटीं यस्य विद्याधरीणां
नखरमुखरवीणानादगीतां निशम्य ।
अनुकलमयमाबालाम्बुबिम्बापदेशा-
दमरनगरशाखी लज्जया मज्जतीव ॥

व्यराजत श्रीवरवेंकटाद्रिराजक्षितौ लक्ष्मणचारुमूर्तिः ।
ज्याघोषदूरीकृतमेघनाद[ः] कुर्वन्सुमित्राशयहर्षपोषम् ॥

त्रिषु श्रीरङ्गक्ष्मापरिवृढकुमारेष्वधिरणं
विजित्यारिक्ष्मापांस्तिरुमलमहारायनृपतिः ।
महौजाः साम्राज्ये सुमतिरभिषिक्तो निरुपमे
प्रशास्त्यूर्वीं सर्वामपि तिसृषु मूर्तिष्विव हरिः ॥

यशश्वि(स्वि)नामप्रसरस्य यस्य पट्टाभिषेके सति पार्थिवेन्दोः ।
दानाम्बुपूरैरभिषिच्य[च्य]माना देवीपदं भूमिरियं दधाति ॥

सामादयो विधिमुखादिव सत्यवाचा(चः)
सामाद्युपायनिवहा इव सांयुगीनात् ।
रामादयो दशरथादिव राजमौले-
स्तस्मादमेय[य]शसस्तनया बु(ब)भू[वुः] ॥

राजा ततोऽभूद्रघु[नाथ]नामा श्रीरङ्गराय[ः] श्रितपारिजातः ।
श्रीरामराज[ः] शिशिरांशुरुर्व्या विख्यातिमान्वेंकटदेवरायः ॥

---

१. लक्ष्मणः सौमित्रिः, लक्ष्मणं चिह्नं च. २. मेघनादो रावणिः, गर्जितं च. ३. सुमित्रा दशरथपत्नी, शोभनानि मित्राणि च.

श्रीरङ्गराय[:] सहजेषु तेषु पारं गतो नीतिपयःपयोधेः।
अष्टासु दिक्षु प्रथितः स लेभे पट्टाभिषेकं पेनुगोण्डराज्ये ॥
अथ श्रीवेंकटपतिदेवरायो नयोज्ज्वलः।
अवनीमसि(शि)षत्कीर्त्या दिशो दश विशोभयन् ॥
तज्ज्यायसः सु[र]द्रुम[ल]ज्जावहचरितरामराजविभोः।
जातस्तिरुम[ल]राजख्यातश्रीरङ्गरायोऽपि ॥
तयोः श्रीरङ्गराजस्य तनया विनयाधिकाः।
अजायन्त दयावन्त[:] श्रुतवन्तो यशस्विनः ॥
श्रीरङ्गरायनृपतेस्तनयेषु तेषु
पारं गिरामधिगतः कविपुंगवानाम्।
रत्नेषु कौस्तुभ इवाम्बुधिसंभवेषु
श्रीरामरायनृपति[:] सुचिरं वि(व्य)लासीत् ॥
पूर्वं विश्रु(श्रु)तरामराजनृपते[:] श्रीरामभद्राकृतेः
कल्याणोदयशालिनस्तनुभवा[:] पञ्च प्रपञ्चानने।
दक्षा नीतिपथानुगाः समभवन्क्षीरापगाकामिनो
गीर्वाणालयभूरुहा इव बुधश्रेणीष्टदानोत्सुकाः ॥
प्रज्ञाविजितसुग्रीवाः प्राज्ञावनकृताग्रहाः।
सर्वे ते विबुधग्राह्या गुणै रुचिरविग्रहाः ॥
विख्यातचर्येषु नृपेषु तेषु श्रीरङ्गराज[:] शिशिरांशुरुर्व्याः।
विश्वत्रये विश्रुतकीर्तिरासीत्सौरेषु शालेष्विव पारिजातः ॥
यद्भेरीघनभांकृतिश्रवणतो भीत्या महत्या रणे
प्रत्यर्थिक्षितिपैः फ(प)लायनपरैर्मुक्ता लुठन्त[:] श्रमात्।
कान्ताराभरणीभवन्ति कलशच्छत्रध्वजाङ्काञ्चिता-
न्युन्मार्जत्यधिभूपदानि तदनुव्रज्जा(ज्या)भिया किं हयाः ॥
श्रीरङ्गराजस्य तपोविशेषैः संतोषणः शेषगिरीश्वरस्य।
कारुण्यभूम्ना कमनीयशोभौ पुत्रावहू(भू)तां पुरुहूतभोगौ ॥

१. सुरसंबन्धिवृक्षेषु.

पे(पि)दवेंकटेन्द्रपिनवेंकटाभिराडिति नामकौ प्रकृतिपालनोत्सुकौ ।
खरदूषणप्रहृतिदक्षिणावुभौ ददतः(?) प्रमोदमिव रामलक्ष्मणौ ॥
श्रीशाली पिदवेंकटेन्द्रनृपतिर्जे(र्ज्ये)ष्ठो वयोभिस्तयोः
शौर्यौदार्यगभीरताधृतिकलापूर्वैश्च सर्वैर्गुणैः ।
यस्यारातिनृपालभेदनकलायात्रासु सेनारजः-
पूरैर्भूर्जलधिर्मवेदिति हरिश्चित्तेश्च(?) धत्ते स्थितिम् ॥
श्रीरङ्गराजेन्द्रकुमारकेऽस्मिन्वीरोत्तमे वेंकटदेवराये ।
पट्टाभिषिक्ते पे(पि)नुगोण्डराज्ये तदाभिषिक्ताः सुधियोऽपि हेम्ना ॥
यथा रघुकुलोद्वह[ः] स्वयमरुन्धतीजानिना
स्वगोत्रगुरुणा सुधीतिलकतातयार्येण यः ।
यथाविधि यशश्वि(स्वि)ना विरचिताभिषेक[ः] क्षणा-
द्विभिद्य यवनाशरान्विजयते प्रशासन्महीम् ॥
यथाविधि महीसुरोत्तमकृताभिषेकोत्सवे
यदीयकरवारिदे कनकवृष्टिदे सर्वतः ।
यशोमयतरङ्गिणी दशदिगन्तरे जृम्भते
सतां प्रशमितोऽभवत्कृपणतोऽरुदावानलः ॥
यस्मिन्वेंकटरायभूभृति वहत्युर्वीं मुदा निर्भरां
कूर्मो वेंकटनाथतामुपगतस्तद्रक्षणे दीक्षितः ।
शेषोऽप्येत्यमथवेष(?)मचला दुर्गत्वमप्याश्रिताः
संतोषं दधते भजन्ति करिणां रूपेण चाशागजाः ॥
वाराशिगाम्भीर्यविशेषधुर्यश्चौराशिदुर्गैकविभालवर्यः ।
पराष्टदिग्रायमनःप्रकामभयंकरः शार्ङ्गधरान्तराण्डा(क)ः ॥
हतरिपुरनिमेषानोकहो याचकानां
होसविरुदर(?)गण्डो रायराहुत्तमिण्डः ।
महितचरितधन्यो मन्नियान्शामुलादि-
प्रकटितविरुदश्रीः पाटितारातिलोकः ॥

---

१. खरदूषणौ राक्षसौ, खरो दूषणश्च.

कोपाद्भूनमहेभकुम्भविगलन्मुक्ताफलालंकृत-
स्फीतास्त्रस्रुतिमण्डिता अपि मुहुर्येनोर्जितेन स्वयम् ।
उन्नालैरिव पङ्कजैः पुनरपि च्छिन्नैः शिरोभिर्वि(र्द्वि)षां
विक्रान्तेन विभूषिता रणभुवस्त्यक्ता नरैः कातरैः ॥
इत्थं तस्य चिरंतनो द्विजवरः स[1]·········त्तायुध-
प्रीति(?)प्रेतनरेन्द्रसत्कृति[2]·········प्रसिद्धो गुणैः ।
यस्याद्यापि रणाङ्गणे विलसितं संसूचयन्ति द्विषः
[3]····ष्यच्छोणितमर्मरा रणभुवः प्रेतपृ(प्रि)याः प्रायशः ॥
शब्दस्यार्थ इव प्रह्लादनपटोर्मार्गस्त्रयीसंज्ञितो
धर्मः सेव्यविशुद्धभावसरलो न्यायस्य मूलं सतः ।
प्रामाण्यं प्रगत[4]···········यः साध्यस्य संसिद्धये
तस्य[5]················तः पृ(प्रि)यसखः श्रीसंङ्कुकाख्यो नृपः ॥
द्रेङ्गिणी नाम तस्यासीद्धर्मपत्नी द्विजोद्भवा ।
तस्यां समभवद्वीरः[6]····कृतगुणाकरः ॥
यशस्वी रूपवान्दाता श्रीमाञ्छिवगणो नृपः ।
शिवस्य नूनं स गणो येन तद्भक्ततां गतः ॥
खड्गाघातदलत्तनुत्रविचटद्वह्निस्फुलिङ्गोज्ज्वल-
ज्वालादग्धकबन्धकण्ठकुहरप्रोन्मुक्तनादोल्बणे ।
नाराचैर्व्यथिताननाकुलखगप्रोद्वान्तरक्तासवं
प्रीतप्रेतजनो रणे रतधिया येनासकृच्चर्वितः(?) ॥
ज्ञात्वा जन्म जराविपत्तिमरणक्लेशैरशेषैश्चितं
स्वार्थस्याप्ययमेव योग उचितो लोके प्रसिद्धः सताम् ।
तेनेदं परमेश्वरस्य भवनं धर्मात्मना कारितं
यं दृष्ट्वैव समस्तलोकवपुषां नष्टं कलेः कल्मषम् ॥

---

१. 'सन्वीर्यवत्ता' इति भवेत्. २. 'मुदः पात्रं' इति भवेत्. ३. 'शुष्यत्' इति पूरितम्. ४. 'प्रमतस्य हेतुविषयः' इति भवेत्. ५. 'तस्याभूदतिसंयतः' इति पूरितम्. ६. 'सुतः' इति भवेत्.

पुष्पाशोकसमीरणेन सुरभावुत्फुल्लचूताङ्कुरे
काल्ये(ले) मत्तविलोलषट्पदकुलैर्व्यारुद्धदिङ्मण्डले ।
जातेऽपाङ्गनिरीक्षणैककथके नारीजनस्य स्मरे
क्लृप्तं सद्भवनं भवस्य सुधिया तेनेह कण्वाश्रमे ॥
काल्ये(?)न्दोलाकुलानां तनुवलनभरात्प्रस्फुटत्कञ्चुकानां
कान्तानां दृश्यमानैः[1]..........भोजि(गि)संभोगचिह्नैः ।
यस्मि[2].......भिमुख्यस्थितिझटिति नमच्छ(त्स)स्मितार्धेक्षणानां
भ्रूभङ्गैरेव रम्यैर्हृदयविनिहितः सूच्यते प्रेमबन्धः ॥
मत्तद्विरेफझङ्कारि सहकारविराजिताः ।
संवीक्ष्य ककुभो बाष्पं मुञ्चन्ति पथिकाङ्गनाः ॥
धूपादिगन्धदीपार्थं खण्डस्फुटितहेतुना ।
ग्रामौ दत्तौ क्षयो निमिः(?) सर्वाङ्गा चोणिपद्रकौ ॥
पालयन्तु नृपाः सर्वे येषां भूमिरियं भवेत् ।
एवंकृते ते धर्मार्थं नूनं यान्ति शिवालयम् ॥
संसारसागरं घोरमनेन धर्मसेतुना ।
तारयिष्यत्ययं नूनं जन्यौ चात्मानमेव च ॥
तावत्ससागरां पृथ्वीं सनगां च सकाननाम् ।
यावदिन्दुस्तपे[3] भानुस्तावत्कीर्तिर्भविष्यति ॥
संवत्सरशतैर्यातैः सपञ्चनवत्यर्गलैः ।
सप्तभिर्मालवेशानां मन्दिरं धूर्जटेः कृतम् ॥
अलुब्धः पृ(प्रि)यवादी च शिवभक्तिरतः सदा ।
कारापको शब्दगुणो धार्मिकः शंसितव्रतः ॥
दक्षः प्राज्ञो विशुद्धात्मा शूर(लि)भक्तः पृ(प्रि)यंवदः ।
[4]....स्तो[5]........कश्चासिन्कायस्थो गोमिकाङ्गजः ॥

---

१. 'कुचकलशभुजां' इति पूरितम्. २. 'न्प्रीत्याभिमु' इति भवेत्. ३. 'स्तपेत्' इति भवेत्. ४. 'आसी' इति भवेत्. ५. 'ऽत्र रीपुक' इति पूरितम्.

उत्कीर्णं शिवनागेन द्वारशिवस्य सूनुना।
.................................................... ॥

सूनुना भट्टसुरमेर्देवटेन श्रुतोज्ज्वलाः।
श्लोका अमी कृता भक्त्या मौलिचन्द्रसुधाभुजः॥

.................................................... ।

कृष्णसुतो गुणाढ्यश्च सूत्रधारोऽत्र णण्णकः॥
एतत्कण्वाश्रमं ज्ञात्वा सर्वपापहरं शुभम्।
कृतं हि मन्दिरं शंभोर्धर्मकीर्तिविवर्धनम्॥
यतिहीनं शब्दहीनं मात्राहीनं तु यद्भवेत्।
तत्सर्वं साधुचित्तेन मर्षणीयं बुधैः सदा॥

(इण्डिअन् आण्टिक्केरी १२।१६३-६५)

# (८३)

## उदयपुराधीशजयसिंहवल्लभानां शासनपत्रम्।

स्वस्ति श्रीमद्विजयोदयपुराद्भगवत्स्वामिमहासेनपादानुध्यातानां सप्तलोकमातृभिः सप्तमातृभिः परिवर्धितानां भगवन्नारायणप्रसादसमाना(सा)दितवराहलाञ्छनेक्षणक्षणवशीकृताशेषमहीक्षितां मानव्यसगोत्राणां हारीतीपुत्राणामश्वमेधावभृथस्नानपवित्रीकृतगात्राणां च(चा)लुक्यानां कुलमलंकरिष्णोश्चतुरुदधिसलिलसमुल्लङ्घितकीर्तेः श्रीकीर्तिवर्मणः पौत्रः समाश्रितानां कामधेनुचरितस्यानेकरिपुदुर्गप्रमथनावाप्तविषमसिद्धेर्यस्य च शस्त्रमापन्नत्राणाय, विग्रहः पराभिमानभङ्गाय, शिक्षितं विनयाय, विभवार्जनं प्रदानाय, प्रदानं धर्माय, धर्मः श्रेयोवाप्तये, तस्य तनयः शशधर इव सर्वलोकहृदयानन्दकरः, सुरगज इवाविच्छिन्नदानकि(क्लि)न्ननिकेतः, चक्रधर इवाप्रतिहतचक्रः, द्रोण इव कृपानुगतः, स्वबाहुबलोपार्जितसर्वसिद्धिः समर-

१. अस्योदयपुरस्य सत्ता मद्राजराजधान्यां कृष्णापरिसरे नूर्जिविद्परगणेऽस्तीति बोध्यम्. २. 'दानं गजमदे त्यागे' इति मेदिनिः. ३. चक्रं सैन्यं राष्ट्रम्, अस्त्रं च. ४. कृपा दया, कृपो द्रोणाचार्यश्यालकः.

शतसंकटोत्कण्ठविजयवीरधवजः श्रीजयसिंहवल्लभमहाराजः परमब्रह्मण्यो मातापितृपादानुध्यातः सर्वानेवमाज्ञापयति—अस्तु वो विदितम्—अस्माभिर्गुद्दहारविषये मर्दावल्लीपूर्वपार्श्वे पेणुकपङ्कुनाम ग्रामग्रामो विष्णुनिमित्तं विजयराज्यसंवत्सरेऽष्टादशे पोगुल्लूरवास्तव्याय भारद्वाजसगोत्राय भारद्वाजसूत्रस्याधीतवेदद्वयस्य शिवशर्मणः पौत्राय गृहीतसाहस्रस्याधिगतवेदद्वयस्य देवशर्मणः पुत्राय षट्कर्मनिरतायाशीतितर्काय गुप्तशर्मणे सर्वकरपरिहारेणाग्रहारीकृत्य प्रतिग्रहो दत्तो न कैश्चिदप्यस्योपरि बाधा करणीया ॥

उक्तं च भगवता वेदव्यासेन व्यासेन—

बहुभिर्वसुधा दत्ता बहुभिश्चानुपालिता ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
षष्टिं वर्षसहस्राणि स्वर्गे मोदति(?) भूमिदः ।
आक्षेप्ता(च्छेत्ता) चानुमन्ता च तान्येव नरके वसेत् ॥
मन्त्री पुरोहित[श्चा]स्य यथेन्द्रस्य बृहस्पतिः ।
आज्ञप्तिः(?) शिय(व)शर्मास्य वाजपेय········ ॥

(इण्डिअन् आण्टिक्वेरी १३।१३७–३८)

## ( ८४ )

## वाकाटकदेशमहाराजश्रीप्रवरसेनस्य शासनपत्रम् ।

ओं ओं स्वस्ति प्रवरपुरादग्निष्टोमाप्तोर्या(?)मोक्थ्यषोडश्यतिरात्रवाजपेयबृहस्पतिसवसा(ना)दास्कचतुरश्वमेधयाजिनः वि[ष्णुवृ]द्धसगोत्रस्य सम्राा[जो] वाकाटकानां महाराजश्रीप्रवरसेनस्य सूनोरत्यन्तस्वामिमहाभैरवभक्तस्यांसभारसंनिवेशितशिवलिङ्गोद्वहनशिवसुपरितुष्टसमुत्पादितराजवंशानां पराक्रमाधिगतभागीरथ्यामलजलमूर्धाभिषिक्तानां दशाश्वमेधावभृथस्नातानां भारशिवानां महाराजभवनागदौहित्रस्य गौतमीपुत्रस्य पुत्रस्य(?) वाका-

१. अयं च वाकाटकदेशो महादेवपर्वतगोदावरीनद्योर्महानद्यजण्टपर्वतयोश्चान्तराले वर्तते इति डॉक्टर्बूल्हरव्याख्यानतोऽवगम्यते.

टकानां महाराजश्रीरुद्रसेनस्य सूनोरत्यन्तमाहेश्वरस्य सत्यार्जवकारुण्यशौर्यविक्रमनयविनयमाहात्म्याधि(दि)मत्त्वहात्रा(?)गतभक्तित्वधर्मविजयित्वमनोनैर्मल्यादिगुणैः समुपेतस्य वर्षशतमभिवर्धमानकोशदण्डसाधनसंतानपुत्रपौत्रिणो युधिष्ठिरवृत्तेर्वाकाटकानां महाराजश्रीपृथिवि(वी)षेणस्य सूनोर्भगवतश्चक्रपाणेः प्रसादोपार्जितश्रीसमुदयस्य वाकाटकानां महाराजश्रीरुद्रसेन[स्य] सूनोर्महाराजाधिराजश्रीदेवगुप्तसुतायां प्रभावतीगुप्तायामुत्पन्नस्य शंभोः प्रसादधृतिकार्तयुगस्य वाकाटकानां परममाहेश्वरमहाराजश्रीप्रवरसेनस्य वचना[त्] भोजकटराज्ये मधुनदीतटे चर्माङ्कनामग्रामो राजमानिकभूमिसहस्रैरष्टाभिः ८००० शत्रुघ्नराजपुत्रकोण्डराजविज्ञप्त्या नानागोत्रचरणेभ्यो ब्राह्मणेभ्यः सहस्राय दत्तः । यतोऽस्मत्संतका(?)सर्वाध्यक्षाधियोगनियुक्ता आज्ञासंचारिकुलपुत्राधिकृता भटाश्च विश्रुतपूर्वयाज्ञया ज्ञापयितव्याः—विदितमस्तु वो यथेहास्माकं मनोधर्मायुर्बलविजयैश्वर्यविवृद्धये इहामुत्र हितार्थमात्मानुग्रहाय वैजयिके धर्मस्थानेऽपूर्वदत्त्योदकपूर्वमतिसृष्टः । अथास्योचितां पूर्वराजानुमतां चातुर्वैद्यग्राममर्यादान्वितरामः । तद्यथा—अकरदायी, अभटच्छात्रप्रावेश्यः, अपारम्परगोबलीवर्दः, अपुष्पक्षीरसंदोहः, अचरासनचर्माङ्गार[ः], अलवणक्लिन्नक्रेणिखनकः(?), सर्ववेष्टिपरिहारपरिहृ(ह)तः, सनिधिः सोपनिधिः, सक्लि(क्ल)प्तोपक्लि(क्ल)प्तः, आचन्द्रादित्यकालीयः, पुत्रपौत्रानुगमकः, भुज(ञ्ज)तां न केनचिद्व्याघातः कर्तव्यः सर्वक्लि(क्रि)याभिः स रक्षितव्यः पर(रि)वर्धयितव्यश्च । यश्चायं(श्चेदं) शासनमगणयमानो(नः) स्वल्पामपि [प]रिबाधां कुर्यात् कारयिता वा तस्य ब्राह्मणैर्वेदितस्य सदण्डनिग्रहं कुर्याम । अस्मिंश्च धर्मावरकरणेऽतीतानेकराजदत्तसंचिन्तनपरिपालनं कृतपुण्यानुकीर्तनपरिहारार्थं न कीर्तयामः—

व्यासगीतौ चात्र श्लोकौ प्रमाणीकर्तव्यौ—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
गवां शतसहस्र[स्य] हन्तुर्हरति दुष्कृतम् ॥

षष्टिं वर्षसहस्राणि स्वर्गे मोदति(?) भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥' इति ।

शासनस्थितिश्चेयं ब्राह्मणैरीश्वरैश्चानुपालनीया । तद्यथा—राजा सप्ताङ्गे राज्येऽद्रोहप्रवृत्तानां ब्रह्मघ्नचौरपारदारिकराजापथ्यकारिप्रभृतीनां संग्रामं कुर्वतामन्यग्रामेष्वनपराद्धानामाचन्द्रादित्यकालीयः। अतोऽन्यथाकुर्वतामनुमोदितव्यो(?) राज्ञो भूमिच्छेदं कुर्वतोऽस्तेपमिति(?) । प्रतिग्राहिणश्चात्र वारनियुक्ताः शाट्यायनः गणार्यः वात्स्यदेवार्यः भारद्वाजकुमारशर्मार्यः पाराशर्यगुहशर्मा काश्यपदेवार्यः महेश्वरमात्रार्यः कौण्डिन्यरुद्रार्यः सोमार्यो हरिशर्मार्यो भारद्वाजकुमारशर्मार्यः कौण्डिन्यमातृशर्मा वरशर्मा गौण्डशर्मा नागशर्मा भारद्वाजशान्तिशर्मा रुद्रशर्मा वात्स्यो भोजकदेवार्यो भवशर्मा देवशर्मा भारद्वाजमोक्षशर्मा नागशर्मा रेवतीशशर्मा धर्मार्यो भारद्वाजशर्मार्यो नन्दनार्यो मूलशर्मेश्वरशर्मा वरशर्मा वात्स्यस्कन्दार्यो भारद्वाजवप्पार्यो धर्मार्य आत्रेयस्कन्दार्यो गोतमसोमशर्मार्यो भर्तृशर्मार्यो रुद्रशर्मार्यो मघार्यो मातृशर्मार्य ईश्वरशर्मार्यो गोतमसगोत्रमातृशर्मार्यः कौण्डिन्यदेवशर्मार्यो वरशर्मार्यो रोहार्यो गोतमसगोत्रस्वामिदे[वा]र्यो रेवतीशर्मार्यो ज्येष्ठशर्मार्यः शाण्डिल्यकुमारशर्मार्यः स्वातिशर्मार्यः शाट्यायनकौण्डार्यप्रभृतयः सेनापतौ छत्रवर्मणि संवत्सरेऽष्टादशे[1] १८ ज्येष्ठमासशुक्लपक्षे त्रयोदश्यां शासनं लिखितमिति ॥

वाकाटकललामस्य क्रमप्राप्तनृपश्रियः ।
राज्ञः प्रवरसेनस्य शासनं रिपुशासनम् ॥

(इण्डिअन् आण्टिक्वेरी १२।२४३–४५)

---

१. अयं चाष्टादशः संवत्सरः प्रवरसेनराज्यारम्भतो बोध्यः. तद्राज्यमीशाब्दीयपञ्चमशतके आसीदिति डॉक्टर्बूल्हरसिद्धान्तः.

# (८५)

## कान्यकुब्जेश्वरश्रीगोविन्दचन्द्रमहाराजानां शासनपत्रम्।

ओं ओं नमो भगवते वासुदेवाय।

तमाद्यं सर्वदेवानां दामोदरमुपास्महे।
त्रैलोक्यं यस्य वक्तीव क्रोडान्तःस्थं वलित्रयी॥

वंशे गाहडवालाख्ये बभूव विजयी नृपः।
महिअलसुतः श्रीमान्नलना भागसंनिमः॥[1]

याते श्रीभोजभूपे विबुधवरवधूनेत्रसीमातिथित्वं
श्रीकर्णे कीर्तिशेषं गतवति च नृपे क्ष्मात्यये जायमाने।
भर्तारं यं धरित्री त्रिदिवविभुनिभं मीतियोगादुपेता
त्राता विश्व(श्वा)सपूर्वं समभवदिह स क्ष्मापतिश्चन्द्रदेवः॥

द्विषत्क्षितिभृतः सर्वान्विधाय विवशान्वशे।
क(का)न्यकुब्जेऽकरोद्राजा राजधानीमनिन्दिताम्॥

तेनाजनि द्विषदिलापतिदन्तिसिंहः
क्षोणीपतिर्मदनपाल इति प्रसिद्धः।
येनाक्रियन्त बहुशः समरप्रबन्धाः
संनर्तितप्रहतशत्रुकबन्धबन्धाः॥

तस्मादजायत नरेश्वरवृन्दवन्द्य-
पादारविन्दयुगलो ज्वलितप्रतापः।
क्षोणीपतीन्द्रतिलको रिपुरङ्गभङ्गी
गोविन्दचन्द्र इति विश्रुतराजपुत्रः॥

संवत्साहस्रिके एकषष्ट्युत्तरशता(भ्य)धिके।
पौषमासे शुक्लपक्षे पञ्चम्यां रविदिनेऽङ्के॥

---

१. द्वाविंशे लेखे कान्यकुब्जेश्वरचन्द्रदेवस्य महीचन्द्रात्मजत्ववर्णनेन 'महीचन्द्र' 'महीपाल' इति पाठो भवेत्.

संवत् ११६१ पौषसुदी ९ रवौ । अद्येहासतिकायां सकलकल्मषक्षयकारिण्यां यमुनायां स्नात्वा यथाविधानं मन्त्रैर्देवर्षिमनुष्यभूतपितृंस्तर्पयित्वा सूर्यं भट्टारकं सर्वकर्तारं भगवन्तं शिवं विश्वाधारं वासुदेवं समभ्यर्च्य हुतवहं हुत्वा जीआवतीपट्टलायां वसभीग्रामे समस्तमहत्तमजनपदान्संबोधयति—यथा ग्रामोऽयं मया क्षेत्रवनमधूकाम्रविशति अथू(?)प्रस्थाक्षपटलप्रस्थाकारतुरुष्कदण्डवरवझा(?)हिरण्यसर्वादायसंयुक्तः पूर्वस्याम्—वाधुमउअग्रामः, पश्चिमायाम्—वाडथलाग्रामः, दक्षिणस्याम्—पुसौलीग्रामः, उत्तरस्याम्—सावधडग्रामः, एवं चतुराघाटविशुद्धो मातापित्रोरात्मनश्च यशोपुण्यविवृद्धये जलबुद्बुदाकारं जीवितं दानभोगफलां लक्ष्मीं ज्ञात्वा बह्वृचशाखिने गौतमगोत्राय गौतमावितथाङ्गिरसत्रिप्रवराय मेनेपौत्राय कल्पेपुत्राय ज्योतिर्विदे ब्राह्मणाल्हेकाय महाराजपुत्रश्रीमद्गोविन्दचन्द्रदेवेनोत्तरायणसंक्रान्तौ कुशपूतेन हस्तोदकेन चन्द्रार्कं यावच्छासनत्वेन प्रदत्तः ।

ये यास्यन्ति महीभृतो मम कुले किं वा परस्मिन्पुर-
स्तस्मिन्नेष मयाञ्जलिर्विरचितो नादेयमस्मात्कियत् ।
दूर्वामात्रमपि स्वधर्मनिरता दत्तं मया पाल्यतां
वायुर्वास्यति तप्स्यति प्रतपनः श्रुत्वा मुनीनां वचः ॥

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्टायां कृमिर्भूत्वा पितृभिः सह मज्जति ॥
भूमिं यः प्रतिगृह्णाति यस्तु भूमिं प्रयच्छति ।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गवासिनौ ॥
तडागानां सहस्रेण वाजपेयशतेन च ।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति ॥

लिखितं च पुरोहितश्रीजागूक—महत्तक—श्रीवाल्हण—प्रतिहारश्रीगौतम—एषां संमत्या पण्डितश्रीकूकेपुत्रविजयदासेनेति ॥

(इण्डिअन् आण्टिकेरी १४।१०—३४)

---

# ( ८६ )

## श्रीसिङ्घणदेवमहाराजानां ताम्रपत्रम् ।

स्वस्ति ।

दीर्घायुरुन्नततरप्रतापः पृथिवीमिमाम् ।
रक्षतादक्षताचारः प्रजानाथः प्रजाहितः ॥
निर्विघ्नं पातु विश्वस्य गोप्ता स धरणीधरः ।
धर्मद्रुहां दमयिता देवस्त्याग(?)चतुर्भुजः ॥
अस्ति क्षत्रियरत्नानामाकरः सागरायति ।
कुलं कलचुरीत्याख्यं विख्यातं भुवनत्रये ॥
तदन्ववाये राजाभूत्कृष्णः कृष्ण इवापरः ।
अपि बालस्य चरितमद्भुतं यस्य गीयते ॥
स जोगममहीपालं कालं वैरिमहीभुजाम् ।
वीरैकवन्द्यमहसां पात्रं पुत्रमजीजनत् ॥
दाक्षिण्यजलधेस्तस्मात्क्षीरोदादिव चन्द्रमाः ।
अजायत जगत्कान्तः परमर्दिमहीपतिः ॥
तस्मान्मेरोरिवाशेषव्यापिनां तेजसां निधिः ।
उदितः सुभटादित्यो विज्जणः पृथिवीपतिः ॥

स च

आचक्राम न कां दिशं न बुभुजे कं देशमुन्मूल्यां-
चक्रे कं न रिपुं बभार न रिपूनप्याश्रितान्कानिह ।
संचिक्ये न धनानि कानि न ददौ किं दातमीजे मखैः
कैर्नायं गुणरत्नरोहणगिरिः श्रीविज्जणक्ष्मापतिः ॥
चाण्डयं पाण्ड्यस्त्यजति भजते चोलभूपश्चलत्वं
भङ्गं वङ्गः सरति भरते मालवः कालशङ्काम् ।
भूप(पा)श्चान्ये जयति जगतीं विज्जणक्षोणिपाले
किं नो दुर्गं जहति जिहते कां दिशं कांदिशीकाः ॥

सर्वाशातिमिरं नुदन्मुकुलयन्सर्वद्विषद्भूभुजां
हस्ताम्भोजततीर्जगद्धवलयन्सर्वं स्वकीर्त्योजसा ।
सर्वोर्वीव(ध)रमूर्धपीठनिहितश्रीपादरम्योदयो
राजा **सोम** उदैत्कलानिधिरितः पूर्णस्फुरन्मण्डलः ॥
वार्ता कैव रणोत्सवेषु निनदद्भेरीरवे भैरवे
दूष्येषु द्रुघणाहतैरपि कृतैस्तैः कीलकोलाहलैः ।
यद्यात्रासु विदुद्रुवुर्न रिपवः के कोशदेशत्यजः
केषां वा न विदीर्यते स्म हृदयं मूर्छानिमीलद्दृशाम् ॥
यत्र पितरीव पातरि यम इव यन्तरि जनो हि दण्डधरे ।
लोकद्वयोचितानां सौख्यानां पारदृश्वाभूत् ॥
ततस्तस्यानुजः श्रीमाञ्जातः **संकमभूपतिः** ।
प्रसन्नपुण्यलक्ष्माङ्कः प्रकृत्यैव दयापरः ॥
तत **आहवमल्लो**ऽभूद्राजा तत्सोदरः सुधीः ।
अशेषैरप्यशेषं च जगदाह्लादयन्गुणैः ॥
तस्य श्रीकन्यसो भ्राता गुणै रत्नाकरोपमः ।
अभूत्सिंघणदेवाख्यो जगदाह्लादकारकः ॥
यस्य नामाक्षरैरेव शरैरिव भयंकरैः ।
प्रणम्य प्राणरक्षायै यतन्ते केवलं द्विषः ॥
किं नाम चित्रचरितः स्तूयते राजकुञ्जरः ।
नित्यप्रवृत्तदानोऽपि नैति यो मत्तवाच्यताम् ॥

स खलु निखिलप्रजानुरागैकप्रयोजनगुप्र(प्रगु)णीकृताजानिकागन्तुकोम(न)यगुणग्रामसमवायसाहाय्यकसमुपचीयमानसंततसमाराध्यमानदेवद्विजप्रसादनिरन्तरनिरन्तरायपरिवर्धमानसाम्राज्यलक्ष्मीविलाससुखासिकासमासन्नप्रसन्नगम्भीरनिरातङ्कनिष्कलङ्कचित्तवृत्तिर्महाराजाधिराजः **श्रीमत्सिङ्घणदेवः** (कुशली) वेल्लुवलत्रिशतान्तर्गतं श्रीमद्भगवत्या जगदम्बिकायाः प्रत्यक्षज्येष्ठादेव्या निवासं महादिव्यक्षेत्रं श्रीमत्कुक्कनूरुनामधेयं ग्रामं प्रसिद्धसीमासमन्वितं निधिनिक्षेपजलपाषाणारामादिसहितं त्रिभोगाभ्यन्तरमष्टभोगते-

जःस्वाम्ययुक्तं शुल्कदण्डसादकारुककरमौलिकार्हणादिसकलद्रव्योपार्जनोपेतं स(श)कनृपकालातीते च पञ्चोत्तरशताधिकसहस्रगते (११०५) शके शोभकृत्संवत्सरे आश्वयुक्ता(ज्य)मावास्यायां सोमवारे व्यतीपातयोगे श्रुतशीलविद्याविनयसंपन्नेभ्यः सदाचारपरिपूतपुण्यमहिमभ्यो सहस्रसंख्यापरिमितेभ्यो नानागोत्रेभ्यो महा(हा)ब्राह्मणेभ्यो राज्ञा राजकीयैरप्यङ्गुलिप्रेक्षणीयं सर्वनमस्यं कृत्वा धारापूर्वकं परमया भक्त्या दत्तवान् । अस्य च धर्मस्य रक्षणे फलम्—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
गण्यन्ते पांसवो भूमेर्गण्यन्ते वृष्टिबिन्दवः ।
न गण्यन्ते विधात्रापि धर्मसंरक्षणे फलम् ॥

अपहरतः समर्थस्य चाप्युदासीनस्य (स्याद)त एव विपरीतं फलम् ।

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
षष्टिं वर्षसहस्राणि विष्ठायां जायते क्रिमिः ॥
कर्मणा मनसा वाचा यः समर्थोऽप्युपेक्षते ।
स स्यात्तदैव चण्डालः सर्वधर्मबहिष्कृतः ॥

अत एवाह रामभद्रः—

सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ।
सर्वानेतान्भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ॥

शक्तिव्युत्पत्तिसंपन्नविद्वच्छ्रीपादसेविना ।
रचितादित्यदेवेन सेयं शासनपद्धतिः ॥

कृतिरियं त्रिभुवनविद्याचक्रवर्तिनः श्रीमदादित्यदेवस्य । लिखितमिदं पण्डितलक्ष्मीधरेण । उत्कीर्णं राजविज्ञानिना पंद्येन ॥ मङ्गलमहाश्रीः ॥

(इण्डिअन् आण्टिक्वेरी ४।२७५–७६)

## (८७)

## कुरुकुलवंशावतंसश्रीजनमेजयभूपालानां शासनपत्रम्।

श्रीगणाधिपतये नमः।

पान्तु वो जलदश्यामाः शार्ङ्ग(शाङ्ग)ज्याघातकर्कशाः।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥

स्वस्ति श्रीजयाभ्युदये युधिष्ठिरशके प्लवङ्गाख्ये(ख्य)येकोननवति-(८९)वत्सरे सहस्यमासि अमावास्यायां सोमवासरे श्रीमन्महाराजाधिराजराजपरमेश्वरो वैयॆग्रणी(?)पादगोत्रजः श्रीजनमेजयभूपः किष्किन्धानगर्यां सिंहासनस्थः सकलवर्णाश्रमधर्मप्रतिपालकः पश्चिमदेशस्थसीतापुरवृकोदरक्षेत्रे तत्रत्यमुनिवृन्दमठस्य गरुडवाहनतीर्थश्रीमच्छिष्यकैकयनाथैराराधितसीतारामस्य पूजार्थं कृतभूदानसाधनमस्मत्प्रपितामहयुधिष्ठिराधिष्ठितमुनिवृन्दक्षेत्रे(त्र)स्य चतुःसीमापरिमितिक्रमः पूर्वभागे—उत्तरवाहिन्यास्तुङ्गभद्रायाः पश्चिमे, दक्षिणभागे अगस्त्याश्रमसंगमादुत्तरे, पश्चिमे पाषाणनद्याः पूर्वे, उत्तरभागे—भिन्ननद्या दक्षिणे, ये(ए)तन्मध्यस्थितमुनिवृन्दक्षेत्रं भवच्छिष्यपारम्परया चन्द्रार्कपर्यन्तं निधिनिक्षेपजलपाषाणाक्षिण्यागामिसिद्धसाध्यतेजःस्वाम्यसहितं स्वबुद्ध्यानुकूल्येनासन्मातापितॄणां विष्णुलोकप्राप्त्यर्थं हरिहरसंनिधावुपरागसमये सहिरण्येन तुङ्गभद्राजलधारापूर्वकं क्षेत्रं यतिहस्ते दत्तोऽ(त्तवान)स्म्यहम्॥ एतद्धर्मसाधनस्य साक्षिणः—

आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं मनश्च।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम्॥

दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम्॥

---

१. 'शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले। कलेर्गतेषु वर्षाणामभूवन्कुरुपाण्डवाः॥' इति राजतरङ्गिणीतो युधिष्ठिरादीनां त्रिपञ्चाशदधिके वर्षशतषट्के कलियुगस्य याते सत्ता प्रतीयते, ततश्च जनमेजयराज्य(८९)संवत्सरे प्रकटा. २. 'वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च। अपुत्राय ददाम्येतज्जलं भीष्माय वर्मिणे॥' इति भीष्मार्घदानमन्त्रे भीष्मस्य वैयाघ्रपद्यगोत्रत्वोक्तेर्जनमेजयस्यापि तद्गोत्रत्वनिश्चयात् 'वैयाघ्रपद्यगोत्रजः' इति पाठो भवेत्.

स्वदत्ताद्विगुणं पुण्यं परदत्तानुपालने।
परदत्तापहारेण स्वदत्तं निष्फलं भवेत् ॥
मद्दत्ता पुत्रिका ज्ञेया पितृदत्ता सहोदरा।
अन्यदत्ता तु जननी दत्तभूमीं परित्यजेत् ॥
अन्यैस्तु छर्दितं भुद्रे(ऽ)श्वभिश्च छर्दितं न तु।
ततः कष्टो(?) ततो नीचः स्वयं दत्तापहारकः ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं हरेत यः।
षष्टिं वर्षसहस्राणि विष्ठायां जायते कृमिः ॥

(इण्डिअन् आण्टिक्केरी ४।३३३-३४)

## (८८)

## माढपुरशिवमन्दिरस्थः शिलालेखः।

सर्गस्थितिलयहेतोर्विश्वस्य [ब्रह्म]विष्णुरुद्राणाम्।
मूर्तित्रयं प्रदधते संसारभिदे नमो विभवे ॥
यदुवंशभुवां राज्ञां सैङ्घपुरं राज्यमायुगाद्दधताम्।
श्रीसेनवर्मनामा राजर्षिः प्रक्रमेणासीत् ॥
तनयस्तस्य श्रीमान्नृपतिरभूदार्यवर्मनाम्नैव।
आर्यव्रततां प्रथमं स्थापितवांस्तदनु यश्चरितैः ॥
श्री[दत्त]वर्मनामा दत्तामयविभवविजयविध्व····सः।
भीतार्थिकुलारिभ्यो बभूव तस्यात्मजो नृपतिः ॥
सूनुरभूत्तस्य महान्भूपालः श्रीप्रदीप्तवर्मेति।
दर्पान्धशत्रुपृतनापतङ्गपटलीप्रदीप्ताग्निः ॥
श्रीश्वरवर्मेति सुतस्तस्याभूद्भूपतिः प्रदानेन।
ऐश्वर्यं यः क्रि(कृ)तवान्भव इव निचये [भवा]र्थानाम् ॥

---

१. अयं च लेखः प्रागेकोनविंशलेखसमानश्लोकोऽपि दानभेदाद्भिन्न एव. अत एवाग्रमपाठोऽपि भिन्न एव.

श्रीवृद्धिवर्मसंज्ञस्तस्य बभूवात्मजः प्रवृत्तश्रीः ।
चन्द्र इव तापहारी नयनानां नन्दनो राजा ॥
स्वभुजार्जितशौर्ययशा दानवतामुपरि दृष्टसामर्थ्यः ।
श्रीसिङ्घवर्मनामा तत्तनयो राजसिङ्घोऽभूत् ॥
तस्य सुतोऽभूदाशापूरणकर्मा जनस्य तापच्छित् ।
श्रीजलनामा नृपतिः कलियुगदावाग्निजलवर्षः ॥
श्रीयज्ञवर्मनामा तदङ्गजोऽभून्महीपतिर्येन ।
यज्ञाज्यधूमजलदैर्नित्योत्केकाः कि(कृ)ताः शिखिनः ॥
पुत्रस्तस्य बभूव श्रीमान्राजर्षिरचलवर्मेति ।
कृतयुगचरितेष्वचलो यश्च स्थैर्यादिगुणसाम्यात् ॥
यः समरघङ्कलाख्यामन्वर्थवतीं दधार रणरौद्रः ।
अपरामगणितसंगरकरिरदनाग्राङ्कितोरस्कः ॥
तस्य दिवाकरवर्मा श्रीमांस्तनयो बभूव नृपतीशः ।
यस्य दिवाकरताभूत्परतेजोभिभवधर्मेण ॥
वारणविषाणसंकटसंगरचलवारिणः श्रुता यस्य ।
अकरोद्दीनशत्रून्सपदि महीघङ्कलभटाख्या ॥
तस्य कनीयान्भ्राता श्रीभास्कर इत्यभून्नृपतिपालः ।
रिपुघङ्कलाभिधानं योऽवहदाजौ विजयमन्त्रम् ॥
स्वभुजार्जितपरराज्यद्रविणसदादानकर्मणः पाणेः ।
यस्यासीद्विश्रामो नतरिपुपृष्ठक्षणस्थितिषु ॥
येनाभिरुह्य पद्भ्यां पतत्रिगम्यानि शैलदुर्गाणि ।
आक्रम्य युद्धशौण्डा हस्तिकरं दापिताः क्षितिपाः ॥
तस्य गुणार्जितदेवीशब्दा श्रीकपिलवर्धनसुताभूत् ।
राज्ञी प्राणेशा श्रीजयावलीत्येकपत्नी च ॥
तस्यास्तनया सावित्रीवेश्वरेति नाम्नासीत् ।
जालंधरनृपसूनोर्जाया श्रीचन्द्रगुप्तस्य ॥

१. 'घङ्कल'शब्दश्च कर्कशार्थको विजयार्थको वा देश्यां भवेत्.

भर्तरि गतवति नाकं करिण[ः] स्कन्धार्द्धवास्पदमिदं सा ।
तत्पुण्यायाकारयदाचार्यानुगतसत्येन ॥
यावन्महीमहीधरजलनिधयो यावदिन्दुरवितारा: ।
तावदिदमस्तु कीर्तिस्थानं श्रीचन्द्रगुप्तस्य ॥
भट्टक्षेमशिवात्मजभट्टस्कन्दादवाप्तशुभजन्मा ।
भट्टवसुदेव एतां प्रशस्तिमकरोदयो[ध्ये]शः ॥
अश्मनीश्वरणा(ना)गेन नागदत्तस्य सूनुना ।
उत्कीर्णा सूत्रधारेण रोहीतकनिवासिना ॥

(आर्कियालॉजिकल् सर्व्हे-इण्डिया १।१२–४)

# ( ८९ )

## महासामन्तप्रचण्डनायकश्रीचन्द्रगुप्तस्य दानपत्रम् ।

ओम् ।

स वोऽव्याद्वेधसा धाम यन्नाभिकमलं कृतम् ।
हरश्च यस्य कान्तेन्दुकलया कमलंकृतम् ॥
आसीन्मुरारि(तः)संकाशः कृष्णराजः क्षिते[ः] पतिः ।
अप्रमेयवसोर्दाता साक्षाद्धर्म इवापरः ॥
शुंभतुङ्गतुङ्गतुरगप्रवृद्धरेणुध्वंरुद्धरविकिरणम् ।
ग्रीष्मेऽपि नभो निखिलं प्रावृट्कालायते स्पष्टम् ॥
तस्यात्मजः श्रीध्रुवराजनामा महानुभावः प्रथितप्रतापः ।
प्रसाधिताशेषनरेन्द्रचक्रः क्रमेण बालार्कवपुर्बभूव ॥

---

१. इदं च शिवमन्दिरं यमुनोत्तरदेशे जौनसारबावरनगरप्रगणान्तर्गतमाढपुरे लक्खामण्डलनाम्ना प्रसिद्धमस्ति. २. अयं च श्रीचान्द्रगुप्तः पञ्चनददेशान्तर्गत-जलंधरनगरभूपालसूनुर्मौर्यवंश्यप्राचीनचन्द्रगुप्ततो भिन्न एव. २ इदं च दानपत्रं गुजरा-तदेशे कापडवणजग्रामे समधिगतम्. ३ अयं च कृष्णराजः प्राचीनलेखमालायां चतुर्थले-खवर्णितराष्ट्रकूटान्वय एव भवेत्. ४. 'शुभतुङ्ग इति कृष्णराजस्य नामान्तरम्' इति चतुर्थलेखटिप्पण्यां महामहोपाध्यायाः.

शशधरकरनिकरनिभं यस्य यशः सुरनगाग्रसानुस्थैः ।
परिगीयते समन्ताद्विद्याधरसुन्दरीनिवहैः ॥

तस्याप्यभूद्भुवनभारभृतेः समर्थः
पार्थोपमः पृथुसमानगुणागुणज्ञः ।
दुर्वारवैरिवनितातुलतापहेतु-
**र्गोविन्दराज** इति सुप्रथितप्रतापः ॥

यस्य प्रभोश्चतुरचारुरुदारकीर्तेः
**रामापरो** निरुपमस्य पितुः सकाशात् ।
सत्स्वप्यनेकतनयेषु गुणातिरेका-
न्मूर्धाभिषिक्तनृपसंमतमाशु राज्यम् ॥

रक्षितं येन निःशेषं चतुरम्भोधिसंयुतम् ।
राज्यधर्मेण लोकानां कृता तुष्टि[ः] परहृदि ॥

सूनुस्तस्यातिवीरः सकलगुणगणाकारभूतो बभूव
भूपालान्कण्टकाभान्सपदि विघटितान्वेष्टयित्वा ददाह ।
राज्यं यस्या(श्वा)भिमानी निजमपि चलितं बाहुवीर्यादवाप
पृथ्वीमेकातपत्रामकुरुत बलवाञ्श्रीमहाराजषण्डः ॥

यस्य विभोः कारायां रिपुरमणीचारुचरणलग्नानाम् ।
परुषरवो निगडानामनवरतं श्रूयते लोके ॥

तस्माद्बभूव राजा प्रथितयशसः शुभतुङ्गनामायम् ।
योऽसावकालवर्षापरनामा गीयते लोकैः ॥

कृष्णचरितः स एव हि हितकृतये यो बिभर्ति वर्णानाम् ।
राज्यं निहताराातिः स्वभुजेन भुवं च कृष्ण इव ॥

अस्य च रणप्रभावाद्बल्लवकान्वयमगाद्दृशं लक्ष्मीः ।
पश्चाद्भूतकवीन्द्रैरनवरतं पठ्यते प्रकटम् ॥

तस्मादन्वयसागरात्समभवच्छ्रीशुद्ध····कुंवडि-
स्तस्माच्चापि बभूव दर्पदलनः श्रीदेगडिर्विद्विषाम् ।

येनानेकनरेन्द्रदन्तिदलनात्प्राप्तं यशः शाश्वतं
सिंहेनेव रणाटवी विरचिता निर्भीकमेकाकिना ॥
तस्माज्जातः प्रचण्डः प्रच(चु)रखरकराक्रान्तनिःशेषभूभृ-
न्नाम्ना **श्रीराजहंसः** प्रतिदिनमुदयी कश्यपाद्वा विवस्वान् ।
येनानीता निजं श्रीः पुनरपि भवनं चञ्चला क्वापि यान्ती
पार्थेनेवारिचक्रप्रमथनपटुना शांभवं भव्यभावम् ॥
निर्जितसकलारिजनः **श्रीधवलप्पः** प्रसिद्धतरनामा ।
धवलितभुवनो यशसा संजातः पवनसूनुरिव ॥
सिंघी(ही)भूय विपक्षेण गृह्यमाणं यशोप्सुना(?) ।
दत्तं स्वस्वामिने येन तं निहत्याशु मण्डलम् ॥
तस्मात्**प्रचण्डः** संजातः समरे यशलम्पटः ।
अकुवश्चापि खड्गेन विख्यातो निर्मलो भुवि ॥
सेल्लविद्याधरेणापि सेलुल्लालित(?)पाणिना ।
निहत्य शत्रून्समधे(रे) यशसा(:)कुलमलंकृतम् ॥
श्रीमद्वल्लभराज्ञः(?) श्रीहर्षपुरोप[ल]क्षिताद्ग्रामान् ।
भुञ्जत्यकालवर्षः(?) अर्धाष्टशतोपसंख्यातान् ॥

सर्वानागामिभद्रनृपतिमहासामन्तामात्यबलाधिकृतविषइ(यि)कमहत्तरान्समनुबोधयति—अस्तु वः संविदितम्—यथा श्रीखेटकहर्षपुरकासद्रह एतदर्धाष्टमयं(ष्टशतमध्ये ?) समधिगतपञ्चमहाशब्दमहासामन्तप्रचण्डदण्डनायक**श्रीचन्द्रगुप्ते**[न] मया श्रीहर्षपुरार्धाष्ट[म]शतान्तःपाति[क]र्पटवाणिज्यचतुराशीतिकाप्रतिबद्धरूरिद्वादशकान्तःपातिव्याघ्रासग्रामः सवृक्षमालाकुलः सदण्डदशापराधः ससीमापर्यन्तः सकाष्ठतृणकूपतडागोपेतः सभोगभागः सहिरण्यश्चतुराघाटनोपलक्षितो घाण(स)कपलसमेतः [समभिदिश्यते] । आघाटनानि अभिलिख्यन्ते । पूर्वतः—पञ्चोलाग्रामो वित्तावल्ली

१. 'रणाटवीविचरितात्' इति पाठो भवेत्. २. 'श्रीमद्वल्लभराजः' इति पाठो भवेत्. ३. 'भुनक्त्यकालवर्षः' इति च E. Hultzsch. Ph.D. पण्डितः शोधितवान्. तथा च 'अकालवर्ष' इति वल्लभराजस्यैव नामान्तरं भवेत्.

च। दक्षिणतः—केरडवल्लीग्रामो अरलुवकग्रामश्च। पश्चिमतः—नावालिका अपूवल्ली च। उत्तरतः—अम्बाउचग्रामः। एवं चतुराघाटनोपलक्षितो वल्लूरिकाग्रामो भट्टवास्तव्यवाजिमध्यंदिनभरद्वाजसगोत्रब्रह्मचारिब्राह्मणब्रह्मभट्टाय वव्वसुताय स्नात्वोदकातिसर्गेण वलिचरुवैश्वदेवार्थं प्रतिग्रहेण प्रतिपादितः। तदर्थमस्मत्प्रदत्तधर्मदायः सर्वैरेवागामिभोक्तृभिरस्मयु(दु)परोधात्पालनीयोऽनुमन्तव्यश्च।

उक्तं च रिषि[3]व्यासेन—

षष्टिवर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः।
महाहयो हि जायन्ते भूमिदानं हरन्ति ये॥
स्वदत्तां परदत्तां वा यत्नाद्रक्ष नराधिप।
महीं महीभृतां श्रेष्ठ दानाच्छ्रेयोनुपालनम्॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥
सर्वानेवं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो महद्भिः॥

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥' इति।

[चल]कमलदलाम्बुबिन्दुलोलां श्रियमवलोक्य मनुष्यजीवितं च।
सकलमिदमशाश्वतं च बुद्ध्वा नहि मनुजैः परकीर्तयो विलोप्याः॥

---

१. Dr. Hultzsch पण्डितस्तु 'भट्टवास्तव्यभरद्वाजसगोत्रवाजिमध्यंदिनसब्रह्मचारि' इति शोधितवान्. २. 'अस्मदनुपरोधा' इति Dr. Hultzsch पण्डितः. ३. 'रिषिर्व्यञ्जनादिश्च। 'विद्याविदाघमतयो रिषयः प्रवृद्धाः' इति बालपण्डितजातकात्' इति मुकुटः—एतदजानानेन Dr. Hultzsch पण्डितेन 'ऋषि इति पठितव्यम्' इत्युक्तम्.

स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्ठायां कृमिर्भूत्वा पितृभिः सह पच्यते ॥
भूमिं यः प्रतिगृह्णाति यश्च भूमिं प्रयच्छति ।
उभौ तौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ ॥
अग्नेरपत्यं [प्रथितं] सुवर्णं भूर्वैष्णवीर्भूमिसुताश्च गावः ।
लोकत्रयं तेन भवेत्तु दत्तं यः काञ्चनं गां च महीं च दद्यात् ॥
वह्निं वह्निसुतं चाम्बु पञ्चपूतं(?) प्रजापते ।
दत्त्वा सर्वरसां चैव न मर्त्यो जायते पुनः ॥
सर्वेषामेव दानानामेकजन्मानुगं फलम् ।
हाटकक्षितिगौरीणां सप्तजन्मानुगं फलम् ॥

स्वहस्तोऽयं श्रीमदक्कुकस्य श्रीधवलप्पसूनोः । शकसंवत् ८३२ वैशाख शुद्ध पौर्णमास्यां महावैशाख्यां पूर्वदेवब्रह्मदायवर्जो दत्तः । लिखितमिदं शासनं कुलपुत्रकेणाग्नेयकेन नेमादित्यसुतेनेति । यदत्रोनाक्षरमधिकाक्षरं वा तत्सर्वं प्रमाणमिति व्यासतुल्योऽपि मुह्यति । स्वहस्तोऽयं श्रीचन्द्रगुप्तस्य ॥

*(आर्कियालॉजिकल् सर्व्हे ऑफ् इण्डिया १।५३–६)*

## ( ९० )

## बाणादिमहाकविवर्णितश्रीहर्ष[वर्धन]-महाराजानां दानपत्रम् ।

ओम् ।

स्वस्ति महानौहस्त्यश्वजयस्कन्धावारात् पिन्थिकायाः महाराजश्रीनरवर्धनः तस्य पुत्रस्तत्पादानुध्यातः श्रीवज्रिणीदेव्यामुत्पन्नः परमादित्य-

१. इदं च दानपत्रं ताम्रपट्टे उत्कीर्णमधुना लक्ष्मणपुरे (Lucknow Museum) वर्तते. एतच्च १८८८ ख्रिस्तवर्षीयजान्युवरीमासे नथूपुरपरिगणान्तर्गतमधुवनग्रामे हलेन कृषता कुटुम्बिना भूमौ खातं लब्धम्. तस्य प्रतिबिम्बं Dr. J. Burgess महाशयैः प्रेषितमुपलभ्य G. Bühler Ph. D., L L. D., C. I. E. महाशयैः Archeological Survey of India पुस्तके ७२–७३ पृष्ठे सव्याख्यं प्रकाशितम्.

भक्तो महाराजश्रीराज्यवर्धनः, तस्य पुत्रस्तत्पादानुध्यातः श्रीअप्सरोदेव्यामुत्पन्नः परमादित्यभक्तो महाराजश्रीमद[ा]दित्यवर्धनः, तस्य पुत्रस्तत्पादानुध्यातः श्रीमहासेनगुप्तादेव्यामुत्पन्नश्चतुःसमुद्रातिक्रान्तकीर्तिः प्रतापानुरागोपनतान्यराजो वर्णाश्रमव्यवस्थापनप्रवृत्तचक्र एकचक्ररथ इव प्रजानामार्तिहरः परमादित्यभक्तः परमभट्टारकमहाराजाधिराजश्रीप्रभाकरवर्धनः, तस्य पुत्रस्तत्पादानुध्यातः सितयशःप्रतानविच्छुरितसकलभुवनमण्डलः परिगृहीतधनदवरुणेन्द्रप्रभृतिलोकपालतेजाः सत्पथोपार्जितानेकप्रवि(व)णभूमिप्रदानसंप्रीणितार्थिहृदयोऽतिशयितपूर्वराजचरितो देव्याममलयशोमत्यां श्रीयशोमत्यामुत्पन्नः परमसौगतः सुगत इव परहितैकरतः, परमभट्टारकमहाराजाधिराजश्रीराज्यवर्धनः,

राजानो युधि दुष्टवाजिन इव श्रीगुप्तदेवादयः
कृत्वा येन कशाप्रहारविमुखाः सर्वे समं संयताः ।
उत्खाय द्विषतो विजित्य वसुधां कृत्वा प्रजानां प्रियं
प्राणानुज्झितवानरातिभवने सत्यानुरोधेन यः ॥

तस्यानुजस्तत्पादानुध्यातः परममाहेश्वरो महेश्वर इव सर्वसत्त्वानुकम्पी परमभट्टारकमहाराजाधिराजश्रीहर्षः श्रावस्तीभुक्तौ कुण्डधानीवैषयिकसोमकुण्डिकाग्रामे समुपगतान्महासामन्तमहाराजदौःसाधसाधनिकप्रमातार(तृ)राजस्थानीयकुमारामात्योपरिकविषयपतिभटचाटसेवकादीन्प्रतिवासिजनपदांश्च समाज्ञापयति—अस्तु वः संविदितम्—अयं सोमकुण्डकाग्रामो ब्राह्मणवामरथ्येन कूटशासनेन भुक्तक इति विचार्य यस्तच्छासनं भङ्क्त्वा तस्मादाक्षिप्य च स्वसीमापर्यन्तः सोद्रङ्गः सर्वराजकुलाभाव्यप्रत्यायसमेतः सर्वपरिहृतपरिहारो विषयादुद्धृतपिण्डः पुत्रपौत्रानुगश्चन्द्रार्कक्षितिसमकालीनो भूमिच्छिद्रन्यायेन मया पितुः परमभट्टारकमहाराजाधिराजश्रीप्रभाकरवर्धनदेवस्य, मातुः परमभट्टारिका महादेवीराज्ञीश्रीयशोमतीदेव्याः, ज्येष्ठभ्रातृपरमभट्टारकमहाराजाधिराजश्रीराज्यवर्धनदेवपादानां च, पुण्ययशोभिवृद्धये सावर्णिसगोत्रच्छन्दोगसब्रह्मचारिभट्टवातस्वामि-विष्णुवृद्धसगोत्रबह्वृचसब्रह्मचारिशिवदेवस्वामिभ्यां प्रतिग्रहधर्मणाग्रहारत्वेन प्रतिपादितो

विदित्वा भवद्भिः समनुमन्तव्यः । प्रतिवासिजनपदैरप्याज्ञाश्रवणविधेयैर्भूत्वा यथासमुचिततुल्यमेयभागभोगकरहिरण्यादिप्रत्याया अनयोरेवोपनेयाः । सेवोपस्थानं च करणीयमिति ।

अपि च—

असत्कुलक्रममुदारमुदाहरद्भिरन्यैश्च दानमिदमभ्यनुमोदनीयम् ।
लक्ष्म्यास्तडित्सलिल·········चञ्चलाया दानं फलं परयशःप्रतिपालनं च ॥

कर्मणा मनसा वाचा कर्तव्यं प्राणिने हितम् ।
हर्षेणैतत्समाख्यातं धर्मार्जनमनुत्तमम् ॥

दूतकोऽत्र महाप्रमातार(तृ)महासामन्तयोः **स्कन्दगुप्तः** । महाक्षपटलाधिकरणाधिकृतसामन्तमहाराजेश्वरगुप्तसमादेशाच्चोत्कीर्णं **गुर्जरेण** । [1]संवत् २०+५ मार्गशीर्षवदि ६ ॥

(आर्कियालॉजिकल् सर्वे ऑफ् इण्डिया ७२–७३)

# ( ९१ )

## छिन्दवंशप्रभूतलल्लमहाराजानां [2]प्रशस्तिपत्रम् ।

ओं नमः शिवाय ।

हेलाङ्गुष्ठाग्रपीडाभरनमदचलोत्सङ्गसंभारदूर-
　भ्रश्यद्भूभारतिर्यग्वलितमणिफणामण्डले भोगिराजे ।
तत्कालोद्भ्रान्तलोकत्रितयकृतमहास्तोत्रमन्त्रावतारः
　पायाद्वः पा[र्वती]शः शमितदशशिरः शौर्यवीर्यावलेपः ॥

---

१. अयं च २५ मितो वर्षः श्रीहर्षराज्यारम्भकालतो ज्ञेयः. श्रीहर्षराज्यारम्भस्तु ६०६ मितः खिस्ताब्दः. तथा च ६३१ मितः खिस्ताब्दो दानपत्रकालः. २. इयं च प्रशस्तिः शिलायामुत्कीर्णा **पीलीभीता**भिधनगरतो विंशतिमैलमिते **गढगजान**-ग्रामे उपलब्धा Mr. H. S. Boulderson महाशयैः १८२९ खिस्ताब्दे. ततश्च G. Bühler. Ph. D., L. L. D. C. I. E. महाशयैः Archeological Survey of India पुस्तके सव्याख्यं प्रकाशिता.

शूलक्षतद्विरददानवकुम्भमुक्तमुक्ताकलापकलितामलकण्ठकान्तिः ।
विश्वं पुनातु गिरिजा वदनावधूतचन्द्रोपनीतपरिवेषमिवोद्वहन्ती ॥

लक्ष्मीविभ्रमकेलिसद्म सुभटव्यापारलीलास्पदं
प्रख्यातक्षितिपालरत्नजलधिः श्रीराजहंसीसरः ।
सद्वीरव्रततीर्थमर्थिकुमुदप्रह्लादनेन्दुर्द्विष-
द्वंशभ्रंशदवानलो विजयतां छिन्दक्षितीशान्वयः ॥

उत्पत्तिरस्य हि पुरा च्यवनान्महर्षेर्व्यक्तव्यलीककलिते त्रिदशाधिनाथे ।
तद्दर्पनिर्दलनदत्तकठोरदृष्टेरष्टासु दिक्षु यशसैव सह प्रसिद्धा ॥

वंशेऽस्मिन्सितकीर्तिकंदलवति श्रीवीरवर्माख्यया
ख्यातोऽभूद्भुवि भूषितावनितलो राजन्यचूडामणिः ।
जन्मस्थानमिवाकलय्य कमला तुङ्गात्मनां भाविनां
भर्तॄणामवनेश्चकार चतुरा यस्यालयान्तःस्थितिम् ॥

त्यागी धर्मपरः पराक्रमधनः सत्यप्रियः कीर्तिमा-
न्सन्मार्गानुगतः शुचिर्दृढमतिर्मानी व्रती नीतिमान् ।
शौर्यौदार्यविवेकधैर्यनिलयो यः संगतः सज्जनै-
र्युक्तः सर्वगुणोदयेन महतामाराधनीयोऽभवत् ॥

तस्मादत्युग्रतेजःप्रसरनियमितारातिपङ्कोपसङ्गः
श्रीमांश्चण्डप्रतापः सकलवसुमतीभूषणं भूषणोऽभूत् ।
यस्योद्योगप्रसर्पद्बलभरदलितक्ष्मातलस्यस्थवीयः-
शेषाहिश्वासशोषादगमदिरिणतां निर्जलं भोगिसद्म ॥

यत्सैन्यगन्धगजगण्डगलन्मदाम्भःसंजातचन्द्रकशतैरिव मुद्रितासु ।
दूरे विपक्षकरिणी वनदन्तिनोऽपि भूयो न वारि जगृहुः सरसीष्वरण्ये ॥

यः सेवागतराजचक्रमुकुटोद्घृष्टाङ्घ्रिपीठस्थलो
भर्ता यश्चतुरम्बुराशिरशनालंकारवत्या भुवः ।
विक्षेपैरपि यस्य ते रघुपतेराशोषिताः सिन्धवो
यस्तस्यापि महाकुलाचल इवावष्टभ्य तस्थौ भुवम् ॥

यस्यैषा राजधानी रजनिकरकराकारकान्तैर्गुणौघैः
पूर्णेवाद्यापि रम्या स्फुरति मरकतश्यामलैः काननान्तैः।
उद्यानैर्नन्दनाभैरतिविशदसुधासेकशुभ्रैः सुराणां
प्रासादैरुन्नताग्रैरमरपतिपुरीस्पर्धिनी वा विभाति॥
तस्यानुजः समभवद्भवभक्तिनम्रः श्रीमल्हणः परिघपीवरबाहुदण्डः।
भ्रातुः कृपाणतुलिताहितराजचक्रं यो लीलयैव धवलो धुरमाबभार॥
लब्ध्वा ततः स विपुलामपि राजलक्ष्मीं भक्तिं परामकृत देवगुरुद्विजेषु।
प्रीत्यै सुहृत्प्रणयिबन्धुजनेऽजनिष्ट दुष्टक्षयादतनुतातिमुदं प्रजासु॥
तस्य प्रियापि चुलुकीश्वरराजवंशसंभूतिरुज्ज्वलगुणाभरणाभिरामा।
गीता जगत्यणहिलेति समस्तकान्तशुद्धान्तवक्त्रकमलेन्दुकला बभूव॥
तस्यां श्रीलल्लुनामाजनि जनितमहामण्डलाधीशशङ्कः
शूरः कुन्देन्दुदत्तद्युतितुलितगुणालंकृताशामुखश्रीः।
योऽसौ सामन्तचक्राचलकनकगिरिर्विद्रुताराातिलक्ष्मी-
स्तिर्यङ्नेत्रान्तपाताहतभुजशिखरश्छिन्दवंशप्ररोहः॥
चित्रं यदस्य किल जन्मदिने समन्ताच्छ्रीमल्हणस्य भवने परमप्रमोदे।
आवेदयन्त्युदयमम्बरतः पपात भृङ्गालिमङ्गलरवैरिव पुष्पवृष्टिः॥
नोन्निद्रा नलिनी न चार्पितमनःस्निग्धा सतां संगति-
र्नोत्फुल्लस्तबका नता वनलता सीमा समस्या न च।
नोद्दामा कविभारती न च तथा हृद्या शरत्कौमुदी
लक्ष्मीर्यस्य यथा बभूव विदुषामानन्दनिष्यन्दिनी॥
किं जातैरपरैर्धराधिपतिभिर्मन्ये वृथा रक्षिता
येषां तिष्ठति दुर्भगेव वनिता श्रीरप्यभोग्या गृहे।
नाभूदस्ति न नापि कोऽपि भविता भूपालचूडामणि-
र्यः श्रीलल्लनरेन्द्रचन्द्रसदृशस्त्यागेन भोगेन च॥

---

१. एतच्छिन्दवंशीयभूपालवर्णनात्मकं काव्यं नैषधीयचरितकर्तृश्रीहर्षेणापि कृतं भवेत्. तथा च नैषधीयचरितसप्तदशसर्गसमाप्तौ 'यातः सप्तदशः स्वसुः सुसदृशि च्छिन्दप्रशस्तेर्महाकाव्ये तद्भुवि नैषधीयचरिते' इत्युक्तं श्रीहर्षेण. नारायणेनापि 'छिन्दप्रशस्तिरपि ग्रन्थो मया कृत इति सूचितम्' इति व्याख्यायि.

आदौ संगरसंगताहितमहामातङ्गकुम्भस्थली-
सिन्दूरारुणकान्तिरुज्ज्वलयशस्तेजोभिरिद्धस्ततः ।
उत्खातारितमःप्रतापविसरैराक्रान्तदिङ्मण्डल-
स्तिग्मांशोस्तुलनां बिभर्ति भुवने यन्मण्डलाग्रोऽधुना ॥
अब्धौ मुक्तायमाना शिरसि हिमगिरेरभ्रगङ्गायमाना
व्योम्नि ज्योत्स्नायमाना दिशि दिशि करिणां कुम्भमालायमाना ।
उच्चैर्देवालयानामुपरि सितपताकायमाना यदीया
कीर्तिर्भ्रान्ता समन्तादनुनदि पुलिने राजहंसीयमाना ॥
कष्टे काले कलावप्यभिभवति जगत्कूपवापीतडागै-
रासन्नारामसत्रैः सुरसदनमठैर्मण्डितायाममुष्याम् ।
रम्यामृद्धिं वहन्त्यामतिसुजनजनानन्दितायां नगर्यां
यस्मिन्धर्मावतारे प्रकृतकृतयुगारम्भसंभावनाभूत् ॥
यः शासनान्यतिसमृद्धजनान्वितानि सीमान्तसस्यबहुलानि ददौ द्विजेभ्यः ।
पार्श्वप्रशस्ततरुषण्डमनोहराणि पुण्यानि निर्मलनदीतटवासभाञ्जि ॥
गङ्गा भगीरथेनेव येन मार्गोपदेशिना ।
स्वपुरीसंनिधौ रम्या पुण्या कटनदी कृता ॥
तस्याभवत्प्रणयिनी मधुसूदनस्य लक्ष्मीरिवामलकुलाम्बुनिधेः प्रसूता ।
सर्वावरोधनवधूमुखपद्मषण्डप्रालेयवृष्टिरपराभिधयापि लक्ष्मीः ॥
भक्त्या च या विनयनम्रतया च पत्युश्चेतो जहार गुणवत्यनुरागिणी च ।
रम्यं हराद्रिसुतयोरिव तत्तथा हि प्रेमापि रूढमनयोरितरेतरस्थम् ॥
आरामोद्यानवापीषु देवतायतनेषु च ।
कृतानि क्रियमाणानि यस्याः कर्माणि सर्वदा ॥
दीनानाथविपन्नेषु करुणान्वितचेतसः ।
सत्रेषु भुञ्जते यस्या विप्रसंघा दिने दिने ॥
इत्थं विविक्तमनयोः परिवर्धमानधर्मप्रबन्धविगलत्कलिकालवृत्त्योः ।
एकस्तयोरमुमकारयदिन्दुमौलेः प्रासादमद्रितनयाभवनं तथान्या ॥

सुरगृहयुगमेतत्तुङ्गकैलासशृङ्ग-
द्वितयतुलितकान्तिश्वेतमुच्चैः सुधाभिः ।
वितरति हृदि नान्तर्विस्मयं कस्य वात-
प्रहतघनपताकाकम्पिताम्भोदवृन्दम् ॥
यावत्सकौस्तुभमुरो मुरमर्दनस्य शंभोः शशाङ्कशकलाभरणं शिरश्च ।
यावत्स्थितिं दधति तोयचयः समस्ताः स्तादेव तावदचला भुवि कीर्तिरेषा ॥
स जयतु भुवि लल्लश्छिन्दवंशप्रवीरः
सममतिगुणवत्या कान्तया चेह लक्ष्म्या ।
रिपुगजमदपङ्कप्लाविताग्रेण येन
प्रतिरणमसिनैवालेखि दिक्षु प्रशस्तिः ॥
भूत्यै सदैव भवने कृतसंनिधाना नानाविधानि दुरितानि विनाशयन्ती ।
सापत्यदारपरिवर्गसुहृद्गणस्य श्रीलल्लमण्डलपतेरनघास्तु देवी ॥
भूषणस्य मयूतायां संबद्धा भूमिरुत्तमा ।
विधाय देवपल्लीति देवयोः प्रतिपादिता ॥
पूजासंस्कारहेतोश्च शिवयोः शासनीकृतः ।
दानादायस्य पादोऽपि श्रीलल्लेन सुकीर्तिना ॥
प्रख्यातवत्समुनिवंशसमुद्भवोऽभूद्भट्टोऽनुरूपचरितः शिवरुद्रनामा ।
तत्सूनुना विरचिताभिनवा प्रशस्तिरेषा प्रसन्नकविता किल नेहिलेन ॥
यस्य प्रसन्नसरला पदमालिकेयं प्रह्लादहेतुरधिकं सदलंकृतिश्च ।
श्रीलल्लनिर्मलगुणग्रथनाभिरामा मुक्तावलीव हृदये विदुषां चकास्ति ॥
विष्णुहरेस्तनयेन च लिखिता गौडेन करणिकेनैषा ।
कुटिलाक्षराणि विदुषा तक्षादित्याभिधानेन ॥
कन्यकुब्जागतेनापि कामदेवसुतेन च ।
उत्कीर्णा सोमनाथेन टङ्कविज्ञानशालिना ॥
संवत्सरसहस्र १०४९ मार्गवदि ७ गुरुदिने ।

(आर्कियालॉजिकल् सर्व्हे ऑफ् इण्डिया—७७-८१ पृष्ठेषु)

---

# (९२)

## वलभीप्रभोस्तृतीयध्रुवसेनमहाराजस्य दानपत्रम् ।

ओं स्वस्ति विजयस्कन्धावारात्सिरिसिम्मिणिकावासकात्प्रसभप्रणतामित्राणां मैत्रकाणामतुलबलसंपन्नमण्डलाभोगसंसक्तप्रहारशतलब्धप्रतापात्प्रतापोपनतदानमानार्जवोपार्जितानुरागादनुरक्तमौलभृतश्रेणीबलावाप्तराज्यश्रियः, परममाहेश्वरश्रीभट्टार्कादव्यवच्छिन्नराजवंशान्मातापितृचरणारविन्दप्रणतिप्रविधौताशेषकल्मषः शैशवात्प्रभृति खड्गद्वितीयबाहुरेव समदपरगजघटास्फोटनप्रकाशितसत्त्वनिकषस्तत्प्रभावप्रणताराातिचूडारत्नप्रभासंसक्तपादनखरश्मिसंहतिः सकलस्मृतिप्रणीतमार्गसम्यक्परिपालनप्रजाहृदयरञ्जनान्वर्थराजशब्दो रूपकान्तिस्थैर्यगाम्भीर्यबुद्धिसंपद्भिः स्मरशशाङ्काद्रिराजोदधित्रिदशगुरुधनेशानतिशयानः शरणागताभयप्रदानपरतया तृणवदपास्ताशेषस्वकार्यफलप्रार्थनाधिकार्थप्रदानानन्दितविद्वत्सुहृत्प्रणयिहृदयः पादचारीव सकलभुवनमण्डलाभोगप्रमोदः परममाहेश्वरः **श्रीगुहसेनः**, तस्य सुतस्तत्पादनखमयूखसंतानविसृतजाह्नवीजलौघप्रक्षालिताशेषकल्मषः प्रणयिशतसहस्रोपजीव्यमानसंपद्रूपलोभादिवाश्रितः सरभसमाभिगामिकैर्गुणैः सहजशक्तिशिक्षाविशेषविस्मापिताखिलधनुर्धरः, प्रथमनरपतिसमतिसृष्टानामनुपालयिता धर्मदायानाम्, अपाकर्ता प्रजोपघातकारिणामुपप्लवानाम्, दर्शयिता श्रीसरस्वत्योरेकाधिवासस्य, संहताराातिपक्षलक्ष्मीपरिभोगदक्षविक्रमो विक्रमोपसंप्राप्तविमलपार्थिवश्रीः परममाहेश्वरः **श्रीधरसेनः**, तस्य सुतस्तत्पादानुध्यातः सकलजगदानन्दनात्यद्भुतगुणसमुदयस्थगितसमग्रदिङ्मण्डलः समरशतविजयशोभासनाथमण्डलाग्रद्युतिभासुरतरांसपीठोदूढगुरुमनोरथमहाभारः सर्वविद्यापरापरविभागाधिगमविमलमतिरपि सर्वतः सुभाषितलवेनापि सुखोपपादनीयपरितोषः, समग्रलोकागाधगाम्भीर्यहृदयोऽपि सुचरितातिशयसुव्यक्तपरमकल्याणस्वभावः खलीभूतकृतयुगनृपतिपथविशोधनाधिगतोदग्रकीर्तिः धर्मानुपरोधोज्ज्वलतरीकृतार्थसुखसंपदुपसेवानिरूढधर्मादित्यद्वितीयनामा परममाहेश्वरः श्री-

**शीलादित्यः**, तस्यानुजस्तत्पादानुध्यातः स्वयमुपेन्द्रगुरुणेव गुरुणात्यादरवता समभिलषणीयामपि राजलक्ष्मीं स्कन्धासक्तां परमभद्र इव धुर्यस्तदाज्ञासंपादनैकरसतयैवोद्वहन् खेदसुखे(ख)रतिभ्यामनायासितसत्त्वसंपत्तिः प्रभावसंपद्वशीकृतनृपतिशतशिरोरत्नच्छायोपगूढपादपीठोऽपि परावज्ञाभिमानरसानालिङ्गितमनोवृत्तिः प्रणतिमेकां परित्यज्य प्रख्यातपौरुषाभिमानैरप्यरातिभिरनासादितप्रतिक्रियोपायः कृतनिखिलभुवनामोदविमलगुणसंहतिप्रसभविघटितसकलकलिविलसितगतिर्नीचजनारोहिभिरशेषैर्दोषैरनामृष्टात्युन्नतहृदयः प्रख्यातपौरुषास्त्रकौशलातिशयगणतिथविपक्षक्षितिपतिलक्ष्मीस्वयंग्राहप्रकाशितप्रवीरपुरुषप्रथमसंख्याधिगमः परममाहेश्वरः **श्रीखरग्रहः**, तस्य तनयस्तत्पादानुध्यातः सकलविद्याधिगमविहितनिखिलविद्वज्जनमनःपरितोषातिशयः सत्त्वसंपदा त्यागौदार्येण च विगतानुसंधानाशमाहितारातिपक्षमनोरथाक्षभङ्गः सम्यगुपलक्षितानेकशास्त्रकलालोर(लोक)रिचतगह्वरविभागोऽपि परमभद्रप्रकृतिरकृत्रिमप्रश्रयविनयशोभाविभूषणः समरशतजयपताकाहरणप्रत्यलो(?)दग्रबाहुदण्डविध्वंसितनिखिलप्रतिपक्षदर्पोदयः स्वधनुःप्रभावपरिभूतास्त्रकौशलाभिमानसकलनृपतिमण्डलाभिनन्दितशासनः परममाहेश्वरः **श्रीधरसेनः**, तस्यानुजस्तत्पादानुध्यातः सच्चरितातिशयितसकलपूर्वनरपतिरतिदुःसाधानामपि प्रसाधयिता विण(ष)याणाम्, मूर्तिमानिव पुरुषकारः परिवृद्धगुणानुरागनिर्भरचित्तवृत्तिभिः, मनुरिव स्वयमभ्युपपन्नःप्रकृतिभिः, अधिगतकलाकलापः कान्तिमान्निर्वृतिहेतुरकलङ्कः कुमुदनाथः, प्राज्यप्रतापस्थगितदिगन्तरालप्रध्वंसितध्वान्तराशिः संततोदितः सविता, प्रकृतिभ्यः परं प्रत्ययमर्थवन्तमतिबहुतिथप्रयोजनानुबन्धमागमपरिपूर्णं विदधानः, संधिविग्रहसमासनिश्चयनिपुणः स्थानेऽनुरूपमादेशं ददद्गुणवृद्धिविधानजनितसंस्कारः साधूनां राज्यशालातुरीयतन्त्रयोरुभयोरपि निष्णातः, प्रकृष्टविक्रमोऽपि करुणामृदुहृदयः, श्रुतवानप्यगर्वितः, कान्तोऽपि प्रशम(मी)स्थिरसौहृदयोऽपि निरसिता दोषवत्ताम्, उदयसमयसमुप-

१. व्यतिरेकः. २. व्यतिरेकः. ३. 'निष्णातः' इत्येतदन्तेन राज्याङ्कव्याकरणप्रसिद्धपदार्थानां श्लेषः. ४. शालातुरीयः पाणिनिः.

जनितजनतानुरागपरिपिहितभुवनसमर्थितबालादित्यद्वितीयनामा परममाहेश्वरः श्रीध्रुवसेनः, तस्य सुतस्तत्पादकमलप्रणामधरणिकषणजनितकिणलाञ्छनललाटचन्द्रशकलः शिशुभाव एव श्रवणनिहितमौक्तिकालंकारविभ्रमामलश्रुतविशेषः, प्रदानसलिलक्षालिताग्रहस्तारविन्दः, कन्याया इव मृदुकरग्रहणादमन्दीकृतानन्दविधिर्वसुंधरायाः,कार्मुके धनुर्वेद इव संभाविताशेषलक्ष्यकलापः प्रणतसामन्तमण्डलोत्तमाङ्गधृतचूडारत्नायमानशासनः परममाहेश्वरः परमभट्टारकमहाराजाधिराजपरमेश्वरचक्रवर्तिश्रीधरसेनः, तत्पितामहभ्रातृश्रीशीलादित्यस्य शार्ङ्गपाणेरिवाङ्कजन्मनो भक्तिबन्धुरावयवकल्पितप्रणतेरतिधवलया दूरं तत्पादारविन्दप्रवृत्तया नखमणिरुचा मन्दाकिन्येव नित्यममलितोत्तमाङ्गदेशस्यागस्त्यस्यैव राजर्ष(र्षि)दाक्षिण्यमातन्वानस्य, प्रबलधवलिम्ना यशसा वलयेन मण्डितककुभा नभसि यामिनीपतेर्विडम्बिताखण्डपरिवेषमण्डलस्य, पयोदश्यामशिखरचूचुकरुचिरसह्यविन्ध्यस्तनयुगायाः क्षितेः पत्युः, श्रीडेरभटस्याङ्कजः क्षितिपसंहतेरनुरागिण्याः शुचियशोंशुकभृतः स्वयंवरमालामिव राज्यश्रियमर्पि(र्प)यन्त्या कृतपरिग्रहः शौर्यमप्रतिहतव्यापारमानमितप्रचण्डरिपुमण्डलमण्डलाग्रमिवावलम्बमानः शरदि प्रसभमाकृष्टशिलीमुखबाणासनापादितप्रसाधनानां परभुवां विधिवदाचरितकरग्रहणः पूर्वमेव विविधवर्णोज्ज्वलेन श्रुतातिशयेनोद्भासितश्रवणः पुनःपुनरुक्तेनेव रत्नालंकारेणालंकृतश्रोत्रः परिस्फुरत्कटकविकटकीटपक्षरत्नकिरणमविच्छिन्नप्रदानसलिलनिवहावसेकविलसन्नवशैवलाङ्कुरमिवाग्रपाणिमुद्वहन्, धृतविशालरत्नवलयजलधिवेलातटायमानभुजपरिष्वक्तविश्वंभरः परममाहेश्वरः श्रीध्रुवसेनः कुशली सर्वानेव समाज्ञापयति—'अस्तु वः संविदितम्—यथा मया मातापित्रोः पुण्याप्यायनाय महिच्छ[क]विनिर्गतमहिच्छकवास्तव्यैतच्चातुर्विध्यसामान्यकौशिकसगोत्रवाजसनेयसब्रह्मचारिब्राह्मणवप्पपुत्रभट्टिभटाय शिवभागपुरविषये दक्षिणपट्टे पट्टपद्रकग्रामः सोद्रङ्गः सोपरिकरः सभूतवातप्रत्यायः सधान्यहिरण्यादेयः सदसापराधः सोत्पद्यमानविष्टिकः सर्वराजकीयानामहस्तप्रेक्षणीयः' पूर्वप्रत्तदेवब्रह्मदेयरहितः भूमिच्छिद्रन्यायेनाचन्द्रार्कार्णवक्षितिसरित्पर्वतसमकालीनः पुत्रपौत्रा-

न्वयभोग्य उदकातिसर्गेण धर्मदायो निसृष्टः,यतोऽस्योचितया ब्रह्मदेयाग्रहारस्थित्या भुञ्जतः कृषतः कर्षयतः प्रति दिशतो वा न कैश्चिद्व्यासेधे वर्तितव्यम् । आगामिभद्रनृपतिभिरप्यस्मद्वंशजैरन्यैर्वा स्वनित्यान्यैश्वर्याण्यस्थिरं मानुष्यं सामान्यं च भूमिदानफलमवगच्छद्भिरयमस्मद्दायोऽनुमन्तव्यः परिपालयितव्यश्च' इति । उक्तं च—

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥
यानीह दारिद्र्यभयान्नरेन्द्रैर्धनानि धर्मायतनीकृतानि ।
निर्भुक्तमाल्यप्रतिमानि तानि को नाम साधुः पुनराददीत ॥
षष्टिं वर्षसहस्राणि स्वर्गे तिष्ठति भूमिदः ।
आच्छेत्ता चानुमन्ता च तान्येव नरके वसेत् ॥

दूतकोऽत्र प्रमातृश्रीनागः । लिखितमिदं संधिविग्रहाधिकृतदिविरपतिश्रीस्कन्धभट्टपुत्रदिविरपतिश्रीमदनहिलेनेति । संवत्[1] ३००+३०+४ माघ शु० ९ स्वहस्तो मम ॥

(आर्कियालॉजिकल् सर्व्हे ऑफ् इण्डिया—८६-८८ पृष्ठेषु)

---

# ( ९३ )

## दिल्लीप्रान्तस्थसारवलग्रामस्थकूपप्रशस्तिः[2] ।

स्वस्ति ॥

सर्वमीष्टफलं यस्य पदाराधनतत्पराः ।
लभन्ते मनुजास्तस्मै गणाधिपतये नमः ॥
सत्यलो नाम वः पातु साम्बवत्याम्बया सह ।
प्रसादाद्यस्य देवस्य भक्ताः स्युः सौख्यभाजनम् ॥

---

१. वलभीसंवत् ३३४= खिस्तसंवत् ६५३-६५४. २. 'अयं कूपः सारवलाख्यग्रामे दिल्लीनगरतो दक्षिणस्यां दिशि पञ्चभिर्मैलैरन्तरिते देशे वर्तते' इति J. Eggeling Ph.D. महाशयेन व्याख्यायते.

देशोऽस्ति हरियानाख्यः पृथिव्यां स्वर्गसंनिभः ।
ढिल्लिकाख्या पुरी तत्र तोमरैरस्ति निर्मिता ॥
तोमरानन्तरं यस्यां राज्यं निहतकण्टकम् ।
चाहमाना नृपाश्चक्रुः प्रजापालनतत्पराः ॥
अथ प्रतापदहनदग्धारिकुलकाननः ।
म्लेच्छः सहाबदीनस्तां बलेन जगृहे पुरीम् ॥
ततः प्रभृति भुक्ता सा तुरुस्कैर्यावदद्य पूः ।
श्रीमहम्मदशाहिस्तां पाति संप्रति भूपतिः ॥
तस्यां पुर्यस्ति वणिजामग्रोतकनिवासिनाम् ।
वंशः श्रीसाचदेवाख्यः साधुस्तत्रोदपद्यत ॥
लक्ष्मीधरस्तत्तनयो बभूव लक्ष्मीधराङ्घ्रिद्वयपद्मभृङ्गः ।
देवद्विजाराधननिष्ठचित्तः समस्तभूता वनलब्धकीर्तिः ॥
लक्ष्मीधरस्य तनयौ कलिकालबाह्या-
वास्तामुभौ महिमवारिनिधी सुरूपौ ।
माहाभिधो निपुणबुद्धिरभूत्तदाद्यो
धीकाख्य उत्तमयशा अनुजस्तु तस्य ॥
माहाख्यस्याभवत्पुत्रो मेल्हानामा मनोहरः ।
श्रीधरस्यात्मजां वीरोनाम्नीं (वीरानाम्नीं) भर्तृपरायणाम् ।
धीका विवाहयामास तस्यामास्तामुभौ सुतौ ॥
ज्येष्ठस्तयोः खेतलनामधेयः साधुत्वपाथोधिरनन्तशीलः ।
पैतूकनामा च लघुः समस्तगुरुद्विजाराधनशीलचित्तः ॥
अथैतयोः खेलतपैतलाख्यसाध्वोः सदा कीर्तनकर्मबुद्ध्योः ॥
इयं शुभा सारवलाभिधानग्रामान्तभूरध्यवसत्स्म चित्ते ॥
पितॄणामक्षयस्वर्गप्राप्त्यै संतानवृद्धये ।
खेतलः पैतलश्चैनं कारयामासतुः प्रहिम् ॥
वेदवस्वग्निचन्द्राङ्कसंख्येऽब्दे विक्रमार्कतः ।
पञ्चम्यां फाल्गुनसिते लिखितं भौमवासरे ॥

इन्द्रप्रस्थप्रतिगणे ग्रामे सारवलेऽत्र तु।
चिरं तिष्ठतु कूपोऽयं कारकश्च सबान्धवः॥
संवत् १३८४ फाल्गुन शुदि ९ भौमदिने॥

(आर्कियालॉजिकल् सर्व्हे ऑफ् इण्डिया—९३-९४ पृष्ठेषु)

## (९४)

## श्रीवैज(द्य)नाथप्रशस्तिद्वयम्।

ॐ स्वस्ति। ॐ नमो गणपतये।
यद्यप्यहं पशुपते कुमति····एव
पर्याप्तभक्तिविवशेन मया तथापि।
अस्यां स्तुतौ श्रवणलेह्यरसांशभाजि
गौर्या सहैव परमेश निमन्त्रितोऽसि॥
पा[शच्छेद]न[क]र्तरि प्रण[म]तां मोहान्धकूपब्रुड-
[ल्लोक]प्रोद्धरण[क्षमे] नि[रु]पमानन्दैक[सं]दायिनि।
दुर्गे द्वार········हारिणि हरिब्र[ह्मा]दिदेवस्तुते
भक्तिः क्षेमविधायिनि त्रिनयने न[:········ स्वा]मिनि॥
व्यापद्वल्लि[समू]ल[पा]टन[क]री त्वं गीयसे स[र्वदा]
[मा]ता [त्वं] जगतस्तवास्ति न मिति[: स्वे]षां महिम्नामिह।
उक्तिः केवलमेव शोभत इयं नो देवं[मा]तेति ते
संसर्गः पि[तृ]काननैरु[पचि]तै[रा]श्रीयते च त्वया॥

१. इदं प्रशस्तिद्वयं **कोटकांगरा**नगरतास्त्रिंशन्मैलात्मकान्तराले पूर्वस्यां दिशि वर्तमान**कीरग्रामबैजनाथग्राम**वर्तिवैद्यनाथमन्दिरे वर्तते. एतन्मन्दिरस्तम्भेष्वतीव प्राचीनतास्ति. परंतु १७७६-१८०८ खिस्तवत्सरवृत्तिद्वितीय**संसारचन्द्राधिप**-१७८६खिस्ताब्दकारितसंस्कारतो नवीनकल्पता प्रतीयते. 'सप्तवारमस्य मन्दिरस्य संस्कारो जातः' इति तत्रत्यजनश्रुत्या '१००८ खिस्ताब्दे **नगरकोट**मागच्छतो **गजनीवासिमहम्मद**स्य सैनिकैरस्यापि मन्दिरस्य भङ्गः कृतो भवेत्' इत्यपि नासंभवि—इति Archeological Survey of India पुस्तके Dr. G. Bühler, Ph. D., L. L. D., C. I. E., महाशयः. २. ससंबुद्ध्यन्तत्वेन गौरी स्तूयते, सप्तम्यन्तत्वेन शिवः. ३. रूपकम्. ४. शिवपक्षे—'देव, माता'; गौरीपक्षे—'देवमाता'.

[1]यस्याहिमालयो[त्कर्ष]पोषिणी [मू]र्तिरुत्तमा ।
[2]तस्यानमन्ति चरणौ धन्याः केचन जन्तवः ॥

धन्यैर्नरै[3]रुग्रवधूः सदैव त्वमुद्यसे भक्तिभराभिरामैः ।
[4]क्लेशापहारीतिमनोहराभिर्वा[ग्भि]ः क[वीना]मुपगीय[से] च ॥
आसन्नमृत्युत्वदशामुपेयुषां परेषु नास्थाममरेषु कुर्वताम् ।
सत्यं [5]भवानी शरणाभिलाषिणां मनोरथं पूरयितुं प्रगल्भते ॥
मुहुः समुद्रासिन एव यु[द्ध]क्री[डा]निकृत्तासुरस····प···· ।
सत्यं हरेरप्युपरि त्वमेव संतिष्ठसे निष्ठुरवीर्यधाम्नः ॥

[[6]म]लादिहृदयाह्लादिद[र्श]नतो दिने दिने ।
बहुदेहान्तर[स्था]णु[स्त्व]मेव किल कथ्यसे ॥

प्रसरन्मरीचिचयचन्द्रचारुणा वदनेन राजसितरामतिश्रिणा ।
[7]बहुशोणिमादिगुणसंपदालयौ परिपूजयन्ति चरणौ तवामराः ॥
त्रैलोक्यजनन्यां त्वयि [8]करुणावति युज्यते नृणां भक्तिः ।
त्रैलोक्यान्तर्निलयं त्वं हि जनं नयसि परमपदम् ॥

[9]गिरिजेशाधिखिन्नोऽसि त्वं गतिर्भव सांप्रतम् ।
संसारसागराच्चेतो भीरु मे नीयतां शमम् ॥
[10]शिवायैकविनन्तव्यपुण्यपादाग्रपांसवे ।
तुभ्यं [11]क्षुभ्यद्रिपुध्वंसमहाशक्तिमते नमः ॥
चञ्चच्चापलसदृष्टिर्विषमेषु प्रयोजकः ।
[12]त्रैलोक्ये स्त्रीजनो योऽत्र तस्य त्वमधिदैवतम् ॥

---

१. 'यस्य, अहिमालया, उत्क०'; 'यस्या हिमालयोत्क०'. २. 'तस्य, आनमन्ति;' 'तस्याः, नमन्ति.' ३. शिवपक्षे—'उग्र, वधूरर्धनारीश्वरमूर्तौ;' गौरीपक्षे—'उग्रवधूः.' ४. 'क्लेशापहा, रीतिमनो०'; 'क्लेशापहारी, इति, मनो०'. ५. 'भवान्, ईश, रणा०'; 'भवानी, शरणा०'. ६. 'मलादिहृत्, अयाह्लादि०'. ७. 'बहुशः, अणिमा०'; 'बहुशोणिमा०'. ८. सप्तम्यन्तम्, संबुद्ध्यन्तं च. ९. 'गिरिजेश, अधिखिन्नः'; 'गिरिजे, शाधि, खिन्नः'. १०. 'शिवाय, एकविनन्तव्य०'; 'शिवायै कविनन्तव्य०'. ११. चतुर्थ्यन्तम्, संबुद्ध्यन्तं वा. १२. 'त्रैलोक्ये, अस्त्री, जनः'; 'त्रैलोक्ये स्त्रीजनः'.

........ता....त्रिभिर्नेत्रैर्मृ[१][डा]निशरणैषिणाम् ।
वपुःश्रीमदविध्वंसं विधातुं प्रजगल्मिषे ॥
आपत्कलापमेलापपरितापप्रलापिनम् ।
गौरी[२]शास्ति विमोहात्कं [कस्त्रा]तुमपरः क्षमः ॥
शर्वाणिमानं[३] त्वद्भक्ता यान्ति सर्वातिशायिनम् ।
प्रसीद मातः संसाराच्छीघ्रमेव विमोचय ॥
गाढा गजानने प्रीतिः सर्वमोहि वपुः सदा ।
उद्दीपितस्मरा दृष्टिर्यस्यास्ते[४] तत्पदं नुमः ॥
इति **रामेण** निरामय सममुमया यन्मया स्तुतोऽसि विभो ।
श्रुत्वा तममोघीकुरु परिश्रमं परमकारुणिक ॥
एकोक्त्या स्तोत्रमिदं गौरीश्वरयोः पठन्ति ये भक्त्या ।
तेषामप्यभिलाषः सिध्यतु शिवयोः प्रसादेन ॥

इति गौरीश्वरस्तोत्रम् ।

अस्ति शीतलगभस्तिशेखर त्वत्प्रशस्तिकरणे कुतोऽर्हता ।
किंतु पावकमपाक्ष तावकी भक्तिरेव जडतां भनक्ति नः ॥
अद्यापि विस्मापयितार एते विद्यन्त एवेश्वरभक्तिमन्तः ।
विचित्रचारित्रनिधिर्यथैष राजानको **लक्ष्मणचन्द्र**नामा ॥
केदारयात्रां विरचय्य येन विशोधनीं प्राक्तनदुष्कृतस्य ।
इतः परं सर्वपरस्त्रियो मे स्वसार इत्येव कृता प्रतिज्ञा ॥
किमेतदाश्चर्यमवार्यवीर्यैर्यदेष योधैर्युधि दुष्प्रधर्षः ।
धनुर्धराणां धुरि यो मनोभूर्बभूव तस्याप्यविधेय एव ॥
अद्येश्वरा मन्दपराक्रमत्वं मत्वा विपक्षैरवधारिताज्ञाः ।
वास्तव्यनारीहठसंगमेन पुराधिपत्यं सफलं विदन्ति ॥
नवं वयो रूपमधिश्रि दातृता पुराधिपत्यं बहवः प्रियंकराः ।
तथापि चेतः परदारवर्जि चेत्किमस्ति दुःसाधमतः परं तपः ॥

---

१. मृड अनिशरणैषिणाम्; मृडानि शरणैषिणाम्. २. गौरीश अस्ति; गौरी शास्ति. ३. शर्व अणिमानम्; शर्वाणि मानम्. ४. यस्य आस्ते; यस्याः ते.

राजानकस्य प्रविशुद्धबुद्धेः पाणिः कृपाणग्रहणप्रवीणः ।
विवर्जयामास विगर्हितानि तस्यान्यनारीस्तनमर्दनानि ॥

तस्यास्ति देसे(शे)ऽत्र वणिक्प्रसिद्धः सिद्धात्मजो मन्युकनामधेयः ।
छिन्नेत्यविच्छिन्नमहेशभक्तेर्मातावदातचरितस्य य[स्य] ॥

यस्याह्न[का]ल्योऽस्त्यविभक्तवित्तो भ्राता कनिष्ठः सुकृतैकनिष्ठः ।
व्यग्रा समग्रातिथिपूजनाय गुल्हेति गर्हारहिता च भार्या ॥

भक्तिद्रुवाटे भसलेन तेन [स]भ्रातृकेन त्रिपुरान्तकस्य ।
द्वारस्थगङ्गायमुनादिमूर्तिः कृता पुरीयं सह मण्डपेन ॥

भस्त्रागर्भगृहीतसर्वविभवा नेदिष्ठदेशे क्वचि-
द्ये कुर्वन्ति गतागतानि वणिजो गण्या वराकाः क ते ।
धन्यो मन्युकनामधेय इह हि श्रीकण्ठरज्यन्मनः-
पोतप्रोतविवेकवेतनघनो मोहार्णवं तीर्णवान् ॥

देवद्विजगुरुभक्तः सौजन्यनिधिर्गुणिप्रियो दाता ।
आम्रुकसुतोऽस्ति विप्रो रल्हणनामा सुशर्मपुरे ॥

तेन दैवज्ञधुर्येण धान्यद्रोणद्वयं शिवे ।
वहमान····भूपृष्ठान्नवग्रामात्समर्पितम् ॥

इहत्येन नवग्रामाद्दत्ता चात्र हलार्धभूः ।
गणेश्वरेण गोविन्दद्विजपुत्रेण धीमता ॥

देपिकाङ्गजनितेन मल्हिकासूनुना विततवित्तशालिना ।
जीवकेन वणिजा निजा च भूः प्राङ्गणाय पुरतः शिवेऽर्पिता ॥

[या]वदे[ष] भगवा[नहर्प]तिर्व्योम कोम[लरु]चिश्च गाहते ।
मन्युकाह्न[कक्रतः] शिवालयस्तावदस्तु सममन्यसा[शा]सनः ॥

आसिकात्मज उ[दा]रधी[र्व]सन्सूत्रधारधुरि नायकाभिधः ।
श्रीसुशर्मनगरादिहाययौ सम्मनस्य तनयश्च ठोढुकः ॥

तेन तेन च सहैव टङ्किता प्रोन्नता शिवपुरी समण्डपा ।
····मुद्दष्टिमनुसृत्य निर्मिता यत्र भान्ति गणवर्गमूर्तयः ॥

शृङ्गाराभृङ्गकौ यस्य पितरौ पुण्यशालिनौ ।
स प्रशस्तिमिमां चक्रे रामनामा कवीश्वरः ॥
संवत्सरेऽशीतितमे प्रसन्ने·········स्य शुक्लप्रतिपत्तिथौ च ।
[श्री]म[ज्ज]यचन्द्रनरेन्द्रराज्ये रवेर्दिने रामकृता प्रशस्तिः ॥

(द्वितीया प्रशस्तिः ।)

ॐ स्वस्ति । ॐ नमः शर्वाय ।

[आशास्यं वो गजास्यो] वितरतु हरता[त्तार]कारिर्विकारं
नन्दी सानन्द[नोऽ]यं भवतु स [च] महाकालशूलस्य धर्ता ।
··············ना·············यतु कु[रुतां] वीरभद्रोऽपि भद्रं
सर्वे वोऽखर्वगर्वा विदधतु कुशलं किंकराः शंकरस्य ॥
स पातु वो महादेवो·········भक्तिचुम्बितः ।
आत्मानं मु[हु]रीक्षन्ते यत्पादनखदर्पणे ॥
काष्ठोद्दीपनकर्मठा जगति या या निर्निमेषक्षणैः
सत्पक्षैरुपजीव्यते द्विजजनं या बिभ्रती शस्यते ।
देवस्याहुतिलम्पटस्य परमा पुष्टिर्यतो जायते
ताभिर्मूर्तिभिरष्टभिर्भवतु वो भूत्यै भवानीविभुः ॥
एतेनैव शरत्वमभ्युपगतं प्लोषाय पूर्वं पुरां
संप्राप्ता धनुषः श्रियं तनुरियं संप्रत्यमुष्यैव च ।
व्यानम्रे हसतीव यत्सुररिपावित्थं मुहुर्विस्मया
मस्मस्मेरमुपास्महे स्मरजितः पादद्वयं तद्वयम् ॥
यद्यप्यचेतनत्वाद्वक्तुमशक्तः सुरालयस्तदपि ।
अथ केन कृतोऽहमिति प्रशस्तिपृथुजिह्वया वजति ॥
जालंधराधिराजो जयति गुणानां निधिर्जयचन्द्रः ।
ईदृंशि यस्य राज्ये देवायतनानि जातानि ॥
वित्तं शिवे प्रयुक्तं येषां कालेन भवति कोटिगुणम् ।
ग[ण्यास्त ए]व वणिजः शेषैः किं स्तोकवा[र्धु]षिकैः ॥

अनेन वक्ष्यमाणेन सुकृतेन महानयौ ।
गण्यौ गणेषु भ्रातरौ भूयास्तां **मन्युकाहुकौ** ॥
तौ भ्रातरौ कृतज्ञौ याभ्यां शमदम[प]योधरयुतायाः ।
शिवभक्तिजनन्या अपि रसः समास्वादितः सार्धम् ॥
शैलस्याङ्काच्चलित्वा रुचिरनववयाः खेलतीयं सहेलं
कुल्या कन्येव यत्र स्फुरदुर(रु)लहरी **कन्दुकाविन्दुकाख्या** ।
**कीरग्रामो**ऽभिरामो गुणगणनिलयो वर्ततेऽधित्रिगर्तं
सोऽयं राजानकेन प्रबलभुजयु[जा रक्षि]तो **लक्ष्मणेन** ॥
अतुलकुलबकुलपादपकन्दः परिपन्थिभित्पुरास्कन्दः ।
राजानकोऽत्र **कन्दः** प्रथममभूद्दुर्यमस्कन्दः ॥
**बुद्धो** विशुद्धबुद्धिस्तस्य सुतोऽजनयदुद्धुरं तनयम् ।
विग्रह इति कृतविरहः शत्रुवधूनां ततो जज्ञे ॥
विग्रहविग्रहजातो **ब्रह्मेति** बभूव भूवधूदयितः ।
विग्रहनिग्रहकरणे शक्तिर्यस्याभवद्रिपुषु ॥
हस्तालम्बकमुन्नताद्विलुठतामाराधितत्र्यम्बकं
शत्रुश्रीपरिचुम्बकं परतिमिस्रीकारचित्तान्धकम् ।
क्रान्तग्रामकदम्बकं नृपतिभिः सद्बन्धुकौटुम्बकं
स्वाकारप्रतिबिम्बकं स च कृती लेभे सुतं **डोम्बकम्** ॥
नारीमोहनयौवनं नवनवत्यागोर्मिभिः पावनं
भूभर्तुः कृतसेवनं निजभुवः सम्यक्प्रकृत्सावनम् ।
उद्दामद्विषदालयीकृतवनं युद्धोग्रसिंहस्वनं
पुत्रं सोऽपि समाससाद **भुवनं** शंभौ बृहत्सावनम् ॥
गुणमणिनिकुरम्बरोहणं प्रवहणमापदगाधवारिधौ ।
कृतसुभटशिरोविरोहणं समजनयत्तनयं स **कल्हणम्** ॥
जालंधराधीश्वरपादपद्मनिश्छद्मभक्तिः प्रचुरात्मशक्तिः ।
बलोल्बणो **बिल्हण**नामधेयस्तस्यात्मजोऽजायत सद्विधेयः ॥

तनयायां सनयस्य त्रिगर्तभूभर्तृहृदयचन्द्रस्य ।
स च रामलक्ष्मणाख्यौ लक्षणिकायां सुतौ लेभे ॥
ज्येष्ठे गुणैर्गरिष्ठे बिम्बोष्ठीभिः समं द्युपुरि गोष्ठीम् ।
अधितिष्ठति निष्ठुरधी[स्तस्य] कनिष्ठोऽत्र सुप्रतिष्ठोऽभूत् ॥

त्रिगर्तनृपतीनां या पादपद्मोपजीविभिः ।
कन्दादि[भिरा]सन्दारिसंदारिभिरभुज्यत ॥
परिपालितवास्तव्यस्तव्यनिर्मलकर्मणा ।
साधुना साधुना भूमिर्लक्ष्मणेनोपभुज्यते ॥

यस्य प्रेयस्यभवन्मयतल्ले[त्य]तुलरूपभृद्रमणी ।
तस्मिन्कीरग्रामं लक्ष्मणचन्द्रेऽनुपालयति ॥
सिद्धाख्यवणिक्पुत्रौ धर्मप्रवणाविह स्थितौ कृतिनौ ।
ज्येष्ठो मन्युकनामा कनिष्ठमप्याहुकं प्राहुः ॥
भवतरुकुठारधारा प्रविषमतमजन्मभरुमरुल्लहरी ।
प्ररुरोह मोहहन्त्री मनसि तयोः शांभवी शक्तिः ॥
ताभ्यां शिवलिङ्गमिदं निरालयं वीक्ष्य वैद्यनाथाख्यम् ।
पुर्या सहितं विहितं पुरतोऽस्य च मण्डपो रचितः ॥
इति मन्युकाहुकाभ्यामुदरे स्थित्वा पुरा किलैकत्र ।
पुनरुदरसंप्रवेशप्रतिषेधविधिः स सह विहितः ॥
यद्यपि पितेव कुरुते करुणां शंभुस्तथापि पितुरधिकः ।
जन्मनिमित्तं हि पिता शशिमौलिरजन्मनो हेतुः ॥
शाहिलपाहिलकाहिलसिद्धाः स्वर्लोकगामिनः सन्तु ।
पूर्वे पुरुषाः क्रमशश्चत्वारो मन्युकाहुकयोः ॥
किं बहुना·········देषा पुरुषाणामेकविंशतिर्यातु ।
सुकृतेनानेन दिवं स्वयं च परमास्तु गतिरनयोः ॥
राजानकेन चास्मै लक्ष्मणचन्द्रेण वैद्यनाथाय ।
मण्डपिकोत्पत्तिधनाद्दत्ताः षट् प्रत्यहं द्रम्माः ॥

ग्रामात्प्रलम्बनाम्नो मात्रा राजानकस्य लक्ष्मणया ।
एकहलवाहनीया दत्ता भूमिर्महेशाय ॥
लक्ष्मणस्य सुकृतं सुकृतो यः पालयिष्यति तदन्वयधर्ता ।
तस्य पुण्यमुपयातु विवृद्धिं यो हरिष्यति स गच्छतु चाधः ॥
तैलोत्पीडनयन्त्रं कीरग्रामेऽस्ति मन्युकाहुकयोः ।
ताभ्यां तदपि शिवाय प्रदीपनिष्पत्तये दत्तम् ॥
एका च पण्यशाला ताभ्यां स्वीया शिवस्य भोगार्थम् ।
भूमिश्च हलचतुष्टययोग्या दत्ता नवग्रामात् ॥
इति येन येन यद्यत्सुकृतं विहितं शिवं समुद्दिश्य ।
इह तस्य तस्य तत्तत्तिष्ठतु यावद्धरित्रीयम् ॥
यस्याविस्मृतजननीस्तन्यसमास्वादनस्य वदनाब्जे ।
परिशुद्धकवित्वफला सरस्वती भगवती न्यवसत् ॥
श्रीभृङ्गकस्य स सुतः [काश्मी]रनृपप्रमातुरनघस्य ।
प्रथमवयाः सर[लार्थां] व्यधत्त रामः प्रशस्तिमिमाम् ॥
चवेढक्षेत्रात् हर······क्षेत्रात् क्त्कण[दे]वाद[ग्र]भूमि[च्छ] ॥
गुहकेन य(?) शसिभद्रो(?) ना (प्रशस्तिरुत्कीर्णा) ।
शककालगताब्दाः ७[२६] ।

(आर्कियालॉजिकल् सर्वे–पृष्ठानि ११२–११५)

## ( ९५ )

## श्रीयशोवर्मराजतत्सुतश्रीधङ्गदेवयोः प्रशस्तिः ।

ॐ नमो भगवते वासुदेवाय ।
दधानानेकां यः किरिपुरुषसिं[होभय]जुपं
तदाकारोच्छेद्यां तनुमसुरमुख्यानजवरात् ।

---

१. इयं च प्रशस्तिः पश्चिमोत्तरदेशे बुन्देलखण्डे छत्रपुरराज्ये खजुराहोग्रामे उपलब्धा डा० कीलहॉर्न (Professor F. Kielhorn, Ph. D. C. I. E.) महाशयैर्व्याख्याता.

जघान त्रीनुग्राञ्जगति कपिलादीनवतु वः
स वैकुण्ठः कण्ठध्वनिचकितनिःशेषभुवनः ॥
पायासुर्बलिवञ्चनव्यतिकरे देवस्य विक्रान्तयः
सद्योविस्मितदेवदानवनुतास्तिस्त्रिलोकीं हरेः ।
यासु ब्रह्मवितीर्णमर्घसलिलं पादारविन्दच्युतं
धत्तेऽद्यापि जगत्त्रयैकजनकः पुण्यं स मूर्ध्ना हरः ॥
देवः पातु स वः पयःकणभृति व्योम्नीव ताराचिते
दैत्यासिव्रणलाञ्छने दिविस(ष)दः संत्यज्य सर्वानपि ।
तस्मिन्नञ्जनशैलभित्तिविपुले वक्षःस्थले यस्य ताः
पेतुर्मन्दरसङ्गसंभ्रमवलल्लक्ष्मीकटाक्षच्छटाः ॥
गम्भीरोम्बुधयः शशाङ्करुचिमान्भास्वत्प्रतापोज्ज्वलो
धीरो धात्रि महान्महीधरवराः कल्पद्रुमास्त्यागवान् ।
आकल्पादविकल्पनिर्मलगुणग्रामाभिरामः प्रभुः
सत्यं ब्रूत यदि क्वचित्पुनरभूत्तुल्यो यशोवर्मणः ॥
प्रधानादव्यक्तादभवदविकारादिह महा-
नहंकारस्तस्मादजनि जनितोपग्रहगणः ।
ततस्तन्मात्राणि प्रसवमलभन्त क्रमवशा-
दथैतेभ्यो भूतान्यनु भुवनमेभ्यः प्रववृते ॥
इहाद्यो विद्यानां कविरखिलकल्पव्युपरतौ
परः साक्षी देवस्त्रिभुवनविनिर्माणनिपुणः ।
स विश्वेषामीशः सितकमलकिंजल्कवसति-
र्महिम्ना स्वेनैव प्रथममथ वेधाः प्रभुरभूत् ॥
तस्माद्विश्वसृजः पुराणपुरुषादाम्नायधाम्नः कवे-
र्येऽभूवन्मुनयः पवित्रचरिताः पूर्वे मरीच्यादयः ।
तत्रात्रिः सुषुवे निरन्तरतपस्तीव्रप्रभावं सुतं
चन्द्रात्रेयमकृत्रिमोज्ज्वलतरज्ञानप्रदीपं मुनिम् ॥

अस्ति स्वस्तिविधायिनः स जगतां निःशेषविद्याविद-
स्तस्यात्मोपनताखिल[श्रु]तिनिधेर्वंशः प्रशंसास्पदम् ।
यत्राभून्न पराक्रमेण लघुता नो चाटुकारोद्धति-
र्नाल्पाप्यन्तरसारता न च फलप्राप्तिः क्षपायात्मनः ॥

त्रस्तत्राणप्रगुणमनसां सर्वसंपत्प्रदाना-
मुद्युक्तानां कृतकृतयुगाचारपुण्यस्थितीनाम् ।
तत्रत्यानाममलयशसां भूभुजां का प्रशंसा
येषां शक्तिः सकलधरणीध्वंसने पालने वा ॥

तत्र क्षत्रसुवर्णसारनिकषग्रावा यशश्चन्दन-
क्रीडालंकृतदिक्पुरन्ध्रिवदनः श्रीनन्नुकोऽभून्नृपः ।
यस्यापूर्वपराक्रमक्रमनमन्निःशेषविद्वेषिणः
संभ्रान्ताः शिरसावहन्नृपतयः शेषामिवाज्ञां भयात् ॥

यस्यानन्दितवन्दिवृन्दरचितस्तोत्रक्रियाप्रक्रमा-
संक्रान्तं बहुवैरिवर्गजयिनः कन्दर्पकल्पाकृतेः ।
नाम क्षामतनूभृतां मृगदृशां सद्यो विधत्ते पदं
स्वान्तेषु द्विषतां च राशिषु बलाद्वैक्लव्यमव्याहतम् ॥

तस्मादभूदाजिपराजितारेः श्रीवाक्पतिर्वाक्पतितुल्यवाचः ।
यस्यामला भ्राम्यति भानुभाभिः सहैव लोकत्रितयेऽपि कीर्तिः ॥

यस्यामलोत्पलनिषण्णकिरातयोषि-
दुद्गीततद्गुणकलध्वनिरम्यसानुः ।
क्रीडागिरिः शिखरनिर्झरवारिपात-
झात्कारताण्डवितकेकिगणः स विन्ध्यः ॥

तस्माद्विस्मयधाम्नः क्षीराब्धेश्चन्द्रकौस्तुभौ यद्वत् ।
द्वावात्मजावभूतां जयशक्तिर्विजयशक्तिश्च ॥
तयोर्द्वयोरप्यमितप्रतापदावाग्निदग्धा हितकाननानि ।
कर्माणि रोमाञ्चजुषः समेताः समूर्धकम्पं क्षितिपाः स्तुवन्ति ॥

तत्रानुजन्मा तनयं राहिलाख्यमजीजनत् ।
निद्रादरिद्रतां यान्ति यं विचिन्त्य निशि द्विषः ॥
भीमभ्राम्यदसि[स्रु]चि स्रवदसृक्संपादिताज्यक्रिये
ज्यानिर्घोषवषट्पदे क्रमचरत्संरब्धयोधर्त्विजि ।
अश्रान्तः समराध्वरे प्रतिहतक्रोधानि(न)लोद्दीपिते
वैरोदर्चिषि यः पशूनिव कृती मन्त्रैर्जुहाव द्विषः ॥
श्रीहर्षभूपमथ भूमिभृतां वरिष्ठः
सोऽसूत कल्पतरुकल्पमनल्पसत्त्वः ।
अद्यापि यस्य सुविकासियशःप्रसून-
गन्धाधिवाससुरभीणि दिगन्तराणि ॥
यत्र श्रीश्च सरस्वती च सहिते नीतिक्रमो विक्रम-
स्तेजः सत्त्वगुणोज्ज्वलं परिणता क्षान्तिश्च नैसर्गिकी ।
संतोषो विजिगीषुता च विनयो मानश्च पुण्यात्मन-
स्तस्यानन्तगुणस्य विस्मयनिधेः किं नाम वस्तु स्तुमः ॥
भीरुर्धर्मापराधे मधुरिपुचरणाराधने यः सतृष्णः
पापालापेऽनभिज्ञो निजगुणगणनाप्रक्रमेष्वप्रगल्भः ।
शून्यः पैशून्यवादेऽनृतवचनसमुच्चारणे जातिमूकः
सर्वत्रैवं स्वभावप्रथितगुणतया नाम [कः स्तू]यतेऽसौ ॥
सोऽनुरूपां सुरूपाङ्गः कञ्चुकाख्यामकुण्ठधीः ।
सवर्णां विधिनोवाह चाहमानकुलोद्भवाम् ॥
यस्याः पतिव्रततुलामधिरोढुमीशा-
नारुन्धती गुरुतरामभिमानिनीति ।
पत्युः समीहितविधानपरापि साध्वी
कार्श्यं तथा परमगादतिलज्जितेव ॥
गौडक्रीडालतासिस्तुलितखसबलः कोशलः कोशलानां
नश्यत्कश्मीरवीरः शिथिलितमिथिलः कालवन्मालवानाम्

सीद[त्सा]वद्यचेदिः कुरुतरुषु मरुत्संज्वरो गूर्जराणां
तस्मात्तस्यां स जज्ञे नृपकुलतिलकः श्रीयशोवर्मराजः ॥
स दाता राधेयः स च शुचिवचाः पाण्डुतनयः
स शूरः पार्थोऽपि प्रथितमहिमानः किमपि ते ।
व्यतीताः किं ब्रूमो यदि पुन[रि]ह स्युः स्वचरिते
ह्रिया नम्रीकुर्युर्वदनमवलोक्यैनमधुना ॥
त्रस्तत्रातरि तत्र भूभृति नृणां क्लेशाय शस्त्रग्रहः
कामं दातरि सिद्धकेलिसुमनस्तल्पाय कल्पद्रुमाः ।
वित्तेशः परमार्थवृद्धिविधुरस्वान्तो विलासी स चे-
दास्ये तस्य सतीन्दुरुत्पलवनप्रीत्यै दृशामुत्सवे ॥
यस्योद्योगे बलानां प्रसरति रजसि व्यासरोदो[न्तराले]
स्वःसिन्धुर्बद्धरोधाः पिहितरुचिरभूद्धानुरादर्शरम्यः ।
सम्यग्देवेन्द्रदन्ती मुदमभित वियत्साभ्रमालोच्य हंसाः
सोत्कण्ठास्तस्थुरासीन्नयनदशशती कूणितावृत्तशत्रोः ॥
अन्योन्याबद्धकोपद्विपकलहमिलद्दन्तदण्डाभिघात-
प्रोद्यज्ज्वालाकलापप्रसृतहुतभुजि ज्यावनध्वानभीमे ।
पीतासृक्क्षीबरक्षःप्रमदकलकलह्लादरौद्रप्रहासे
धीरं भीतेव लक्ष्मीः समरशिरसि यं संभ्रमादालिलिङ्ग ॥
उत्तुङ्गाञ्जनशैलसंनिभचलन्मत्तद्विपेन्द्रस्थित-
क्रुध्यद्दुर्धरधन्विमार्गणगणप्रारब्धरक्षाक्रियम् ।
विख्यातक्षितिपालमौलिरचनाविन्यस्तपादाम्बुजं
संख्येऽसंख्यबलं व्यजेष्ट गतभीर्यश्चेदिराजं हठात् ॥
लक्ष्मच्छायाकलुषवपुषः कान्तिमद्दू[र]मि[न्दो]-
र[न्या]यत्त[स्फुरि]तविधुरा[त्सु]न्दरं चारवि[न्दात्] ।
य.......................................
संभ्रान्ताभिः कथमपि मुखं वीक्ष्य वैरिप्रियाभिः ॥

गङ्गानिर्झरघर्घरध्वनिभयभ्राम्यत्तुरङ्गव्रजाः
सद्यःसुप्तविबुद्धकेसरिरवत्रस्यत्करीन्द्राकुलाः ।
यत्सैन्यैः प्रतिकल्पपादपसुमालूनप्रसूनोच्चयाः
प्रालेयाचलमेखलाः कथमपि क्रान्ताः शनै[र्दिग्जये] ॥

उच्च[प्रा]कारभि[त्तिस्थि]त[स]मद[शिखिक्रूर ?]·········[निना ?]द-
·································श्लथ[रथ]तुरगप्राप्तवेगान्तरायः ।
यस्मिन्मध्यंदिने स्यात्तरणिरनुदिनं नीलकण्ठाधिवासं
जग्राह क्रीडया यस्तिलकमिव भुवः·········कालञ्जराद्रिम् ॥

आ शस्त्रग्रहणादखण्डितमहावीरव्रतप्रक्रियै-
रा बाल्यादविलुप्तसत्य[समयै]रा पाणिपीडाविधेः ।
अश्रान्तार्थिवि[तीर्ण]पूर्णविभवैस्त····प्सिताकाङ्क्षि[भि]-
·························पुलकैर्यः साधुभिः स्तूयते ॥

[नि]न्दामुपैमि पुरुषान्तरसंगमेन [शान्ति] न जातु सततभ्रमणक्रमेण ।
यस्यातिपौरुषनिरस्तमनुष्यभावे लोके समुद्गतकीर्तिरनिन्दितैव ॥

एकैवोवाह लोकेऽस्मिन्पुत्रजन्मोन्नतं शिरः ।
कञ्चुका येन धीरेण देवकीव मधुद्विषा ॥

शौ[र्यौ]दार्यनयादिनिर्म[लगु]णग्रामाभिरा[मं यशो ?]
[यस्या ?]शेष[विशुद्ध]ना[थति]लकं [गा]य[न्ति सि]द्ध[स्त्रि]यः ।
[तस्य स्तोत्रम]मित्रमर्दन[र]वेः स्पष्टप्रकाशीकृत-
त्रैलोक्यस्य सहस्रसंख्यमहसो दीपप्रदानोपमम् ॥

क्रोधोद्वृत्तान्तकभ्रूकुटिलपटुरणच्चण्डकोदण्डयष्टि-
ज्याघातस्फारघोरध्वनिचकितमनः[संभ्रमभ्रान्तदृक्षु ।
स्पष्टं नष्टेषु दूरं क्वचिदपि रिपुषु क्षत्रतेजोम्बुराशे-
र्य·········र्न व्य[रंसीद्भुवनवि ?]जयि[नश्चण्डदो]र्दण्डकण्डूः ॥

[यो] लक्षव[र्म]नृपतेः शरदिन्दुकान्त-
माख्यातुमिच्छति यशःप्रस[रं] वचोभिः ।

दीपप्रभापरिचयेन विमुग्ध[बु]द्धि-
र्मध्यंदिने दिवसनाथमुदीक्षतेऽसौ ॥

यन्नाक्रामदवक्रमानसबलिव्याजप्रयोगापत-
त्पृथ्वीलङ्घनलब्धलाघवमघच्छेदी पदं वामनः ।
लोकालोकशिरःशतप्रतिहतज्योतिर्विवस्वान्न म-
त्तस्य क्रामति तन्निशाकरमहःश्रीस्पर्धि शुभ्रं यशः ॥

धीरो दिग्विजयेषु केलिसरसीं तीव्रप्रता[पं द]ध-
न्निःशेषद्विषदव्ययोभयतटीविन्यस्तसेनाभरः ।
मज्जन्मत्तकरीन्द्रपङ्किलजलां श्रीलक्षवर्माभिध-
श्चक्रे शक्रसमः कलिन्दतनयां जह्नोः सुतां च क्रमात् ॥

आस्थानेषु महीभुजां मुनिजनस्थाने सतां संगमे
ग्रामे पामरमण्डलीषु वणिजां वीथीपथे चत्वरे ।
अध्वन्यध्व[गसं]कथासु [निलये]ऽर[ण्यौ]कसां विस्मया-
न्नित्यं [तद्गु]णकीर्तनैकमुखराः सर्वत्र सर्वे जनाः ॥

यस्यानने शरदखण्डशशिप्रसन्ने
कोपं व्यनक्ति हृदयस्थमरिप्रियाणाम् ।
सिन्दूरभूषणविवर्जितमास्यपद्म-
मुत्सृष्टहारवलयं कुचमण्डनं च ॥

तेनैतच्चारुचामीकरकलसलसद्व्योम धाम व्यधायि
भ्राजिष्णु प्रांशुवंशध्वजपट[पटना]न्दोलिता[म्भोज]वृन्दम् ।
दैत्यारातेस्तुषारक्षितिधरशिखरस्पर्धि वर्धिष्णुरागा
दृष्टे यात्रासु यत्र त्रिदिववसतयो विस्मयन्ते समेताः ॥

कैलासाद्भोटनाथः सुहृदिति च ततः कीरराजः प्रपेदे
साहिस्तस्मादवाप द्विपतुरगबलेनानु हेरम्बपालः ।
तत्सूनोर्देवपालात्तमथ हयपतेः प्राप्य निन्ये प्रतिष्ठां
वैकुण्ठं कुण्ठितारिः क्षिति[धरति]लकः श्रीयशोवर्मराजः ॥

श्रीधङ्गः स्वभुजप्रसाधितमहोनिर्व्याजराज्यस्थिति-
स्तस्मादास महोदधेरिव विधुः सूनुर्जनानन्दकृत् ।
युद्धे नश्यदरातिवर्गसुभटप्रस्तूयमानस्तुति-
र्नित्यं नम्रमहीपमौलिगलितस्रक्पूजिताङ्घ्रिद्वयः ॥
आकालंजरमा च मालवनदीतीरस्थितेर्भास्वतः
कालिन्दीसरितस्तटादित इतोऽप्या चेदिदेशावधेः ।
[आ तस्मादपि ?] विस्मयैकनिल[या]द्गोपाभिधानाद्गिरे-
र्यः शास्ति क्षितिमायतोऽर्जितभुजव्यापारलीलार्जि[ताम्] ॥
यस्त्यागविभ्रमविवेककलाविलास-
प्रज्ञाप्रतापविभवप्रभवश्चरित्रात् ।
चक्रे कृती सुमनसां मनसामकस्मा-
दस्मादकालकलिकालविरामशङ्काम् ॥
शब्दानुशासनविदा पितृमान्व्यधत्त
देद्देन माधवकविः स इमां प्रशस्तिम् ।
यस्यामलं [कवि]यशः कृतिनः कथासु
रोमाञ्चकञ्चुकजुषः परिकीर्तयन्ति ॥
संस्कृतभाषाविदुषा जय[गु]णपुत्रेण कौतुकाल्लिखिता ।
रुचिराक्षरा प्रशस्तिः करणिकजद्धेन गौडेन ॥
पाताद्भूमिपतिः पृथ्वीं त्रयीधर्मः प्रवर्धताम् ।
नन्दन्तु गोद्विजन्मानः प्रजाः प्राप्नोतु निर्वृतिम् ॥
संवत्सरदशशतेषु एकादशाधिकेषु संवत् १०११ ।
उत्कीर्णा चेयं रू[पका]र………………… ॥

श्री[विनायक ?]पालदेवे पालयति वसुधां वसुधार्णो[व]ग[ता]स्निग्ध-[वै ?]रि[भि ?] । नमो भगवते वासुदेवाय । नमः सवित्रे ।

(आर्कियालॉजिकल् सर्वे–१२४-१२९ पृष्ठे)

(९६)

## श्रीधङ्गमहाराजप्रतिष्ठापितमरकतेश्वरमहादेवप्रशस्तिः।

विष्टपविकटवयानामजायमानाय बीजभूताय।
रुद्राय नमः पालनविलयनये निष्क्रियायापि॥

तूर्णं घूर्णति यत्र गोत्रशिखरिव्यूहः समूहः पत-
त्यत्यावर्जितमूर्तिसर्तविरुतं कुर्वन्ककुप्कुम्भिनाम्।
सप्ताम्भोध्यवधिप्रभूतवसुधाबन्धः कबन्धीकृत-
स्वर्गाद्रिः क्षयकाण्डताण्डवविधिः शैवः शिवायास्तु वः॥

कस्त्वं द्वारि दिगम्बरः क्षपणकः कस्मादकस्मादहो
बाले शूलधरो धिगायुधविधिं बर्हास्त्वदर्हो ननु।
मां जानीहि महेश्वरं स्फुटमिदं वस्त्रेऽप्यभावादिति
प्रेयस्या परिहासतो विहसितं शंभोः शिवायास्तु वः॥

पशुपतिवदनच्छद्मनि कृतवसतिः पद्मसद्मनि सदा या।
जयति विलक्षणरूपा शुक्लाभा भारती भ्रमरी॥

गिरिशशिरसि यच्छन्हस्तमिन्दोः कलायां
मुहुरमलमृणालीग्रासगृध्नुः शिशुत्वे।
जयति विबुधमूर्ध्नोमाललीलाम्बुजेन
स्मितकुपितमृडानीताडितो नागवक्त्रः॥

निजोपज्ञप्रज्ञाप्रसरपरिविस्फारमुकुरे
पदार्थानां सार्थः प्रतिफलति येषामवितथः।
गिरां ग्रामो येषामधरमधिशेते स्वयमयं
नमस्तेभ्यः सद्भ्यस्तिलकितजगद्भ्यः किमपरम्॥

कल्पादौ किल केवलं खमखिलं ध्वान्तावनद्धं ध्रुवं
शून्यं वीक्ष्य सिसृक्षतो जगदभूद्र[द्रा]दमुद्रोऽनिलः।

१. इयमपि प्रशस्तिस्तस्मिन्नुक्तखजूराहोग्राम एवोपलब्धा.

तत्राभूदनलोनलाज्जलमभूद्वीजादमोघाज्जले
ज्वालामालि हिरण्मयं महदभूदण्डं विमोर्बृंहणः ॥
तदण्डमाण्डखण्डाभ्यां द्यां भुवं विदधे धिया ।
ब्रह्मा ब्रह्मनिधीन्पुत्रान्मरीच्यत्रिमुखान्मुनीन् ॥
मध्ये तेषां प्रहततमसां मानसानां मुनीनां
श्रीमानत्रिः प्रथितमहिमा नेत्रपात्रे प्रसूतम् ।
यस्य ज्योतिःपटलजटिलं मण्डलं वन्द्यमिन्दो-
श्चन्द्रात्रेयः समजनि मुनिस्तस्य पुत्रः पवित्रः ॥
दूरापास्तसमस्तसंशयविपर्यासप्रकामोज्ज्वल-
ज्ञानालोकविलोकिताखिलजगत्सर्गापवर्गस्थितेः ।
सर्वज्ञप्रतिमस्य तस्य कृतिनः कारुण्यपुण्यात्मनः
पारं गन्तुमनन्तदीपमहसः को वा महिम्नां क्षमः ॥
नीरन्ध्रो निरघो निसर्गसरलः सारो[त्त]राभ्यन्तरो
निर्ग्रन्थिः पृथुलाग्रभागसुभगः पर्वस्वखर्वस्थितिः ।
आम(मू)लं फलितोऽप्यसेवितविपत्क्रूरारिदावाग्निना
न म्लानिं गमितस्ततः समभवद्वंशोऽयमत्यद्भुतः ॥
आ चन्द्रं चन्द्रात्रेयवंशजाः क्षितिभुजः क्षितिम् ।
भोक्ष्यन्त्यक्षतदोर्दण्डचण्डिमानोऽत्रितेजसा ॥
ये पूर्वेऽत्र पवित्रितक्षितितलाः सत्कर्मसर्गप्रियाः
प्राणप्रार्थनयाप्यखिन्नमनसः पर्याप्तसत्यव्रताः ।
निःसिन्दूरितदुर्विनीतबलवत्सामन्तसीमन्तिनी-
सीमन्ताः पृथिवीभुजो विजयिनस्तेभ्योऽखिलेभ्यो नमः ॥
कालेनेह महावंशे प्रशंसाप्रांशुरंशुमान् ।
मुक्तामणिरिव श्रीमानन्नुकोऽभून्महीपतिः ॥
तेन विक्रमधनेन धन्विना क्रामता युधि वधाय विद्विषाम् ।
धुन्वता धनुरधिज्यमर्जुनं स्मारिता दिवि विमानगामिनः ॥

तस्मादुदारकीर्तेरजनि जनानन्दसुन्दरः श्रीमान् ।
तनयो विनयनिधानं वाक्पतिरिव वाक्पतिः क्षितिपः ॥

विद्यावदातहृदयेन हृदि प्रजाना-
मातङ्कशङ्कुमकलङ्कितविक्रमेण ।
तेनापनीय नयनिर्मललोचनेन
संकोचिताः पृथुककुत्स्थकथार्थकन्थाः ॥

तस्य क्ष्मातिलकस्य लोकतिलकः पृथ्वीपतेर्भूपतिः
स श्रीमान्विजयो जयाय जगतां जज्ञे कृतज्ञः सुतः ।
यस्योदात्तमते प्रसूतिसमये धाम्नां महिम्नां निधेः
सानन्दं सुरसुन्दरीभिरवनौ क्षिप्ताः सलाजाः अ(स्र)जः ॥

किन्नरीभिरधिकंधरं सखीराकलय्य भुजयास्य भूभुजः ।
काकलीकलमगीयत स्फुरत्प्रोथमुत्पुलकमुज्व(ज्ज्व)लं यशः ॥

विनयनतसुमित्रापत्यसंवाहितांह्रिः
प्रवरहरिचमूभिः क्रान्तपर्यन्तभूमिः ।
सुहृदुपकृतिदक्षो दक्षिणाशां जिगीषुः
पुनरधित पयोधेर्व(र्ब)न्धवैधुर्यमर्यः ॥

तस्मान्नृपतिसमुद्रादुदपादि नरेन्द्रचन्द्रमाः सूनुः ।
स श्रीराहिलनामा विहततमावन्दिता[भ्यु]दयः ॥

प्रसन्ने तत्र भूपाले प्रसरच्चित्रभानवः ।
ना[थ]वन्तोऽर्थिनां वा[सा]ः सरोषे द्विषदालयाः ॥

कोशपानमसिधा(वा)रयोषितां नाभिभूतजनरत्नसंपदाम् ।
पक्षपातमिषुदुष्टभूभृतः प्रापुरस्य न सुहृत्सभासदः ॥

तस्मात्तीव्रप्रतापज्वलनकवलितोत्तालभूपालतूला-
न्मूलाच्छीलद्रुमाणामनणुगुणगणालंकृतेः कीर्तिभर्तुः ।

१. शोभनैर्मित्रैः सुहृद्भिरपत्यैश्च; सुमित्रापत्येन लक्ष्मणेन च. २. वानरचमूभिः; अश्वैश्चमूभिश्च.

स श्रीहर्षोऽरिहर्षज्वरहरणमणिः क्षीणनिःशेषदोषः
संतोषाय प्रजानामजनि निजभुजाश्रान्तविभ्रान्तकीर्तिः ॥
यं दृष्ट्वैव कृपाणपाणिमकृत व्यापारभा[रं] युधि
क्रोधाक्रान्तविलोचनो(नौ)त्पलदलभ्रूभङ्गभीमाननम् ।
उत्साहो हृदयाद्धनुः करतला[द्रा]वो मुखात्कीर्तयो
दिग्भ्यः साध्वसवेपमानवपुषां नष्टाः परेषां क्रमात् ॥
तेनाच्युतेन भीमेन व(ब)लेन कृतवर्मणा ।
समुद्रपरिखा पृथ्वी पुरी सू(शू)रेण रक्षिता ॥
अपक्षधात्रीधररक्षणक्षमः सदैव दोषाकरसङ्गभङ्गुरः ।
बहिष्कृतक्रूरभुजंगसङ्गमस्तिरस्करोति स्म स तूर्णमर्णवम् ॥
दूरा[पा]स्तप्रवरतुरगैर्दूरमुक्तातपत्रै-
र्दूरायातैः सपदि शिरसा [शा]सनं धारयद्भिः ।
तस्य द्वारि द्विरदमदनिःस्यन्दपङ्काङ्कितायां
सेधा(वा)हेतोः पुणतिपरमैराशि(सि)तं भूमिपालैः ॥
वृत्तोज्व(ज्ज्व)ला गुणाधारा महार्घा हृदयंगमा ।
हारावलीव तस्यासीत्कंछुकेति प्रियोत्तमा ॥
वर्ण्ण[ः] स्वर्ण्णरुचिर्विलोचनयुगं नीलं सचन्द्रोपलं
पाणिः शो[ण]मणिद्युतिः सचरणो दन्तच्छदो विद्रुमः ।
सद्यः सु(शु)क्तिविमुक्तमौक्तिकतलस्वच्छं [च चे]तो यतः
क्षीरब्धं भुवनैकभूषणमभूत्तेनेयमेका सती ॥
तस्यास्तस्य स्मरणविहिताघौघविध्वंसनायाः
सत्तीर्थायास्त्रिदशसरितः शान्तनोः पुण्यकीर्त्तेः ।
धर्माधारः पितरि सुतरां साधुरिद्धप्रभावो
भीष्मो प(य)द्वत्समजनि सुतः श्रीयशोवर्मदेवः ॥
तस्य विप्रचरणप्रणामजं शैशवे शिरसिजश्रितं रजः ।
अल्पकालपलिताकृति दधत्संदधावधिककामनीयकम् ॥

एकस्मै याचमानाय द्विजाय पलदः शिबिः ।
यावदर्थिजनं प्रादात्कोटिं कोटिमसौ नृपः ॥

नन्तुं भूमिलितालिकेन सदसि व्यस्तासवे(ने)नासितुं
गन्तुं पत्रपुरःसरेण चरणैः स्थातुं च नीचैश्चिरम् ।
वक्तुं जीवजयादिशेति नियमं कर्तुं विनीतात्मना
तस्मिन्राजति(नि) राजकेन जयिनि त्रासादिदं सि(शि)क्षितम् ॥

नित्पो(त्यो)दितेन्दुभुजगाधिपधाम नित्य-
मानन्दि कुन्दकुसुमं गगनाङ्गणं च ।
तेनाद्भुतं द्वयमिदं यशशा(सा) व्यधायि
धा[त्री]तलं शि(सि)तसुधाधवलत्वचित्रम् ॥

संभवति भुवि मनुष्यः सप्ताकूपारपारदृश्वापि ।
न पुनरिह तस्य नृपतेर्गुणसागरपारगः कश्चित् ॥

गान्धारीं भजता प्रहृष्टशकुनिस्वानप्रियां प्रेयसीं
भीष्मद्रोणवचांस्यकर्णसुखदान्याकर्ण्य संमूर्च्छता ।
नो धर्मप्रभवं विरोधितवता प्राप्यापि वंशक्षयं
[सं]प्राप्ता धृतराष्ट्रता [सु]सुहृदा विद्वेषिणेत्यद्भुतम् ॥

कष्टात्षष्टिसहस्रसूनुभिरसूनुत्सृज्य खातः कृत-
स्तत्पौत्रप्रमुखैः पुनस्त्रिभिरसावम्भोभिरापूरितः ।
वृत्तान्तं सगरस्य सागरविधावाकर्ण्य तूर्णं सुधीः
स्पर्द्धावानधिकं व्यधत्त जलधेर्वै(र्बै)त्वं तडागार्णवम् ॥

तस्येदं सा(शा)रदेन्दुद्युति[ख]रसि(शि)खरक्षुन्न(ण्ण)नक्ष[त्र]चक्रा-
च[क्रं रक्ष]न्नमुष्मादपथ(न)यति रथं सारथिः सप्तसप्तेः ।
यत्कुम्भः शातकुम्भस्तुहिनगिरिशिरश्चुम्बिबिम्बा(म्बा)र्कतर्कं
कुर्वन्नास्ते समस्तस्तुतमसुररिपोर्वेस्म(श्म) वैकुण्ठमूर्त्तेः ॥

---

१. शकुनयः पक्षिणः; दुर्योधनपक्षीयो वा. २. भीष्मपितामहद्रोणाचार्ययोर्वचांसि; भयानकद्रोणकाकवचांसि च. ३. कर्णस्य राधेयस्य; कर्णयोः श्रोत्रयोश्च न सुखं ददतीति. ४. धर्मोत्पत्तिम्; युधिष्ठिरं च.

महावंस(श)समुत्पन्ना प्रसन्ना[धारि]तावनी ।
नर्मदेवामवद्देवी पुण्या तस्य महीपतेः ॥

सदानसूया विहितागसेप्यसावरुन्धतीजीवितमप्युपासिता ।
व(ब)भौ मदान्धान्दमयन्त्यनिन्दिता यदालसाभून्न पुनः कथंचन ॥

सा देवी नरदेवाद्देवाधिपतेः स(श)चीव सच्चरित्रं तम् ।
तस्मादसूत पूतं जयन्तमिव [धं]गमङ्गभुवम् ॥

य¹शोदानन्द[भाक् च]क्रे पूतनामारणक्रियाम् ।
जातो वृष्णिकुले कंसरिपोश्छेत्ता नरोत्तमः ॥

तस्मा[त्समुत्थि]तक्रोधान्नृसिंहान्²खलाविनः ।
हि³रण्यकशिपुप्राणत्राणं चक्रे न केनचित् ॥

देवालोकय कोशलेश्वरमितस्तूर्णं समाकर्ण्यता-
मादेशःक्रथनाय सिंहलपते नत्वा व(ब)हिः स्थीयताम् ।
त्वं वि[ज्ञा]पय कुन्तलेन्द्र वदने दत्त्वोत्तरीयाञ्चलं
तस्यास्थानगतस्य वेत्रिभिरिति व्यक्तं समुक्तं वचः ॥

का त्वं काञ्चीनृपतिवनिता का त्वमन्ध्राधिपत्नी
का त्वं राढापरिवृढवधूः का त्वमङ्गेन्द्रपत्नी ।
इत्यालापाः समरजयिनो यस्य वैरिप्रियाणां
कारागारे सजलनयनेन्दीवराणां व(ब)भूवुः ॥

का त्वं कस्य किमर्थमत्र भवती प्राप्ता शशाङ्कोज्व(ज्ज्व)ला
सिद्धाः कीर्त्तिरहं वु(बु)धैकसुहृदः श्रीधङ्गपृथ्वीपतेः ।
भ्रान्त्वा विस्व(श्व)मशेषमागतवती स्फारीभवत्कौतुका
लोकालोकमहामहीध्रसि(शि)खरश्रेणिश्रियं वीक्षितुम् ॥

मरकतमयं तुङ्गं लिङ्गं यदर्चितमैश्वरं
त्रिदशपतिना तस्माल्लब्धं प्रसाद्य किरीटिना ।

---

१. यशोदाया आनन्दकर्ता पूतनाया मारणक्रियां चक्रे कंसाख्यरिपोश्छेत्ता. अर्थ तु—यशोदमानन्दं भजतीति तादृशः पवित्रनामा संग्रामक्रियां चक्रे । कंससमरिपोश्छेत्ता. २. नखैर्लुनातीत्येवंशीलात्, न दुष्टान्रक्षतीत्येवंशीलाच्च. ३. हिरण्यस्य कशिपोः प्राणानां च त्राणम्.

तदवनितलं तेनानीतं युधिष्ठिरपूजितं
जयति जगति श्रीधङ्गेन प्रणम्य निवेसि(शि)तम् ॥
वेस(श्म)न्यस(श्म)मयस्तेन भूपालेन प्रतिष्ठितः ।
द्वितीयो द्योतते देवः क्लेशपास(श)हरो हरः ॥
तेनायं स(श)रदभ्रसु(शु)भ्रसि(शि)खरः श्रीधङ्गपृथ्वीभुजा
प्राशा(सा)दस्त्रिदशप्रभोर्भगवतः सं(शं)भोः समुत्तम्भितः ।
यस्याभ्रंकषकालधौतकलसप्रान्तस्खलत्स्प(त्स्य)न्दनो
मेरोः स(शृ)ङ्गमतुङ्गमेव मनुते चित्रीयमाणोऽरुणः ॥
भक्त्या भवस्य नूनं शिल्पिस(श)रीरेषु कृतसमावेशः ।
स्वयमेव विश्वकर्मा तोरणरचनामिमां चक्रे ॥
जयति किरीटो (ध)टोऽयं हाटककोटीरनेन तुलयित्वा ।
अतुलेन तुलापुरुषाः स(श)तसो(शो) विश्राणितास्तेन ॥
षट्कर्माभिरता रताः परहिते संसु(शु)द्धवंस(श)द्वयाः
प्रारब्धाध्वरधूमधूम्रवपुषोऽप्येकान्ततो निर्मलाः ।
तेनैते धनधान्यधेनुवसुधादानेन संमानिताः
सौधेषु स्फटिकाद्रिकूटविकटेष्वारोपिता ब्रा(ब्रा)ह्मणाः ॥
ब्र(ब्र)ह्मसु ब्र(ब्र)ह्मकल्पेषु येष्वेकत्र निवासिषु ।
दक्षिणेन तुषाराद्रिं कल्पग्रामोऽपरोऽभवत् ॥
रक्षित्वा क्षितिमंबु(म्बु)रासि(शि)रस(श)नामेतामनन्यायतिं
जीवित्वा स(श)रदां स(श)तं समधिकं श्रीधङ्गपृथ्वीपतिः ।
रुद्रं मुद्रितलोचनः स हृदये ध्यायन्ज(ञ्ज)पञ्जाह्नवी-
कालिन्द्योः सलिले कलेवरपरित्यागादगान्निर्वृतिम् ॥
धर्माधिकारमनुसा(शा)सति सा(शा)स्त्रतोऽत्र
मिश्रे सतां स्फुरितधामनि धर्मवु(बु)द्धौ ।
श्रीमद्यशोधरपुरोधसि वेधसीव
सिद्धिं जगाम जगतीपतिकीर्तिरेषा ॥

तार्कारिकः प्रवरसावरवंस(श)जन्मा
श्रीनन्दनः कविरभूत्कविचक्रवर्ती ।
तस्यात्मजः समजनि श्रुतपारदृश्वा
श्रीमांस्तपोभिकव(ब)लो व(ब)लभद्रनामा ॥
सूनुः सूनृतगीर्गिरीन्द्रमहिमा भद्रस्य तस्यामव-
न्नूपालैर्भुवि पूजितांह्रिरनघः साहित्यरत्नाकरः ।
श्रीरामो रमणीयशू(सू)क्तिरचनाचातुर्यधुर्यः कृती
तेनेयं विहिता प्रशस्तिरचना भक्त्यालये शूलिनः ॥
न संकीर्णा वर्णाः क्वचिदिह न सापक्ष्यकलुषाः
स्थिताः कायस्थेन प्रथितकुलशीलोज्व(ज्ज्व)लधिया ।
यशःपालेनायं विदितपदविद्येन लिखितः
प्रशस्तेर्विन्याश(स)ः कृतयुगसमाचारश(स)दृशः ॥
विज्ञानविश्वकर्त्रा धर्माधारेण सूत्रधारेण ।
च्छि(छि)च्छा(भि)धेन विदधे प्राशा[सा]दः प्रमथनाथस्य ॥
यावत्पृथ्वी सपृथ्वीधरनगरनगा दत्तमुद्रा समुद्रै-
र्यावद्भ्राजिष्णुरुष्णद्युतिरयममृतस्यन्दनः शीतरस्मि(श्मिः) ।
यावद्ब्र(ब्र)ह्माण्डभाण्डस्थितिरियमथवा स्थाणुतां स्थाणवीयः
प्राशा(सा)दस्तावदेष भजतु नरपतेर्दत्तकैलासहासः ॥
लिपि[ज्ञा]नवि[धि]ज्ञेन प्राज्ञेन गुणसा(शा)लिना ।
सिंहेनेयं समुत्कीर्णा सद्वर्णा रूपसा(शा)लिनी ॥
संवत(त्) १०५८ श्रीखर्जूरवा[ह]के
राजश्रीधङ्गराज्ये देवश्रीमरकतेश्वरस्य प्रस(श)स्तिः सिद्धा ॥
उत्खातोच्चमहीभृतो मसृणिता मत्तद्विपानां पदै-
(र्द्धौ)र्धौताः सङ्गरसङ्गभङ्गुररिपुत्रस्यत्प्रियाश्रूत्करैः ।
दिग्भित्तीर्जयवर्मदेवनृपतिः कीर्त्यक्षरैर्योऽलिख-
त्तेनालेखि पुनः प्रशस्तिरमलैरेषाक्षरैः क्ष्माभुजा ॥

विद्वद्भिर्जयपालसी(शी)तकिरणोऽमूल्यादराद्वन्दितो
गौडः प्रोल्लिखदक्षराणि कुमुदाकाराणि सर्पत्करः ।
कायस्थो जयवर्मदेवनृपतेरीशस्य विभ्रत्कलाः
साहित्याम्बुधिबन्धुरुद्धततमो रुन्धन्ननिन्द्यद्युतिः ॥
संवत् ११७३ वैशाख सुदि ३ शुक्रे ॥

(एपिग्राफिआ इण्डिक्–पृष्ठे १४०-४७)

# (९७)

## श्रीकोक्कलमहाराजनिर्मापितनगरप्रशस्तिः[1] ।

ओं नमः शिवाय ।

स्फूर्य(र्ज)त्स्फारफणाकलापविकसद्भीमस्फटाभासुरं
भास्वत्तारतरातिरेकविलसच्चन्द्रार्धचिह्नीकृतम् ।
प्रोद्यल्लोलविलोचनानलमिलज्ज्वालावलीपिङ्गलं
वन्दे सुन्दरवैद्यनाथविधृतं वन्द्यं जटामण्डलम् ॥
यस्य प्रेतवनं निवासभवनं भूतैः प्रभुत्वं भृशं
भूतिर्भूषणमङ्गरागरचना प्रीतिर्युगान्तं प्रति ।
कण्ठे तिष्ठति कालकूटमशिवोऽप्येवं शिवत्वस्थितम्(वो यः स्थितः)
सर्वव्याधिहरश्चराचरधरः पायात्स वः शंकरः ॥
यं वेदान्तविदो वदन्ति मनसः संकल्पभूतं शिवं
ब्रह्मैकं परमक्षरं तमजरं तं चामरं तद्विदः ।
अन्ये तं शिवमेव बुद्धममलं त्वन्ये जिनं वामनं
तस्मै सर्वमयैक्यकारणपते सर्वाय[2] नित्यं नमः ॥
माहेन्द्रोपेन्द्ररौद्रज्वरविषममहादुष्टकष्टाभिभूता
भूतैः प्रत्यग्रभूतैः प्रतिदिनमुदितैर्यातुधानैर्गृहीताः ।
धृष्टाङ्गुष्ठप्रकोष्ठप्रकटितपटिमाटोपकुष्टप्रदुष्टा
दृष्ट्वा नश्यन्त्यनिष्टास्फुटविकटजटाजूटमेते त्वदीयम् ॥

---

१. इयमपि प्रशस्तिः खजूराहोग्राम एवोपलब्धा इति प्राग्दर्शितव्याख्यानत एव सर्वं व्याख्येयम्. २. दन्त्यादिरपि सर्वशब्दः शिववाची.

आसीदप्रतिमा विमानभवनैराभूषिता भूतले
　　लोकानामभिपेन भूमिपतिना पद्मोत्थवंशेन या ।
केनापीह निवेशिता कृतयुगत्रेतान्तरे श्रूयते
　　सच्छास्त्रे पठिता पुराणपटुभिः पद्मावती प्रोच्यते ॥
सौधोत्तुङ्गपतङ्गलङ्घनपथप्रोत्तुङ्गमालाकुला
　　शुभ्राभ्रंकषपाण्डुरोच्चशिखरप्राकारचित्राम्बरा ।
प्रालेयाचलशृङ्गसंनिभशुभप्रासादसद्मावती
　　भव्यापूर्वमभूदपूर्वरचना या नाम पद्मावती ॥
त्वङ्गत्तुङ्गतुरंगमोद्गमखुरक्षोदाद्रजः प्रोद्धतं
　　यस्यां जीर्णकठोरवस्त्रमकरोत्कूर्मोदराभं नभः ।
मत्तानेककरालकुम्भिकरटप्रोत्क····टाद्भुतं
　　युक्तं कर्दममुद्रया क्षितितलं तां ब्रूत किं संस्तुमः ॥

किं बहुना—

तस्यां ग्रहपतिवंशस्तम्बक··········प्यदूषितो जातः ।
कोटिगुणोन्नतनमितः प्रथितोऽतिबलः श्रीमान् ॥
　　यश्चाभवन्निजभुजार्जितचित्रकीर्ति-
　　　　रुत्तम्भिता[स्व]कुलमूलतरुप्रकाण्डः ।
　　भ्रूभङ्गकार्मुककटाक्षशराभिघात-
　　　　मा[त्त]प्रतापपरिपालितशत्रुदण्डः ॥
　　यः शुभ्रविभ्रमशशाङ्ककरप्रतान-
　　　　कान्त्युज्ज्वलोत्पलजलप्रबलांस्तडागान् ।
　　देवालयानपि हिमाचलशृङ्गतुङ्गां-
　　　　श्चक्रे शतक्रतुकृती स यशोबलाख्यः ॥
　　तस्मादभूदभिमताखिलबन्धुवर्गो
　　　　दुर्गत्रिवर्गफलनिर्मललब्धसौख्यः ।
　　सत्कीर्तिकीर्तनकथापरिगद्यमान-
　　　　[माहात्म्य]मोदितजनः किल माहटाख्यः ॥

तस्यात्मजः स्वजनसर्वजनार्क........
शङ्कापमानपरिमार्जनसज्जकार्यः ।
मर्यादमुद्धुनगभीरिमयाब्धितुल्यै-
....................................... ॥

.................गु[रु]गभीर.........राशिः
श्रीमानभूत्सुकृतकृज्जयदेवनामा ॥
कान्त्या शीतकरात्समी[हित]फलावाप्तौ च कल्पद्रुमा-
दालोको दिवसाधिपादिव ततो जज्ञे सुतः सेकलः ।
विद्वानप्रतिमप्रतापतरणिः ख्यातः सतामग्रणीः
सत्यत्यागपराक्रमैकवसतिर्मानी धनैरन्वितः ॥
सद्वीरत्वादलङ्घ्यः प्रथितपृथुककुप्प्रान्तविश्रान्तकीर्ति-
स्त्यागे कर्णोपमानः कटुकपटवचोभाषणे चाप्रगल्भः ।
सद्यः सौजन्यजन्यप्रकटितमहिमारातिवर्गस्य दुर्गः
श्रीमानु............र्गो.........हित............[से]कलोऽभूत् ॥
उद्यद्वीरगभीरराज्यजलधेः पारे समुत्तारित-
मीदृक्षेण महीभुजा निजतनुं यं प्राप्य पोतं परम् ।
श्रीसेकलमतुल्यकुल्य..............................
...........................रुचिरं किं तत्र वस्तु स्तुमः ॥
तस्यानुजोऽपि सौन्दर्यमर्यादौदार्यकार्यवान् ।
यौवनेऽप्यार्यचरितः श्रीकोकलेति विश्रुतः ॥
यः सत्पात्रे ददा..................................
.................नमन्न....वरवसनशतान्यश्वशय्यासनानि ।
छत्रोपानद्विचित्रासनभवनमहाधान्यदानान्यजस्रं
स श्रीमान्कोकलाख्योऽभवदिह कुमरः की..........र्मकर्मा ॥
प्रशस्तसम....................................तं
महार्हगुरुतोरणं शिखरिशृङ्गतुङ्गालयम् ।

विचित्रमतिभूषणोच्छ्रितलसन्महागोपुरं
पुरंदरपुरप्रभं पुरमचीकरत्कोकलः ॥
तेनायं तुहिनाचलामलमहाकूटाग्र............
.......................त्विगहनोत्तारार्थिना कारितः ।
यस्यात्युच्छ्रितकाञ्चनाण्डकलसं मार्तण्डचण्डप्रभा-
संपर्कादभवद्वितानममलं श्रीवैद्यनाथप्रभोः ॥
यस्य द्वारेऽतिवस्तुप्रततमिव दिवो द्वारमुग्रा.........
.......................गगनमिव समुड्डीय गच्छद्विभाति ।
यन्मन्ये वैद्यनाथो यदभिनवमभवद्धामसंस्थापितोऽत-
स्तस्यार्थे पुष्पकं तत्प्रहितमिव....स्तोरणीभूय भाति ॥
यत्र वेदविदुषां द्विजन्मनां सा....................क्रमम् ।
षट्सु कर्मसु रतं बहुश्रुतं तेन वृन्दमनघं निवेशितम् ॥
उद्दामात्मविवेकसेकजनितश्रेयोल्लसत्पल्लवा
शश्व........पोषितद्विजगणा सद्वृत्तपुष्पोज्ज्वला ।
यस्येलाविपुलालवालवलयात्सत्कीर्तिवल्ली मही-
भृद्दण्डानधिरुह्य मण्डपमिव ब्रह्माण्डमारोहति ॥
संवत् १०९८ कार्तिक्यां श्रीकोकलेन ॥

(एपिग्राफिआ इण्डिका १४९-५० पृष्ठे)

---

## (९८)

## गोपगिरि(ग्वालिअरदुर्ग)मार्गस्थितविष्णुमन्दिर-प्रशस्तिः ।

ओम् ।

कालिन्द्याः किं जलौघो घनतिमिरनिभो जाह्नवीस्पर्धया नः
प्रोद्यातः किं न भूयो गगनतलगतिं विन्ध्यसानुर्विहन्तुम् ।

---

१. इयं च प्रशस्तिः १८८५ खिस्ताब्दे ग्वालिअरनगरं गतवता Dr. E. Hultzsch, Ph. D, महाशयेनोपलब्धा व्याख्याता च.

चिक्रंसोर्यस्य दृष्ट्वा चरणमतिचिरं सप्तयो नैव पूर्णो
जग्मुः क्षोमादिवोच्चैर्नमसि स मधुजिद्धन्तु वः कल्मषाणि ॥
अतिललितलाटमण्डलतिलकानन्दपुरनिर्गतो गुणवान् ।
वर्जारान्वयनागरभट्टकुमारोऽभवद्येन ॥
वाइल्लभट्टनामा तनयोऽजनि जनितजनचमत्कारः ।
न युधिष्ठिरोऽप्यकार्षीद्यः सह नेकुलेन सत्प्रीतिम् ॥
परिभाषादिज्ञानं वैयाकरणस्य यस्य परमासीत् ।
कैर्मोपधाविकारौ न कदाचिद्बाच(ध)कौ भूतौ ॥
सुशुभ्रतां व्याप्तदिगन्तरत्वमासाद्य दुग्धाब्धिरगाधतां च ।
जिगंसयोर्ध्वं च यशःपयोधिमाह्वास्त यस्याततरां तरङ्गैः ॥
धनदोऽपि न प्रमत्तो ध्वस्तसमस्तसविषोऽपि न विरूपः ।
रत्नाकरोऽपि न जडो यो नाशोकोऽपि रागिघ्नः ॥
श्रीरामदेवकार्ये मर्यादाधुर्यतामलङ्घयता ।
येन विशुद्धं युद्धे निजकुलवत्प्रकटितं नाम ॥
किं बहुना यस्य गुणाः कथयितुमपि नैव यान्ति मादृक्षैः ।
मानाधिकमम्बु यतो घटकोटावपि न गृह्णाति ॥
लक्ष्मीं मुरारिर्नगजां च शंभुः शचीं यथेन्द्रोऽथ तथा सुशीलाम् ।
कुलोद्गतां कासरकीयविष्णोः सुतां स कान्तां समवाप जज्जाम् ॥
व्यपगतमदमोहजालसङ्गः कृतचरितैकरतः प्रसन्नमूर्तिः ।
परिहृतखलसंगमः सुतोऽल्लः सकलकलाकुशलो बभूव ताभ्याम् ॥
न पितुर्धुरोऽधिकारी पुत्रोऽभूत्कश्चिदप्यमूञ्शब्दान् ।
श्रोतुमशक्तेनोहे धूस्तेन नविषयलुब्धेन ॥

---

१. 'वडनगर' इति नाम्ना सांप्रतं प्रसिद्धम्. २. चतुर्थपाण्डवेन, अप्रशस्तकुलेन च. ३. कर्मसंज्ञाधिकरणादिसंज्ञाया बाधिका. उपधाया विकारश्च बाधकत्वेन दृष्टः. अस्य तु कर्मणः कार्यस्य विकारः, उपधायां धर्मादिपरीक्षायां विकारश्च बाधको न. ४. क्षीबः, हृष्टश्च. ५. सविषाः सर्पाः, जलाशयाश्च. ६. विरूपो गरुडः, रूपहीनश्च. ७. समुद्रः, रत्नखनिश्च. ८. अशोकशोकरहितः, रक्ताशोकश्च. ९. स्नेहयुक्तः, रक्तवर्णश्च.

दुग्धाब्धेरिव मूर्तिर्यस्य सदा [1]दानवारिपरिपूता ।
[2]कमलालिङ्गितवपुषः प्रजापतेरिव तनुर्यस्य ॥
हर इव [3]वृषविहितास्थो [4]दोषासङ्गं न भानुरिव मेने ।
मधुरिपुरिव यः संततमाक्रान्त[5]विपक्षसंघातः ॥
यस्य [6]परार्थासक्ता सततं परिदृश्यते मतिर्नूनम् ।
निर्लोभत्वं तस्य हि जातं खलु यत्तदाश्चर्यम् ॥
संत्यक्त[7]परकलत्रो धर्मैकरतोऽपि सर्वदावश्यम् ।
निजवनितापरितुष्टोऽप्यभिलषितसुहृज्जन[8]प्रमदः ॥
अवलोक्य वक्त्रकमलं यस्य शशी स्वोदयेन मलविकलम् ।
कर्तुमनीशः किंचित्प्रतिक्षणं क्षीयतेऽद्यापि ॥
अकरोद्यश्च विकल्पं व्याख्यानविधौ न दानविषयेषु ।
संग्रामस्य न योऽभूत्पराङ्मुखः परकलत्रस्य ॥
स्थैर्यं वचसि न रोषे, स्पृष्टो विजयैर्न जातु कलिकलुषैः ।
यस्याभवदालस्यं पापेषु न राजकार्येषु ॥
धर्मार्जने च लोभो न कदाचित्परधनेषु विविधेषु ।
यस्य त्वविवेकित्वं मित्रेषु न बुद्धिविभवेषु ॥
दारिद्र्यं हरतार्थिनो रिपुजनाल्लक्ष्मीं [illegible] योषितः
रूपं पञ्चशरादगाधपयसो गाम्भीर्यमम्भोनिधेः ।
चित्रं येन विचारचारुमनसामाचारमातन्वता
सर्वत्रैव जनापवादरहितं चौर्यं प्रकाशीकृतम् ॥
कुर्वीत यदि विधाता कर्णानामपि सहस्रं[9]महिपस्य ।
श्रुत्वाथ तद्गुणौघान्वदनशतैः शक्नुयाद्वक्तुम् ॥
श्रीमदादिवराहेण त्रैलोक्यं विजिगीषुणा ।
तद्गुणान्यः परिज्ञाय कृतो गोपाद्रिपालने ॥

---

१. दानवारि संकल्पजलम्, दानवारिर्विष्णुश्च. २. कमलेन, लक्ष्म्या च. ३ धर्मः, बलीवर्दश्च. ४. दूषणानाम्, रात्रेश्च. ५. गरुडपक्षः, शत्रुश्च. ६. परवित्ते, उत्कृष्टेऽर्थे. ७. परं कुलीनम्, परस्येतरस्य. ८. प्रमदो हर्षः, प्रमदा अबलाश्च. ९. अहिपः, सर्पराजः.

कल्लुकदुहिता बब्बा येष्टतमामाप सोमटां तनयाम्।
भट्टसुतान्या गोग्गापरा महादेवजा गौरी॥
गोवर्धनजा सिल्ला नन्नकतनयेसटा च येनोढा।
बब्बादीनां स्वस्य च पुण्यस्य विवृद्धये महता॥
सिद्धेर्वर्त्म समं भवाब्धितरणे यद्यानपात्रं मह-
द्वीजं धर्मतरोरनन्तफलदं स्थानं श्रियः शाश्वतम्।
टङ्कोत्कीर्णयशोनिधानमिव यन्नामाक्षरैरङ्कितं
तेनाकारि विकारशून्यमनसा विष्णोरिदं मन्दिरम्॥
दधति जलमगाधं सागरा यावदुच्चै-
र्गिरिरयमपि वोढा यावदभ्रंकषस्य।
शिरसि शिखरराशेः स्थेयसी श्लाघ्यरूपा
स्थगयतु भुवि कीर्तौ रोदसी तावदेषा॥
नवसु शतेष्वब्दानां द्वात्रिंशत्संयुतेषु वैशाखे।
रम्येऽस्मिन्नेकशिले विष्णुर्भक्त्या प्रकाशितो भवने॥

(एपिग्राफिआ इण्डिका १५६-५७ पृष्ठे)

---

# (९९)

## कुदारकोट (गवीधुमत[1])ग्रामस्थितमन्दिरप्रशस्तिः[2]।

संनिहितनीलकण्ठा[3] नितम्बतटशोभिनी सिंसिंहगुहा[4]।
जयति प्रालेयाचलभूरिव दुर्गा सदा सुमुखा॥
आसीच्छ्रीहरिदत्ताख्यः ख्यातो हरिरिवापरः।
श्रीहर्षेण[5] समुत्कर्षं नीतोऽपि विकृतो न यः॥

---

१. अयं च ग्रामोऽधुना पश्चिमोत्तरदेशत्वेन प्रसिद्धे भूभागे 'इटावा' परिगणे इटावाग्रामत ऐशान्यां दिशि चतुर्विंशतिमैलदूरे वर्तते. २. यस्मिन्पाषाणे प्रशस्तिरियं लिखिता स पाषाणोऽधुना लक्ष्मणपुरे वर्तते. प्रशस्तिश्चेयं Dr. F. Kielhorn, Ph. D., C. I. E., महाशयैर्व्याख्याता. ३. मयूरः, महादेवश्च. ४. सिंहेन गुहेन च सहिता, सिंहेन गह्वरेण च सहिता. ५. अयमेव श्रीहर्षः सप्तमख्रिस्तशतकोत्पन्नमहाकविबाणेन हर्षचरिते वर्णितः.

अविचलितरत्नसंचयमक्षोभितभूभृदवधृतभुजङ्गम् ।
पुरुषोत्तमस्य विसदृशमासील्लक्ष्म्यर्जनं यस्य ॥

तस्याभवत्सुतनयो हरिवर्मनामा
श्रीमम्म इत्यपरनामकृतप्रतीतिः ।
यस्मिन्रवाविव तपत्यखिलस्वबन्धु-
स्त्रीवक्त्रपङ्कजवनानि विकासमीयुः ॥

यस्याद्यापि हतारातिमन्दिरोद्यानपादपान् ।
दावव्याजेन दहति प्रकामं कोपपावकः ॥

विशालवक्षःफलकाभिलक्ष्यप्ररूढखड्गव्रणसंनिवेशाः ।
अनेकसंयद्विजयाङ्कसंख्या निखातरेखा इव यस्य रेजुः ॥

[1]सरागयापि यस्यासीद्द्वयं द्रष्टुं न पारितम् ।
यत्पृष्ठमरिवाहिन्या यच्च वक्षः परस्त्रिया ॥

प्रजापतिं निर्मितसप्तसागरक्ष्माधरं यो लघयन्सिसृक्षया ।
महाह्रदानम्बुनिधीनकल्पयत्सुराधिवासानचलांश्च कोटिशः ॥

महान्तः कर्कशात्मानो बद्धमूला अपि क्षितौ ।
सावज्ञमाज्ञया येन नतिं नीता महीभृतः ॥

स्वप्रासादमहाभारगुरुभूततनोरिव ।
यः कूपखननव्याजैः सिरा भूमेरमोचयत् ॥

[2]मार्गणाभिमुखा [3]लुब्धाः समेताः फलकाङ्क्षया ।
विमुखा येन रिपवः कृता न पुनरर्थिनः ॥

लोके प्रथयतापूर्वं व्यवहारेषु कौशलम् ।
येनार्थित्वमगत्वैव जिताः प्रत्यर्थिनः सदा ॥

जनयामास यः पुत्रं त्रयीरक्षणदीक्षितम् ।
श्रीतक्षदत्तनामानं नमितारिशिरोधरम् ॥

---

१. सरागया मात्सर्ययुक्तया, अनुरागयुक्तया च. २. मार्गणा बाणाः, मार्गणं याच्ञा.
३. आकाङ्क्षी, व्याधश्च.

सर्वेषामभयप्रदेन सहजाः सन्तस्तथानेकशो
युद्धेऽनेन यशोर्थिना तृणमिव त्यक्ता वयं केवलम् ।
इत्युच्चैः परिवृद्धमन्यव इव प्राप्यावसानान्तरं
लब्धास्त्रव्रणरन्ध्रनिर्गमपथा यस्यासवो निर्ययुः ॥
रम्ये गवीधुमति संततवेदविद्या-
व्याख्यानघोषबधिरीकृतदिग्मुखेऽस्मिन् ।
उच्चैरचीकरदुरुस्थिरचारुचित्रं
त्रैविद्यमन्दिरमुदारमिदं स साधुः ॥
यावद्गुणाः शशिकरा इव तस्य लोक-
माह्लादयन्ति हृतसान्द्रतमःसमूहाः ।
एतद्द्विजातिभवनं भुवनाभिराम-
मव्याहतादिकृतसंविधि तावदास्ताम् ॥
भद्रेणैते रचिता वामनतनयेन सुचरितश्लोकाः ।
ऐशानिनापि लिखिता सूत्रधृता देवदेवेन ॥

बह्वृचचरणे सांकृत्यसगोत्रः सूर्यदत्तपुत्रो महासेनदत्तः । अध्वर्युचरणे वत्ससगोत्रो गीवत्ससोमपुत्रो जातवेदसोमः । छन्दोगचरणे कुहलसगोत्रः कुलदीपकीर्तिपुत्रो वैश्वानरकीर्तिः । बह्वृचचरणे वासिष्ठसगोत्रः उद्दैत(ध)रपुत्रः श्रीचन्द्रधरः । अध्वर्युचरणे औपमन्यवसगोत्रो बहुस्वामिपुत्रो बहुरूपशर्मा । छन्दोगचरणे गालवसगोत्रो धृतिगुप्तस्वामिपुत्रः.................

एतैर्महत्तमैः श्रीमत्रैविद्याज्ञानुपालनैः ।
कारितं धाम धर्मस्थैः श्रीमम्मस्य समाज्ञया ॥

(एपिग्राफिआ इण्डिका–१८०-८२पृष्ठे)

---

# ( १०० )

## कांगराज्वालामुखीस्तोत्रसंसारचन्द्रप्रशस्ती ।

ओं नमो ज्वालामुख्यै ।

पायाज्ज्वालामुखी वः प्रणतसुरवरस्फारकोटीरकोटी-
कोटीव्याटीकमानद्युमणिसममणिश्रेणिभावेणिभाता ।
कल्पान्तक्षोमजृम्भाभररभससमारम्भसंरम्भभीम-
ज्वालामालाकरालाननलघुकवलीभूतभूतप्रपञ्चा ॥
अव्याज्ज्वालामुखी वः समरसमरसीभावसंभावनोद्य-
द्गीर्वाणव्यस्तबाणप्रहसितदितिभूगर्वसर्वंकषौजा ।
शौर्याहंभावसंभावितमहिषगलामग्नखड्गाप्रधारो-
द्गच्छद्रक्तप्रणाली····त····रयहृतिच्छिद्रितोर्ध्वाण्डखण्डा ॥
पञ्चास्योदञ्चनप्राञ्चितचरणसरोजा सरोजासनादि-
····त्यासु त्यागशूरासुरगमरमदत्योनदत्पाञ्चजन्या ।
जन्या जन्यप्रपञ्चा प्रभवभयरुजाहारिणी हारिणी सा
वद्यावद्यानवद्यां धिय[मिय]मुदय[स्थे]त्रि वज्रेश्वरी वः ॥
साकं साकंसकंसाशमनशमनताशाविभाताविभाता
दिव्यादिव्यापदूनाविषमविषमयक्लेशभीमाशभीमा ।
वामावामावताद्वो यतिनि यति········निरीक्षासमक्षा
जालं जालंधरं श्रीचयनचयनयोगश्रितोमाश्रितोमा ॥
देवी ज्वालामुखी वश्चिरमशुममलं खण्डिषीष्टैधिषीष्ट
स्यामैतस्याः प्रसादात्किमपि तनु मह[श्चे]तसा संगसीष्ट ।
विद्या [वि]द्यो[ति]षीष्ट प्रकृतिमनुविदे····यिषीष्ट प्रसर्ति-
र्धीः संबोभूयिषीष्ट प्रचुरपरिमला····न्प्रकोकूयिषीष्ट ॥

---

१. इयं च प्रशस्तिः 'साहिमहम्मदे दिल्लीनगरं प्रशासति ( A. D. 1433-1446 ) निर्मितेति प्रशस्त्यन्तिमपद्येन व्यक्तम्. अत्रत्यस्तोत्रपद्यानि त्वस्फुटार्थान्येव. अत एव Dr. G. Bühler Ph. D., L. L. D., C. I. E., महाशयैरपि नवश्लोकभाषान्तरं न रचितम्.

दुर्गादुर्गार्तिवोऽव्यादलिकुलतरलां वैजयन्तीं जयन्ती-
मालामालालयन्ती कलितकलिमलाविश्रुताशाश्रुताशा ।
दुर्गादुर्गार्तिवोऽव्यादलिकुलतरलां वैजयन्तीं जयन्ती-
मालामालालयन्ती कलितकलिमलाविश्रुताशाश्रुताशा ॥
साव्याङ्गां सर्वदा वः कलितहरिपदादेवविद्यारसोमा
साव्याङ्गां सर्वदावः कलितहरिपदादेवविद्यारसोमा ।
साव्याङ्गां सर्वदा वः कलितहरिपदादेवविद्यारसोमा
साव्याङ्गा सर्वदावः कलितहरिपदादेवविद्यारसोमा ॥
एधन्ती(?) स्त्रियमानां वि····नु·········तिं····सर्वं·····नी
रुद्यन्ती वो विबाध····प·········या यापयन्ती सुखानि ।
पुंसः सेव्या विनत्या विजयति सुदुता कल्मषं त[क्ष्णु]वाना
शर्मेशौ·········सुकर्म(?) फलमुप[चिनु]ते····लोकस्य सारम् ॥
·········गासीष्ट·········ष्टं सकलकलिकलां कंसिषीष्टाशिशीष्ट(?)
श्रेयस्त्रासीष्ट दासीष्ट च निरतिशयां····तिं·········षीष्ट ।
·········सीष्टा····र·····का·····सदन·····रा गाहिषीष्टा·········षीष्ट
स्थासीष्टास्थां वृषीष्टाहितकृति निकृषीष्टाद्य कात्यायनी ते ॥
श्रीमद्राघवचैतन्यमुनिना ब्रह्मवादिना ।
[स्तव]रत्नावली सेयं [ज्वा]लामुख्यै समर्पिता ॥
विद्वानात्रेयगोत्रः कलिमलदलनो द्राविडः कृष्णभट्टः
षड्दर्शि(र्शी)न्याः प्रवक्ता नृपतिसुतनुतः सोमसंस्थाभिषिक्तः ।
तस्माद्वागीश्वराख्यः समजनि सुधियामग्रणीर्ग्रन्थकर्ता
मीमांसापारदृश्वा स्मृति····[नि]पु[णो] यक्षविद्याप्रवीणः ॥
तत्सूनुः कृष्णभट्टः परनरवनितासोदरः सर्वविद्या-
पारीणः काव्यकर्ता हरिहरचरणाम्भोजभृङ्गोऽतिवेलम् ।
काशीवासी समेत्यालिखदिदमुरुभिर्लि·········स्तोत्ररत्नं
ज्वालामुख्या महिम्नः कलयत तदिदं भुक्तिमुक्तिप्रधानम् ॥

वंशे जैवातृकस्याभवदवनिपतिर्मेघचन्द्रस्ततोऽभू-
द्राजा श्रीकर्मचन्द्रो गुणगणनिलयः सत्कुमुद्वत्सुधांशुः।
तस्मात्संसारचन्द्रः समजनि नृपतिः पञ्चमाब्दाभिषिक्तः
शत्रून्सर्वान्विजित्वा(?) वितरति वसुधां वेदशास्त्रार्थविद्भ्यः॥
कीर्तिर्यस्य तुषारहारविशदा लोकत्रयं गाहते
प्रालेयाद्रिमिषेण पन्नगपतिव्याजेन चन्द्रच्छलात्।
यन्मूर्तिश्च सतामभीष्टफलदश्चिन्तामणिः शोभते
सोऽयं भूपतिशेखरो विजयते संसारचन्द्रो नृपः॥
वीरप्रतीहारसुते वदान्ये महीपतेर्वोढरि राज्यभारम्।
रणी प्रवी(ती)हारजितारिवर्गे भवत्प्रशस्तिः परिरक्षति क्षितिम्॥
ब्रह्माण्डोच्चगुहान्तरे दृढतरं निर्माय कूर्मासनं
क्षीराम्भोनिधियोगपट्टकलिताप्युह्वा तमःकुन्तलान्।
कालं वस्तु विजित्य पश्यति परं ज्योतिः प्रतापाभिधं
श्रीमत्साहिमहम्मदस्य जयतात्कीर्तिः परा योगिनी॥
श्रीमद्रणपतिशुक्लप्रीत्या काम्बोजदेल्हस्य।
भक्त्या लेखितमेतत्स्तोत्रं सूगीकसूत्रधाराच(रेण)॥
श्रीमत्कर्मध्वजशिष्यसूर्यध्वजस्य ज्वालामुख्यै नमः।

(एपिग्राफिआ इण्डिका—१९२-१९४ पृष्ठे)

---

# ( १०२ )

## परमर्दिदेवमहामात्यसल्लक्षणकारितमन्दिरप्रशस्तिः[1]।

ओं ओं नमो भगवते वासुदेवाय।
जयन्ति बाहवः शौरेश्चतुर्वर्गफलद्रुमाः।
निर्भरश्रीपरीरम्भपर्याप्तपुलका········॥

---

१. इयं च प्रशस्तिः शिलायामुत्कीर्णा वटेश्वरग्रामे यमुनातीरस्थे उपलब्धाधुना लक्ष्मणपुरप्रदर्शिन्यां वर्तत इति Dr. F. Kielhorn, Ph. D., C. I. E., महाशयैर्वर्ण्यते.

..............................................................टि ।
इति च्छलात्स्पृष्टपयोधिपुत्रीपयोधरः पातु रथाङ्गपाणिः ॥

अत्रेरजायत विलोचनपुण्डरीका-
द्देवो गिरीन्द्रतनयादयितावतंसः ।
वंशस्ततोऽयमु.....................
मुक्ताफलैरिव यशोभिरशोभि शुभ्रैः ॥

अस्मिन्नुद्दामदोर्दण्डखण्डितारातिमण्डलाः ।
जज्ञिरे चारुचारित्राश्चान्द्रात्रेयमहीभुजः ॥

तेष्वाविरास विलसत्करवालदण्ड-
दम्भोलिनिर्दलितशात्रवगोत्रपक्षः ।
उद्दामदर्परिपुराजबलाभिघात-
ख्यातोद्यमो मदनवर्ममहीमहेन्द्रः ॥

सौधे सोच्छ्वसितं स्थितं सकरुणं लीलाशुको व्याहृतो
दृष्टो बाष्पजलौघरुद्धनयनं क्रीडाकुरङ्गीशिशुः ।
त्रासाद्यस्य यियासुना वनभुवं कान्ताजनेन द्विषां
प्रत्यावृत्तिनिराशमानसतया किं किं न वा चेष्टितम् ॥

सिन्दूरिताहितमतङ्गजकुम्भपृष्ठे
येनाहितोऽलिमलिनः करवालदण्डः ।
युद्धेऽरिभिर्निजविनाशविसर्पिशैघ्र्य
आलोकि केतुरिव नूतनसूर्यसङ्गी ॥

अजायत यशोवर्मा ततश्चन्द्र इवाम्बुधेः ।
योऽभवज्जगदानन्दो महेश्वरशिरोमणिः ॥

कुन्देन्दुकान्त्या त्रिजगद्विसारियदीयकीर्त्या धवलीकृतेषु ।
केशेषु जाता बत निर्जराणामभूतपूर्वा पलितस्य शङ्का ॥

आसीत्ततो नम्रनरेन्द्रमौलिरत्नप्रभापाटलपादपीठः ।
अखर्वगर्वप्रतिपक्षिसार्थदोर्दर्पमर्दी परमर्दिदेवः ॥

परस्परविरोधस्य तस्य राज्ये कथैव का।
संगतं श्रीसरस्वत्योरपि येन प्रवर्तितम्॥

प्रचलति ककुभां जयाय यस्मि-
न्हरिखुरधूतधरापरागपुञ्जः।
कवलितरविरश्मितीव्रतापा-
दिव पिबति स्म पयांसि तोयराशेः॥

यत्प्रतापदहने निरङ्कुशं संचरत्यपि सपत्नसद्मसु।
उद्बभूवुरधिकं हरिन्मणिश्यामकोमलतृणानि सर्वतः॥

अथास्ति लोकत्रितयप्रतीतं वसिष्ठगोत्रं सुकृतैकपात्रम्।
यस्मिन्नजायन्त विशुद्धवृत्ता विप्राः पयोधाविव मौक्तिकौघाः॥

तेषु क्रमादखिलशास्त्रसरोविहारि-
हंसोऽवतंसितशिवापतिपादपद्मः।
लक्ष्मीधरः स्फुरितभास्वदशीतरश्मि-
सब्रह्मचारिगुणमौक्तिकसिन्धुरासीत्॥

यदध्वरोल्लासिहुताशधूमलेखाः स्फुटानेकविभङ्गिभाजः।
दिगङ्गनापीनपयोधरेषु विलासवेणिश्रियमाश्रयन्त॥

अलभत जनिमस्मात्सच्चरित्रैकपात्रं
विनयसदनमेकं वत्सराजो द्विजेन्द्रः।
जलधिरिव गभीरः शैलवद्धैयसारो
मुररिपुरिव लक्ष्मीसंश्रयो यो बभूव॥

निर्मलगुणगणवतश्च मित्रोदयमोदिनोऽम्बुजस्येव।
शुक्लद्विजपरिभोग्या बभूव यस्यामला लक्ष्मीः॥

आसीदशेषश्रुतिसिन्धुहंसस्तस्यात्मजो लाहडनामधेयः।
पुपोष यो निर्मलवाग्विलासं रेमे च यः सज्जनमानसेषु॥

मन्त्रिणां धुरि कलोज्ज्वलकायं यं चकार मदनक्षितिपालः।
विष्टपत्रितयमेव जिगीषुः पञ्चबाण इव शीतमयूखम्॥

कुटुम्बकुमुदप्रौढप्रमोदने पटीयसी।
तस्यासीद्द्विजराजस्य प्रभा हृदयवल्लभा ॥
ततो बभूव द्विजराट्समक्षः सल्लक्षणश्चारुचरित्रपात्रम्।
अभूत्त्रिनेत्रः परमर्दिदेवः क्षोणीश्वरो येन विनिर्मलेन ॥
राज्य····रमशेषमेव भुजयोर्विन्यस्य यस्य स्वयं
वीरश्रीपरमर्दिभूपरिवृढः प्रौढप्रमोदोदयः।
त्रस्यद्बालकुरङ्गशावकदृशामुद्दामकामस्पृशां
पत्रन्यासकलाविलासरसिकस्वान्तोऽभवत्संततम् ॥
लक्ष्मीकेलिनिकेतनस्य भजतो मित्रोदयस्मेरतां
दूराधःकृतकण्टकस्य गुणिनो लोकैकतापच्छिदः।
अम्भोजस्य च तस्य च त्रिभुवने साधर्म्यमत्युज्ज्वलं
वैधर्म्यं तु पराङ्मुखः स न कदाप्यासीद्द्विजाधीश्वरे ॥
प्रासादो वैष्णवस्तेन निर्मितोऽन्तर्वहन्हरिम्।
मूर्ध्ना स्पृशति यो नित्यं पदमस्यैव मध्यमम् ॥
अकारयच्च स्फटिकावदातमसाविदं मन्दिरमिन्दुमौलेः।
न जातु यस्मिन्निवसन्स देवः कैलासवासाय चकार चेतः ॥
पीताम्बरं यस्य यशो बभूव सुदर्शनं यस्य वपुर्विजज्ञे।
गुणोत्करो यस्य च नन्दकोऽभूदासीत्स तस्मात्पुरुषोत्तमाख्यः ॥
त्रिभुवनमहनीयवृत्तवृद्धं शिशुमपि यं परमर्दिपार्थिवेन्द्रः।
अनयत सचिवेषु मुख्यभावं जगति गुणा हि पुमांसमर्घयन्ति ॥
अनेनाचारशुचिना ब्रह्मलोके विहारिणः।
कीर्तनं जनकस्येदमसिद्धं सिद्धिमापितम् ॥
गौडान्वयैकतिलकस्य गदाधराख्यो
लक्ष्मीधरस्य तनयः कविचक्रवर्ती।
विद्यावतां स परमः परमर्दिदेव-
संधानविग्रहमहासचिवो बभूव ॥

तस्यात्मजो देवधरः कवीन्द्रः प्रशस्तिमेतामतुलां चकार।
अस्यानुजो धर्मधरश्च धीरः कुतूहलाद्धालकविर्लिलेख॥
उच्चकार चमत्कारकारकः सर्वशिल्पिनाम्।
.....धीरो महाराजः सोमराजाङ्कभूरिमाम्॥
शंभुश्च विष्णुश्च बिभर्ति यावज्जटाकलापं च भुजान्तरं च।
पाथोधिजं धाम च कौस्तुभं च स्थिरास्तु कीर्तिश्च कृतिश्च तावत्॥
पक्षत्र्यक्षमुखादित्य(१२५२)संख्ये विक्रमवत्सरे।
आश्विनशुक्लपञ्चम्यां वासरे वासरेशितुः॥

श्रीरस्तु।

(एपिग्राफिआ इण्डिका—२०८-२११ पृष्ठे)

# (१०२)

## कान्यकुब्जाधीशमहेन्द्रपालराज्यसमकालिक-मन्दिरत्रयप्रशस्तिः।[१]

ओं नमो माधवाय।

याते यामवतीपतौ शि[खरिषु क्षामे]षु सर्वात्मना
ध्वस्ते ध्वान्तरिपौ जने विघटिते स्रस्ते च तारागणे।
भ्रष्टे भूवलये गतेषु च तथा रत्नाकरेष्वेकता-
मेको यः स्वपिति प्रधानपुरुषः पायात्स वः शार्ङ्गभृत्॥

---

१. अस्यां प्रशस्तौ यदि समयोल्लेखो न कृतस्तथापि 'स श्रीमाञ्जयति महेन्द्रपालदेवः' इत्युक्तेर्महेन्द्रपालराज्यनिर्माणकत्वं प्रतीयते. महेन्द्रपालसमयस्तु 'परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीभोजदेवपादानुध्यातपरमभट्टारकमहाराजाधिराजपरमेश्वरश्रीमहेन्द्रपालदेवपादानां महीप्रवर्धमानकल्याणविजयराज्ये संवत्सरशतेषु नवसु षष्ट्यधिकेषु चतुरन्वितेषु' इति (एपिग्राफिआ-इण्डिका-पुस्तके १७३ पृष्ठमुद्रितलेखे स्फुट एव. २. प्रशस्तिरियं पाषाणलिखिता लवपुर(लाहोर)नगरीयप्रदर्शिन्यां वर्तत इति व्याख्यानावसरे Dr. G. Bühler Ph. D., L L. D, C. I. E. महाशयाः.

दृष्टिः [पायाञ्जिग]दखिलं शार्ङ्गिणः कान्तमूर्तेः
कान्तासङ्गस्फुरितसुभगस्निग्धताराभिरामा ।
उद्यत्तीव्रसरजलनिधौ मज्जतः श्रीमुखेन्दु-
स्फारज्योत्स्ना[भव]····[रुच]ः स्मेरगण्डस्थलस्य ॥
क्षेत्रं कुरो[र्विविधपापम]लाभिघात-
दक्षं क्रियादुदयमस्तसमस्ततापम् ।
अध्यासितं मुनिगणैरुदितात्मबोध-
प्रध्वस्तगाढतिमिरप्रकटप्रमोदैः ॥
पोतः [संसारसि]न्धौ सुरपथगमने स्यन्दनः साधु[वर्ग]-
·················तवहैः प्रलयजलधरः संपतत्सान्द्रधारः ।
नानाव्याधिप्रबन्धप्रचुरतरतमःपङ्कविध्वंसभानु-
र्नीरं चैतत्समन्ताद्दयतु दुरित[गणं चारु] सारस्वतं वः ॥
यः शक्तः स्वकुल[मनुग्रहीतु]मृद्ध्या भिन्दानः परबलमानसं समन्तात् ।
स श्रीमाञ्जयति महेन्द्रपालदेवः शान्तारिः शशधरसुन्दरः शरण्यः ॥
आसीत्तोमरतुङ्गवंशति[लकश्चण्डप्र]तापोज्ज्वलो
राजा रञ्जितसाधुवृत्त[हृदयो दु]र्वृत्तशैलाशनिः ।
नाम्ना जाउल इत्यपूर्वचरितख्यातो दयालंकृति-
स्तत्त्वालोकिविलोकितक्षितिपतिव्यापारलब्धोदयः ॥
येन ज्ञातिकुलं क············[नी]तं परां संपदं
छिन्नारातिकरीन्द्रकुम्भशकलैः कृत्वोपहारं भुवः ।
कीर्त्या यस्य च नाकनागनिकरव्यासङ्गतः संगमा-
द्व्योम्नश्च स्फुरदिन्दुसुन्दररुचा स्वःसिन्धुलीलायितम् ॥
प्रतिदिश[ममरा]णां मन्दिराण्युच्छ्रिताग्र-
स्थगितशशधराणि स्फारमारोपितानि ।
जगति विततभासा येन दूरं विभान्ति
स्वयश इव निरोद्धुं शङ्कवो दिङ्निखाताः ॥

तत्संतानमहोदधेः प्रमुदितप्रोद्यद्भुजङ्गाश्रया-
दुर्लङ्घ्याद्धनमौक्तिकांशुनिकरस्फारीभवत्संपदः ।
प्रख्यातादजनि स्ववंशतिलकः श्रीवज्रदामाख्यः प्रभुः
प्राप्ताशेषमनोरथः शुभतरव्यापारतुङ्गोन्नतिः ॥

तस्य स्फुरदिन्दुरुचिः शौरेरिव जलधिकन्यका जाता ।
नाम्ना मङ्गलदेवी जाया गिरिजेव गिरिशस्य ॥

तस्मात्तस्यां जज्जुकः प्रादुरासीदुच्चैः शान्तः सत्सु निर्मत्सरेषु ।
क्रूरः केतुर्दुर्धरारातिचक्रे क्रुध्यत्सेनाकुञ्जरध्वानरौद्रे ॥

तस्य स्फुरन्निशितखड्गनिकृत्तशत्रो-
स्त्रस्तान्धदीननिकरोद्धरणोरुकीर्तेः ।
सद्वृत्तरक्तवनितातिलकाङ्ककल्पे
कान्ते बभूवतुरुदारशशाङ्ककान्ते ॥

एका चन्द्रेति विख्याता द्वितीया नायिकेति च ।
विशिष्टगुणनिर्माणाद्वे(द्वे) एव सदनं श्रियः ॥

चन्द्रायाः समजनि गोग्गनामधेयो धीराणां धुरि विनिवेशितो विधात्रा ।
भूनाथो द्विपदिभकुम्भभेदनिर्यन्मुक्ताभि[र्महितमहीतल]ः शितासिः ॥

अ[सू]त [च वि]चक्षणं क्षतविपक्षपक्षप्रभं
प्रभाकरकरोत्करं स्वबलसैनिकाम्भोरुहाम् ।
अधर्मपरिपन्थिनं तदनु पूर्णराजं सुतं
स्ववंशगगनोदरे तुहिन[दीधितिं नायि]का ॥

करत[ल]स्थगिताधरपल्लवाः प्रतनुकान्तिकपोलतलोदरम् ।
सिषिचुरश्रुजलैर्यदरिस्त्रियः सरलितप्रचुरालकजालकाः ॥

तस्य भ्राता गुणनिधिरभूत्सोदरो देवराजः
स्फूर्जत्तेजःप्रविहतपरस्फारसेनान्धकारः ।
स्थानं क्षान्तेः क्षतकलिमलः क्षिप्तरागादिदोषः
स्निग्धच्छायस्तरुरिव ततः सत्फलानम्रमूर्तिः ॥

नामापि प्रकटतरं निशम्य यस्य क्रुद्धस्य भ्रुकुटितरङ्गितानन्स्य ।
दृप्तानां युधि विकसद्विगाढभासां सस्रंसे करतलतः कृपाणदण्डः ॥

यदास्यसरसीरुहं सरसमर्थिनां पश्यतां
नितान्तमगमत्क्षणात्क्षयमुपद्रवो मानसः ।
व्यघूर्णत च संभ्रमात्प्रतिभटध्वनद्दन्तिनां
घटा विघटनोन्मुखी समिति यस्य सद्यः पुरः ॥

इत्युद्दामप्रकटितगुणोद्गाररम्याः क्रमेण
प्राप्तश्रीकाः शुभतरधियः साधुरक्तास्त्रयोऽपि ।
विष्णोः सौधान्यतुलमहसः कारयामासुरत्र
त्रस्तास्ती[व्राद्भवजल]निधेर्दुर्गमान्मन्दबोधैः ॥

गोग्गेन कारितं मध्ये पूर्णराजेन पृष्ठतः ।
पुरतो देवराजेन घनान्धतमसच्छिदे ॥

चतुःसमुद्रसीमाङ्कं यावदेतन्महीतलम् ।
इदमायतनं तावद्विभातु सदनं श्रियः ॥

धन्वन्तरि[प्र]तिनिधिः श्रुतसारमूर्तिः
सद्बन्धुरच्युत इति प्रकटाभिधानः ।
काम्बोजजः प्रभुमनःकमलद्विरेफो
रामस्य सूनुरिह कारयिता बभूव ॥

यक्षपालकनामैको द्वितीयो गेज्जराभिधः ।
पाटला[ख्य]स्तृती[योऽपि ग्रा]मो भोगाय कल्पितः ॥

अत्रार्यैः क्ष्मानाथैः श्रेयोर्थं देहस्य ।
संसारं दृष्ट्वोच्चैः कर्तव्या सद्बुद्धिः ॥

स्वकुलगगनभानुः⋯⋯⋯⋯रप्रसक्तः
श्रुतविनयविदग्धो भट्टरामः किलासीत् ।
प्रकृत मधुर[बन्धां मु]⋯⋯⋯सास्य सूनुः
सरसललितसारां लीलयेमां प्रशस्तिम् ॥

बभूव सूत्रधारोऽत्र दुर्लभादित्यसंज्ञितः।
......................लादित्येन धीमता॥

(एपिग्राफिआ इण्डिका—२४४-२४८ पृष्ठे.)

---

# (१०३)

## बिल्हारी-खेडी-शिलालेखः।

ओं नमः शिवाय।

पायाद्वः स समस्तमङ्गलनिधिः शंभोर्जटाजूटको
यस्मिँल्लोलसदिन्दुमण्डलगलन्मन्दाकिनीवारिभिः।
गाढग्रन्थिनिपीडितोरगपतिप्रस्फारफुल्लत्फणा-
भीमव्यावृतवक्त्रमारुतधृतैः श्वेतातपत्रायितम्॥

अपि च।

अव्याद्वश्चन्द्रचूडस्य लोचनार्चिष्मतः शिखा।
मित्रमेष स्मरस्येति दग्धुं विधुमिवोद्गता॥

यं खेलाय षडाननः शिशुतया कृत्वाग्रहं मार्गति
ग्रन्थो यश्च दुरोदरैः पुरभिदो देव्या समं दीव्यतः।
केलीकोपकथासु येन तनुते हेतिक्रियां पार्वती
पायाद्वः स जटावतैककुसुमं शार्वः सुधादीधितिः॥

दिक्षु प्रेङ्खाभियोगप्रवलितवलनाविभ्रमाकाण्डचण्डै-
र्दोर्दण्डानां प्रकामप्रथिमभिरनिलैर्दूरमुत्सारितासु।
किंच प्रस्फारचारीनमदवनिवशाद्व्योम्नि याते महत्ता-
मव्याद्व्याहतेच्छं त्रिपुरविजयिनस्ताण्डवाडम्बरं वः॥

वंशेऽत्र सोमसंभूतौ वाचं विक्षिपता मया।
हन्त हस्तैरुपक्रान्ता मोहेन वियतो मितिः॥

---

१. 'अयं ग्रामो जबलपुरप्रान्त आसीत्' इति, 'अधुना चेयं शिला नागपुरप्रदर्शिन्यामस्ति' इति, 'इयं प्रशस्तिश्च दशैकादशशिस्ताब्दशतके निर्मिता भवेत्' इति च Dr. F. Kielhorn, Ph. D., C. I. E., महाशयाः.

वाचामुज्ज्वलिमापि नास्ति यदि मे तत्कीर्णमानोन्नते-
रस्मादेव महीयसः शशभृतो वंशात्स संपत्स्यते।
यद्वा पश्य निसर्गकालिमभुवोऽप्याशेभदानच्छटाः
क्षीरोदन्वति किं न संगतिभृतस्तच्छायतां बिभ्रति॥

नेत्रादत्रेर्धरित्रीधवलनसुहृदां धाम धाम्नामुदञ्च-
ल्लोकालोकं यदाप प्रभवमतलिनध्वान्तविध्वंसहेतुः।
सोऽयं सोमाभिधानस्तिलकयति कला मौलिमस्यैव शंभो-
रस्मादेव प्रवृत्तः किमपरमयमप्यन्वयो हैहयानाम्॥

अस्मिंश्च वन्यतमतां गमिते बुधाद्यै-
राद्यैर्नृपैर्नृपतिरर्जुन इत्युदारः।
आसीद्द्विपद्विपिनकर्तनकीर्तनीय-
कीर्तिच्छटाच्छुरितदीर्घदिगन्तरालः॥

यद्वक्षस्तटताडनातितरलत्रुट्यत्पविप्रोच्छल-
ज्ज्वालामालिकरालितेन करिणा देवाधिपः क्वाप्यगात्।
लीलोल्लालितशर्वपर्वतपतेस्तस्यापि लङ्कापते-
र्यद्वैरव्यवसायिनो यदभवत्ख्यातिप्रमाणं हि तत्॥

दत्तात्रेय इति प्रकामकमलालीलायितानां पदं
यो देवः स सुतप्रतिश्रुतिवचःप्रीत्या यमन्वग्रहीत्।
के वा तद्गुणवर्णने वयमहो किं फल्गुभिर्जल्पितै-
र्मन्ये सापि च वाग्वपुर्भगवती तत्र स्फुटं मुह्यति॥

अथ ततस्ततसत्पुरुषव्रतव्रततिपर्वततः कति नाभवन्।
तरुणतारकराजपराजयव्यसनकीर्तिभुवः पतयो भुवः॥

तेष्वेवं संभवत्सु क्रममनु मनुजाश्चर्यतामादधानो
धन्यानामेकसीमा समुपनतमहीमण्डलाखण्डलाभः।
जातः कोकल्लदेवो दलदलितलतादाहदावायमानो
मानोत्तंसस्य यस्य त्रिभुवनवलयव्यापनोऽभूत्प्रतापः॥

भुवनविजयहेतोर्मुक्तमर्यादयादः-
सदनलडितलोलैर्यद्दलैः संवलद्भिः।
अतलिनतरभारभ्रश्यदुर्वीविषीद-
त्फणफलककलापो भोगिभर्ता बभूव॥
श्यामाशङ्किभिराकुलैर्विजघटे चक्राह्वयानां द्वयै-
रम्भोदागमविभ्रमेण विदधे लास्योत्सवः केकिभिः।
भग्नालोकमकाण्ड एव च दशामान्ध्येन लेभे पदं
यत्सेनारजसि क्रमादवनितस्तारापथे लुप्यति॥
वेलावनप्रणयिसैन्यभरे च यत्र
मज्जद्भिराकुलकुलाद्रिनिभैरिभेन्द्रैः।
संभ्रान्तमन्दरगिरेः समयस्य तस्य
कालाद्बहोः स्मरणमाप निधिर्जलानाम्॥
[यस्मि]श्च वैन्ध्यं तटमाददाने दानेद्धसेनागजमज्जनेन।
अमज्जुशिञ्जानशकुन्तचक्रं चक्रन्द दुःखादिव वृक्षजालम्॥
जित्वा कृत्स्नां येन पृथ्वीमपूर्व
कीर्तिस्तम्भद्वन्द्वमारोप्यते स्म।
कौम्भोद्भव्यां दिश्यसौ कृष्णराजः
कौबेर्यां च श्रीनिधिर्भोजदेवः॥
बभूव तस्मादथ मुग्धतुङ्गस्तुङ्गस्त्रिलोक्यामपरो न यस्मात्।
दिशश्च यः किंच विजेतुकामः कामस्तशत्रुर्न भुवं विलेभे॥
शय्या संग्रामलक्ष्म्याः परबलपरिघः पल्लवः कोपवल्ल्याः
प्रेयो दर्पस्य मित्रं सुचरितसलिलस्येन्द्रनीलप्रणालः।
शाखा शौर्यद्रुमस्य प्रसरणसरणिः शाश्वती साहसाना-
मासीद्यस्यासिरेव प्रधनपरिकरारम्भिणः प्रीतिपात्रम्॥
वल्गद्वेतालवर्गं त्रुटितनिजशिरोधारिधावत्कबन्धं
डात्कुर्वड्डाकिडिम्बं मुखबिलविलसत्संमुखोल्कामुखोल्कम्।

मांसग्रासाभिलाषस्वनदशिवशिवाभैरवारावरौद्रं
रौद्रं यो धाम बिभ्रत्प्रतिसमरमिति द्वेषिचक्रं चकार ॥

उपविपिनभुवो निधेर्जलानामपि वसता कटकेन यस्य यातुः ।
अवचयविचलद्वधूकराग्रद्विगुणितविद्रुमपल्लवा बभूवुः ॥

इह विहितविलासा वीचयो वारिराशे-
रिह स वहति वायुः केरलीकेलिकारः ।
इह हरति भुजङ्गः सौरभं भूरुहाणा-
मिति मलयसमीपे यद्विचाराः प्रचेरुः ॥

विजित्य पूर्वाम्बुधिकूलपालीः पालीः समादाय च कोसलेन्द्रात् ।
निरन्तरोद्वासितवैरिधामा धामापिकः खङ्गपतिर्य आसीत् ॥

गौडीगाढमनोमनोरथकरः कर्णाटकान्ताकुच-
क्रीडाशैलतटीविहारहरिणो लाटीललाटाङ्गदः ।
काश्मीरीविहितस्मरव्यतिकरस्तस्मात्कलिङ्गाङ्गना-
सद्गानव्यसनी स नीतिनयनः केयूरवर्षोऽभवत् ॥

आशापालपराजयाय जनितत्रैलोक्यशङ्कापदं
सैन्यैर्यस्य युगान्तकेलिकलनैर्दत्तप्रयाणैरपि ।
न प्रोद्धूतिमवाप पांशुपटलं भूयोगृहीतद्विष-
द्वन्दीवृन्दवहद्विलोचनपयःपूरप्लुतायां भुवि ॥

यः संयति प्रकटपाटितकुम्भिकुम्भ-
मुक्ताफलप्रचयवाहमुवाह देवः ।
भूयोनिपीतदृढपीडनवेगवान्त-
विद्वेषिकीर्तिकणकीर्णमिवासिदण्डम् ॥

आ कैलासादनलसलसत्पार्वतीकेलिबन्धो-
रा च प्राचः शिखरिवरतो भास्वदुद्भासभूमेः ।
आरात्सेतोस्तदनु पयसामा प्रतीचोऽपि पत्यु-
र्यत्सेनानामहितनिहितानन्ततापः प्रतापः ॥

प्रेङ्खत्क्षिप्रखु(क्षु)[र]प्रघातविगलत्कीलालल्लोलोल्लस-
  द्वेतालीकरयन्त्रपीडनवशभ्रश्यत्कपालास्थिभिः।
यस्तस्तार सविस्तरं रणभुवः कोपोत्कटाभिद्रव-
  द्भूपद्वेषिशिरोभिरम्बरचरीनेत्रत्रिभागार्चितैः॥

देवो रुद्रावतारस्त्रिभुवनभवनोत्तम्भनो देव एव
  त्यागी देवः प्रमाद्यन्नृपतिनियमने नैगडं दाम देवः।
इत्थं मद्वन्दिवृन्दैरविरलविलसच्चाटुवादं वदद्भि-
  र्यस्यास्थानस्थितानामसमसुहृदां विव्यथे चित्तवृत्तिः॥

भरद्वाजो नाम च्युतकलुषदोषः समभव-
  द्य एकः सर्वेषामुपशमधनानामधिपतिः।
तदीयात्तेजस्तः कृतकलशवासाद्यदभव-
  त्स वै भारद्वाजस्त्रिभुवनचमत्कारिचरितः॥

त्रैलोक्यावधि यस्य कीर्तिलडितं लक्ष्मीश्च वाञ्छावधि-
  र्यत्कोपः प्रलयोपपन्नमहिमा शापेन चापेन च।
वर्ण्यं वा नयविक्रमैकजलधेः किं तस्य यस्याभव-
  ल्लीलाखर्वितशर्वगर्वगरिमा शिष्यः सुभद्रापतिः॥

कोदण्डताण्डवनपण्डितबाहुदण्ड-
  मुद्दण्डकाण्डभरखण्डितपाण्डुसैन्यम्।
यं वीक्ष्य विक्षतविपक्षपराजयाशः
  सत्याद्दतः स तपसोऽपि सुतश्चचाल॥

अथाक्षेपात्तेन द्रुपदविपदर्थोद्धतधिया
  यदात्तं शापाम्भस्तरलितकराबद्धचुलुकम्।
पुमानासीत्तस्मिन्विजय इव साक्षादनु च तं
  कुलं चौलुक्यानामनणुगुणसीम प्रववृते॥

विभवति च विसर्पच्छौर्यसौन्दर्यवर्य-
  क्षितिधरपरिपाटीसूत्रिते तत्र गोत्रे।

रचितचटुलचापाकृष्टिकृष्टाहितश्री-
रभवदवनिवर्मा विश्वविख्यातकर्मा ॥
पितामहो यत्खलु सिंहवर्मा पिता च यद्वीरवरः सधन्वः ।
जगत्यतीवातिशयोऽमुनैव महानुभावत्वमतोऽपि यत्तु ॥
यस्य त्यागः सकलजनतापास्तदारिद्यमुद्रो
वेलाबन्धुक्षितिधरदरी चारितारिः प्रतापः ।
ईष्टे स्पष्टं स यदि गणनां तद्गुणानां विधातुं
वाचां धेनुर्ननु भगवती भारती यस्य वश्या ॥
रुद्राणीमिव भूभृतां परिवृढो लक्ष्मीमिवाम्भोनिधिः
कालिन्दीमिव भास्करः स भगवाञ्ज्योत्स्नामिवात्रेः सुतः ।
वैदेहीमिव जानकः क्रतुविधिः श्रीनोहलेत्यद्भुतं
कन्यां नाम ललाम तां स सुषुवे सामन्तचिन्तामणिः ॥
भर्तुः पुलोमतनयेव मरुद्गणानां
छायेव दष्टतमसां महसां च पत्युः ।
देवस्य सा रतिरिवेक्षुशरासनस्य
केयूरवर्षनृपतेर्दयिता बभूव ॥
देव्या तया मदजलच्छटयेव दन्ती
बालप्रवाललतयेव तटः पयोधेः ।
पुष्पश्रियेव च तरुस्तडितेव मेघः
शोभां स कामपि बभार नरेन्द्रचन्द्रः ॥
निर्मापितं सुकृतसंगतये तयेद-
मभ्रंकषाग्रशिखरस्खलितोष्णरश्मि ।
देवस्य मन्दिरमुमाप्रणयैकबन्धोः
स्त्यानाकृति स्वयशसामिव चक्रवालम् ॥
आकाशयानक्रमखेदितानामह्नोऽधिनाथस्य तुरंगमाणाम् ।
फेनाम्बुभिर्नित्यनिषिच्यमाना मन्ये समुद्भ्रान्ति न यस्पताकाः ॥

विटङ्कभागेषु बृहत्सु यस्य वर्षासु तुङ्गामलसारकस्य ।
आश्लेषवत्यो नवमेघमालाः पारावतालीतुलनां वहन्ति ॥
आसीन्माधुमतेयः **पवनशिव**स्तमनु जयति **शब्दशिवः** ।
**ईश्वरशिवः** पुनाति च तस्यान्तेवासितां सुकृती ॥
तस्मै तपोनिधानाय निपानीयाम्बिपाटकौ ।
दत्तौ विद्याधनत्वेन ग्रामवग्राम्यया तया ॥
धङ्गटपाटकपोण्डीनागबलाः खेटपाटको वीडा ।
सज्जाहली च दत्ताः सराय गोष्ठपाली च ॥
ख्यातः श्रीयुवराजदेवनृपते(ति)स्तस्यामभूद्भूपतिः
श्रीमल्लक्ष्मणराज ऊर्जितमहा भास्वानिवाम्युन्नतः ।
भूभृत्तुङ्गशिरोभिरङ्घ्रिरुचयो यत्सेविताः श्री[चिताः]
कामं यः कमनीयसुन्दरगुणैर्नव्यैर्जिगाय श्रियम् ॥
यस्याहवे दृढनिपीडितखड्गकोटि-
निर्दारितारिकरिकुम्भसमुद्भवेन ।
वीरश्रियः क्षितितले वितत चतुष्कं
मुक्तादलेन ननु कीर्तिवधूश्चकार ॥

किं च—

सा कदम्बगुहा मान्या यत्रासीत्सिद्धसंततिः ।
तस्याः पुनरभूद्वन्द्यो **रुद्रशंभु**र्मुनीश्वरः ॥
तत्र प्रभावमहनीयतमस्य तस्य
शिष्योऽभवज्जगति **मत्तमयूरनाथः** ।
निःशेषकल्मषमषीमपहृत्य येन
संग्रामितं पुरमहो नृपतेरवन्तेः ॥
तस्मादभूद्भुवनमण्डनतामवाप्तो
भूपालमौलिमणिकान्तिभिरर्चिताङ्घ्रिः ।
**श्रीधर्मसिन्धु**रुचितामलकान्तकीर्तिः
शैवागमाम्बुनिधिपारमितस्तपोभिः ॥

अस्मात्सदाशिवः शिष्यस्तपोराशिरभून्नृपैः ।
यत्पा(स्य पा)दद्वयं वन्द्यमर्चितं शेखराम्बुभिः ॥
अस्मादभून्माधुमतेयनामा शिष्यः सुधामा फलमूलवृत्तिः ।
तपांसि तेजांसि च यत्र वासमनन्यसंक्रान्तिगुणेन चक्रुः ॥
अस्माच्चूडाशिवः शिष्यो वन्दनीयतमोऽभवत् ।
कर्मजालमलं येन नीतमस्तं मुमुक्षुणा ॥
अथ सकलगुणानामाकरस्तस्य शिष्यो
हृदयशिवसमाह्वो यद्यशोऽद्यापि वर्ण्यम् ।
नृपमुकुटनिविष्टैर्यस्य माणिक्यचक्रै-
रकृत चरणमूलं कान्तमेकान्तवन्द्यम् ॥
विद्यानां निलयेन येन सुधिया सत्यव्रतेनाधिक
श्रीमन्माधुमतेयवंशवितता कीर्तिश्चिरं वर्धिता ।
किं च क्ष्मा क्षमयाम्बुदः समतया मर्यादयाम्भोनिधि-
र्वैराग्येण जितः स्मरः स भगवान्कस्यास्पदं न स्तुतेः ॥
किं स्तूयतेऽसौ मुनिपुङ्गवोऽथवा श्रीचेदिचन्द्रो नृपतिः कृतादरः ।
सद्वृत्तदूतप्रहितैरुपायनैः प्रदर्श्य भक्तिं विधिनानिनाय यम् ॥
श्रीमल्लक्ष्मणराजोऽपि तस्मै सुतपसे स्वयम् ।
मठं श्रीवैद्यनाथस्य भक्तियुक्तः समार्पयत् ॥
स्वीकृत्यापि मुनिर्भूयो मठं श्रीनौहलेश्वरम् ।
अघोरशिवशिष्यस्य साधुवृत्तस्य दत्तवान् ॥
अथ स विहितकृत्यश्चेदिनाथः समर्थः
करितुरगसमग्रः शक्तसामन्तपत्तिः ।
दिशमतिशयरम्यां संप्रतस्थे प्रतीची-
महितजनितभीतिर्दुर्निवारप्रचारः ॥
समरकृतविकारान्विक्रमेण प्रहृत्य
प्रणतनृपतिदत्तोपायनैर्वर्द्धिताङ्गः ।

हृदयनिहितवित्तैरर्थिनां पूरिताशो
जलनिधिजलखेलं सैन्यचक्रं चकार ॥
निमज्ज्य यो रत्ननिधौ श्रीमान्सोमेश्वरं शनैः ।
अभ्यर्च्य काञ्चनैः पद्मैरथान्यत्तु न्यवेदयत् ॥
जित्वा कोसलनाथमोड्रनृपतेरासस्तु यः कालियो
रत्नस्वर्णमयः स येन विहितः सोमेश्वराभ्यर्चनम् ।
दत्त्वा यः करिवाजिशुभ्रवसनस्रकन्दनादीन्पुनः
संसारश्रमशान्तयेऽतिविनतस्तुष्टाव तुष्टः प्रभुः ॥
असारं संसारं य इह मनुते कोऽपि नृपति-
स्त्वदङ्घ्रिध्यानतया विगलिततमास्तत्त्वनिरतः ।
न तस्य श्रीर्भूयो विकृतिकृतये जन्मविरहा-
दिति ध्यानाविष्टः शिवमहसि चित्तं विहितवान् ॥
श्रीशंकरगणस्तस्मादभूद्भूमीश्वरो महान् ।
यत्पादद्वन्द्वमद्वन्द्वं द्विषद्भिरपि सेवितम् ॥
संख्ये संख्यविपक्षपक्षदलनव्यासङ्गि खड्गव्रतं
यस्यासीद्दृढसाहसस्य सततं दानं जनानन्दकृत् ।
रूपेणाप्रतिमो मनोभवभवं दर्पं जहारोद्धतं
यः सर्वत्र च सर्वकालमवनीनाथः स्तुतः कोविदैः ॥
यत्पादद्वयपद्मसद्म विततं भूतेरभूद्भूषितं
भूपानां नमतां किरीटविकटप्रान्तस्थरत्नांशुभिः ।
वक्षोरत्ननिधिं समाश्रितवती लक्ष्मीः क्रमेणागता
वीरश्रीरपरैव यस्य नृपतेः कौक्षेयधाराश्रया ॥
तस्य श्रीयुवराजदेवनृपतिर्भ्राता कनीयानभू-
द्भूपैर्यच्चरणारविन्दपतितैर्भृङ्गैरिवा····स्थितम् ।
यः सत्यव्रतसत्त्वसूक्तिवसतिः श्रीविक्रमैकाश्रयः
प्रायस्तस्य न सज्जनोऽपि सकलान्वक्तुं गुणाञ्शक्ष्यति ॥

दंष्ट्राकोटिविपाटनोग्रवदनः क्रूरस्वरो भास्वरो
नेत्रप्रान्तविकीर्णकोपरुधिरः पादप्रचारायुधः।
येनाक्रम्य भुजेन भूमिपतिना लाङ्गूलबद्धक्रमो
दैत्यो व्याघ्रवपुर्हतोऽतिभयदः शस्त्रीभृता पाणिना॥
कन्दर्पोऽभिनवः पुरंध्रिनयनप्रीतिप्रदोऽप्यन्यथा
यः कालः करवालकोटिविहितस्थूलेभकुम्भस्थलः।
चित्रं यच्च सरस्वतीकृतरतिः श्रीकण्ठपूजापर-
श्चातुर्वर्ण्यविचारचारुचतुरो यश्चार्थचिन्तामणिः॥
यस्योत्तुङ्गगजेन्द्रमज्जनगलद्दानाम्बुभिर्मिश्रितं
रेवावारि विविक्ततिक्तमुचितस्नानेन तन्वीजनः।
संप्राप्योरुनितम्बताडनवशाव्यस्तास्तवीचीचयं
सद्वन्द्वं सरसौरभेण महता निर्व्याजमायोजितः॥
रामाणां कुचमण्डलेषु नियतं हारप्रकारक्रमा-
त्संपूर्णे शशिमण्डले च विमले ज्योत्स्नाछलेनोज्ज्वलम्।
मन्ये मानसवारि यस्य वितते हंसावलीविभ्रमा-
द्भ्रान्त्वाशेषमुमापतेस्तु वसतो विश्रान्तिमागाद्यशः॥
संपूज्य देवमीशानं विभवैः स्वैर्यथोचितैः।
यथागमं यथाशास्त्रं स्तोत्रं विहितवान्नृपः॥
अविचलितमनोभिर्यैस्त्वमीश क्षितीशै-
र्विभवविहितकृत्यैरिज्यसे ते कृतार्थाः।
य इह कृतविकारा मन्मथैकान्तचित्ता
भवति वरद तेषां संपदुन्मादहेतुः॥
समदकरिघटाभिः किं किमङ्काङ्गनाभि-
र्मदनशयनलीलां भावयन्तीभिराभिः।
कनकतुरगवासोरत्नजातैर्न कृत्यं
न हि भवति भवानीवल्लभस्यार्चनं चेत्॥

१. इदं च पदं विरुद्धमतिकारित्वदोषदुष्टमिति ध्येयम्.

भवति नृपतिवंशे जन्म पृथ्वी च योग्या
श्रुतमुचितविचारश्चारुरूपप्रभावः।
समरविजयसंपत्तस्य यो निष्प्रपञ्च-
श्चरणयुगलमूलं संश्रितः शंकरस्य ॥
किमिह बहुभिरुक्तैर्नाथ सर्वस्य हेतु-
र्भवतु भवति नित्यं भक्तियोगी ममैकः।
सकलसुखविशेषाद्यस्य पीयूषवर्षः
स्वयमनुभवगम्यो जायते त्वत्प्रसादात् ॥
भूपत्रययशोराशिवर्णनं प्रथमं कृतम्।
श्रीमता श्रीनिवासेन श्रीस्थिरानन्दसूनुना ॥
भूपतीनां त्रयाणां तु कीर्तिकीर्तनमुज्ज्वलम्।
विहितं सज्जनेनाथ सुधिया धीरसूनुना ॥
लवणखण्डिकायां (?) षोडशिका घाणके च षोडशिका।
तैलस्य मासि मासे दिनमनु च युगायुगे च पौरस्तु ॥
पूगफलमरिचशुण्ठीप्रभृतिषु भाण्डेषु भरिकपौरस्तु।
वीथीं प्रति च कपर्दी द्यूतकपर्दास्तु शाकवार्ताकम् ॥
रसवणिजामादायस्तृणपूलकधीर्मरादि यत्किंचित्।
दत्ते करी चतुष्टयमङ्ग तुरङ्गो द्वयं तु पौराणाम् ॥
यद्वहदन्यद्दानं किमपि च विद्याधनं तदुद्दिष्टम्।
य.................................[की]र्तयः प्रवर्तन्ते ॥
यत्र च श्रीनोहलेश्वरमठे श्रीमदघोरशिवाचार्योऽभूत्।
क्वचिद्भिक्षावृत्तिः क्वचिदपि च शाकाभ्यवहृतिः
क्वचिन्मूलाहारः क्वचिदपि च कन्दांश्च बुभुजे।
परं ज्योतिः शैवं विगलितरजस्कान्धतमसं
विचिन्वन्नो यातो विषविषयवेगस्य कलनाम् ॥
तेनेयं प्रशस्तिः संगतिमानीता।

---

१. पराक्षरेण सहाश्लीलार्थकम्. २. 'पत्तनमण्डपिकायां' इति भवेत्.

श्रीत्रिपुरीसौभाग्यपुरलवणनगरदुर्लभपुरविमानपुर··········

·········माष्ट····षः प्रत्यहमथ रक्षितः समानेयः ।

·································दारुणि ॥

सुश्लिष्टबन्धघटना विस्मितकविराजशेखरस्तुत्या ।

आस्तामियमाकल्पं कृतिश्च कीर्तिश्च पूर्वा च ॥

कायस्थश्रीसीरुकस्य ।

करणिकधीरसुतेन तु नाईनाम्ना प्रशस्तिरालिखिता ।

सत्सूत्रधारसंगमतनूजनोन्नेन चोत्कीर्णा ॥

स्वकीयः·····························

(एपिग्राफिआ इण्डिका २५४-६२ पृष्ठे)

---

## ( १०४ )

## विजयसेनमहाराजकारितश्रीप्रद्युम्नेश्वरमन्दिरप्रशस्तिः ।

ॐ नमः शिवाय ।

वक्षोंशुकाहरणसाध्वसकृष्टमौलि-

माल्यच्छटाहतरतालयदीपभासः ।

देव्यास्त्रपामुकुलितं मुखमिन्दुभाभि-

र्वीक्ष्याननानि हसितानि जयन्ति शंभोः ॥

लक्ष्मीवल्लभशैलजादयितयोरद्वैतलीलागृहं

प्रद्युम्नेश्वरशब्दलाञ्छनमधिष्ठानं नमस्कुर्महे ।

---

१. 'इयं प्रशस्तिः शिलोत्कीर्णा Mr. C. S. Metcalfe महाशयेन वङ्गदेशवर्तिराजशाहीप्रदेशान्तर्गतदेवपाडग्रामस्यारण्यभूभागेषु ग्रावनिकरेऽलम्भि. प्रशस्तिश्चैषा महाराजविजयसेनस्य प्रद्युम्नेश्वराख्यशिवमन्दिरनिर्माणं बोधयति. विजयसेनराज्यसमयश्चैकादशशतकान्तिमभाग इति प्रतीयते' इति Dr. F. Kielhorn Ph. D., C. I. E., Gottingen. महाशयानामाशयः.

यत्रालिङ्गनभङ्गकातरतया स्थित्वान्तरे कान्तयो-
देवीभ्यां कथमप्यभिन्नतनुताशिल्पेऽन्तरायः कृतः ॥
यत्सिंहासनमीश्वरस्य कनकप्रायं जटामण्डलं
गङ्गाशीकरमञ्जरीपरिकरैर्यश्चामरप्रक्रिया ।
श्वेतोत्फुल्लफणाञ्चलः शिवशिरःसंदानदामोरग-
श्छत्रं यस्य जयत्यसावचरमो राजा सुधादीधितिः ॥
वंशे तस्यामरस्त्रीविततरतकलासाक्षिणो दाक्षिणात्य-
क्षोणीन्द्रैर्वीरसेनप्रभृतिभिरभितः कीर्तिमद्भिर्बभूवे ।
यच्चारित्रानुचिन्तापरिचयशुचयः सूक्तिमाध्वीकधाराः
पाराशर्येण विश्वश्रवणपरिसरप्रीणनाय प्रणीताः ॥
तस्मिन्सेनान्ववाये प्रतिसुभटशतोत्सादनब्रह्मवादी
स ब्रह्मक्षत्रियाणामजनि कुलशिरोदाम सामन्तसेनः ।
उद्गीयन्ते यदीयाः स्खलदुदधिजलोल्लोलशीतेषु सेतोः
कच्छान्तेष्वप्सरोभिर्दशरथतनयस्पर्धया युद्धगाथाः ॥
यस्मिन्संगरचत्वरे पटुरटत्तूर्योपहूतद्विष-
द्वर्गे येन कृपाणकालभुजगः खेलायितः पाणिना ।
द्वैधीभूतविपक्षकुञ्जरघटाविश्लिष्टकुम्भस्थली-
मुक्तास्थूलवराटिकापरिकरैर्व्याप्तं तदद्याप्यभूत् ॥
गृहाद्गृहमुपागतं व्रजति पत्तनं पत्तना-
द्वनाद्वनमनुद्रुतं भ्रमति पादपं पादपात् ।
गिरेर्गिरिमधिश्रितं तरति तोयधिं तोयधे-
र्यदीयमरिसुन्दरीसरकपृष्ठलग्नं यशः ॥
दुर्वृत्तानामयमरिकुलाकीर्णकर्णाटलक्ष्मी-
लुण्टाकानां कदनमतनोत्तादृगेकाङ्गवीरः ।
यस्मादद्याप्यविहतवसामांसमेदःसुभिक्षा-
द्धृष्यत्पौरस्त्यजति न दिशं दक्षिणां प्रेतभर्ता ॥

उद्गन्धीन्याज्यधूमैर्मृगशिशुरसिताखिन्नवैखानसस्त्री-
स्तन्यक्षीराणि कीरप्रकरपरिचितब्रह्मपारायणानि।
येनासेव्यन्त शेषे वयसि भवभयास्कन्दिभिर्मस्करीन्द्रैः
पूर्णोत्सङ्गानि गङ्गापुलिनपरिसरारण्यपुण्याश्रमाणि॥
अचरमपरमात्मज्ञानमीष्मादमुष्मा-
न्निजभुजमदमत्तारातिमाराङ्कवीरः।
अभवदनवसानोद्भिन्ननिर्णिक्ततत्त-
द्गुणनिवहमहिम्नां वेश्म हेमन्तसेनः॥
मूर्धन्यर्धेन्दुचूडामणिचरणरजः सत्यवाक्कण्ठभित्तौ
शास्त्रं श्रोत्रेऽरिकेशाः पदभुवि भुजयोः क्रूरमौर्वीकिणाङ्कः।
नेपथ्यं यस्य जज्ञे सततमियमिदं रत्नपुष्पाणि हारा-
स्ताडङ्कं नूपुरस्त्रक्कनकवलयमप्यस्य भृत्याङ्गनानाम्॥
यद्दोर्वल्लिविलासलब्धगतिभिः शल्यैर्विदीर्णोरसां
वीराणां रणतीर्थवैभववशाद्दिव्यं वपुर्बिभ्रताम्।
संसक्तामरकामिनीस्तनतटीकाश्मीरपत्राङ्कितं
वक्षः प्रागिव मुग्धसिद्धमिथुनैः सातङ्कमालोकितम्॥
प्रत्यर्थिव्ययकेलिकर्मणि पुरः स्मेरं मुखं बिभ्रतो-
रेतस्यैतदसेश्च कौशलमभूद्दाने द्वयोरद्भुतम्।
शत्रोः कोऽपि दधेऽवसादमपरः सख्युः प्रसादं व्यधा-
देको हारमुपाजहार सुहृदामन्यः प्रहारं द्विषाम्॥
महाराज्ञी यस्य स्वपरनिखिलान्तःपुरवधू-
शिरोरत्नश्रेणीकिरणसरणिस्मेरचरणा।
निधिः कान्तेः साध्वीव्रतविततनित्योज्ज्वलयशा
यशोदेवी नाम त्रिभुवनमनोज्ञाकृतिरभूत्॥
ततस्त्रिजगदीश्वरात्समजनिष्ट देव्यास्ततो-
ऽप्यरातिबलशातनोज्ज्वलकुमारकेलिक्रमः।

१. एतदीयखड्गस्य.

चतुर्जलधिमेखलावलयसीमविश्वंभरा-
विशिष्टजयसान्वयो विजयसेनपृथ्वीपतिः ॥
गणयतु गणशः को भूपतींस्ताननेन
प्रतिदिनरणभाजा ये जिता वा हता वा ।
इह जगति विषेहे स्वस्य वंशस्य पूर्वः
पुरुष इति सुधांशौ केवलं राजशब्दः ॥
संख्यातीतकपीन्द्रसैन्यविभुना तस्यारिजेतुस्तुलां
किं रामेण वदाम पाण्डवचमूनाथेन पार्थेन वा ।
हेतोः खड्गलतावतंसितभुजामात्रस्य येनार्जितं
सप्ताम्भोधितटीपिनद्धवसुधाचक्रैकराज्यं फलम् ॥
एकैकेन गुणेन यैः परिणतं तेषां विवेकादृते
कश्चिद्धन्त्यपरश्च रक्षति सृजत्यन्यश्च कृत्स्नं जगत् ।
देवोऽयं तु गुणैः कृतो बहुतिथैर्धामाज्जघान द्विषो
वृत्तस्थानपुषच्चकार च रिपूच्छेदेन दिव्याः प्रजाः ॥
दत्त्वा दिव्यभुवः प्रतिक्षितिभृतामुर्वीमुरीकुर्वता
वीरासृग्लिपिलाञ्छितोऽसिरमुना प्रागेव पत्रीकृतः ।
नेत्थं चेत्कथमन्यथा वसुमती भोगे विवादोन्मुखी
तत्राकृष्टकृपाणधारिणि गता भङ्गं द्विषां संततिः ॥
त्वं नान्यवीरविजयीति गिरः कवीनां
श्रुत्वान्यथामननरूढनिगूढरोषः ।
गौडेन्द्रमद्रवदपाकृत कामरूप-
भूपं कलिङ्गमपि यस्तरसा जिगाय ॥
शूरंमन्य इवासि नान्य किमिह स्वं राघव श्लाघसे
स्पर्धा वर्धन मुञ्च वीर विरतो नाद्यापि दर्पस्तव ।
इत्यन्योन्यमहर्निशप्रणयिभिः कोलाहलैः क्ष्माभुजां
यत्कारागृहयामिकैर्नियमितो निद्रापनोदक्रमः ॥

---

१. जयेन सार्थकः.

पाश्चात्यचक्रजयकेलिषु यस्य याव-
दूङ्गाप्रवाहमनुधावति नौविताने ।
भर्गस्य मौलिसरिदम्भसि भस्मपङ्क-
लग्नोज्झितेव तरिरिन्दुकला चकास्ति ॥

मुक्ताः कार्पासबीजैर्मरकतशकलं शाकपत्रैरलाबू-
पुष्पै रूप्याणि रत्नं परिणतिभिदुरैः कुक्षिभिर्दाडिमानाम् ।
कूष्माण्डीवल्लरीणां विकसितकुसुमैः काञ्चनं नागरीभिः
शिक्ष्यन्ते यत्प्रसादाद्बहुविभवजुषां योषितः श्रोत्रियाणाम् ॥

अश्रान्तविश्राणितयज्ञयूपस्तम्भावलीं द्रागवलम्बमानः ।
यस्यानुभावाद्भुवि संचचार कालक्रमादेकपदोऽपि धर्मः ॥

मेरोराहतवैरिसंकुलतटादाहृत्य यज्वामरा-
न्व्यत्यासं पुरवासिनामकृत यः स्वर्गस्य मर्त्यस्य च ।
उत्तुङ्गैः सुरसद्मभिश्च विततैस्तल्लैश्च शेषीकृतं
चक्रे येन परस्परस्य च समं द्यावापृथिव्योर्वपुः ॥

दिक्शाखामूलकाण्डं गगनतलमहाम्भोधिमध्यान्तरीयं(पं)
भानोः प्राक्प्रत्यगद्रिस्थितिमिलदुदयास्तस्य मध्याह्नशैलम् ।
आलम्व(म्ब)स्तम्भमेकं त्रिभुवनभवनस्यैकशेषं गिरीणां
स प्रद्युम्नेश्वरस्य व्यधित वसुमतीवासवः सौधमुच्चैः ॥

प्रासादेन तवामुनैव हरितामध्वा निरुद्धो मुधा
भानोद्यापि कृतोऽस्ति दक्षिणदिशः कोणान्तवासी मुनिः ।
अन्यानुच्छपथोऽयमृच्छतु दिशं विन्ध्योऽप्यसौ वर्धतां
यावच्छक्ति तथापि नास्य पदवीं सौधस्य गाहिष्यते ॥

स्रष्टा यदि स्रक्ष्यति भूमिचक्रे सुमेरुमृत्पिण्डविवर्तनाभिः ।
तदा घटः स्यादुपमानमस्मिन्सुवर्णकुम्भस्य तदर्पितस्य ॥

वि(बि)लेशयविलासिनीमुकुटकोटिरत्नाङ्कुर-
स्फुरत्किरणमञ्जरीच्छुरितवारिपूरं पुरः ।

चखान पुरवैरिणः स जलमग्नपौराङ्गना-
स्तनैणमदसौरमोच्चलितचञ्चरीकं सरः ॥
उच्चिताणि दिगम्बरस्य वसनान्यर्धाङ्गनास्वामिनो
रत्नालंकृतिभिर्विशेषितवपुःशोभाः शतं सुभ्रुवः।
पौराढ्याश्च पुरीः श्मशानवसतेर्भिक्षाभुजोऽस्याक्षयां
लक्ष्मीं स व्यतनोद्दरिद्रभरणे सुज्ञो हि सेनान्वयः ॥
चित्रक्षौमेभचर्मा हृदयविनिहितस्थ(स्थू)लहारोरगेन्द्रः
श्रीखण्डक्षोदभस्माकरमिलितमहानीलरत्नाक्षमालः।
वेषस्तेनास्य तेने गरुडमणिलतागोनसः कान्तमुक्ता-
नेपथ्यन्तस्थिरिच्छासमुचितरचनः कल्पकापालिकस्य ॥[1]
बाहोः केलिभिरद्वितीयकनकच्छत्रं धरित्रीतलं
कुर्वाणेन न पर्यशेषि किमपि स्वेनैव तेनेहितम्।
किं तस्मै दिशतु प्रसन्नवरदोऽप्यर्धेन्दुमौलिः परं
स्वं सायुज्यमसावपश्चिमदशाशेषे पुनर्दास्यति ॥
प्रस्तोतुमस्य परितश्चरितं क्षमः स्या-
त्प्राचेतसो यदि पराशरनन्दनो वा।
तत्कीर्तिपूरसुरसिन्धुविगाहनेन
वाचः पवित्रयितुमत्र तु न प्रयत्नः ॥
यावद्ब्रह्मास्तोष्पतिपुरधुनी भूर्भुवःस्वः पुनीते
यावच्चान्द्री कलयति कलोत्तंसतां भूतभर्तुः।
यावच्चेतो गमयति सतां श्रुतिमानं त्रिवेदी
तावत्तासां रचयतु सखी तत्तदेवास्य कीर्तिः ॥
निर्णिक्तसेनकुलभूपतिमौक्तिकाना-
मग्रन्थिलग्रथनपक्ष्मलसूत्रवल्लिः।

---

१. 'चित्रक्षौमैरिभचर्म यत्र' इत्यादिरीत्या सकलविशेषणव्याख्यानं कृत्वा 'कल्पकापालिकस्येच्छासमुचितरचनो वेषस्तेन सेनान्वयेन तेने'—इत्यर्थः.

एषा कवेः पदपदार्थविचारशुद्ध-
बुद्धेरुमापतिधरस्य कृतिः प्रशस्तिः ॥
धर्मप्रणप्ता मनदासनप्ता बृ(बृ)हस्पतेः सूनुरिमां प्रशस्तिम् ।
चखान वारेन्द्रकशिल्पिगोष्ठीचूडामणी राणकशूलपाणिः ॥

(एपिग्राफिआ इण्डिक्—३०७-११ पृष्ठे)

---

## (१०५)

## श्रीवीरवर्ममहिषीश्रीकल्याणदेवीनिर्मापित-निर्जरकूपप्रशस्तिः ।

ओं ओं सिद्धिः ।

अर्धमीशतनोर्दध्ना शिलोच्चयसुताहृतम् ।
ई[र्ष्ये]येव कृशा शीर्षे पातु वोऽमरवाहिनी ॥
स्मरैकमित्रं नयनप्रमोदो जीयाच्छिरोभूषणमिन्दुमौलेः ।
इन्दुर्यतः श्रीचपलत्वदोषनोदी धरायामुदियाय वंशः ॥
कुम्भोद्भवः कर्णपयोधिपाने प्रजेश्वरो नूतनराज्यसृष्टौ ।
तत्रास विद्याधरगीतकीर्तिः श्रीकीर्तिवर्मक्षितिपो जगत्याम् ॥
सल्लक्षणो मालवचेदिलक्ष्मीलुं[टा]कखड्गः क्षितिपश्च तस्मात् ।
जयैकधामा जयवर्मदेव[स्तस्मा]च्च राज्यं प्रशशाम [धी]रः ॥
पृथ्वीवर्माभवत्तस्माद[थ] राजा पृथूपमः ।
ततोऽपि मदनः क्ष्माभृद्राज्येऽभूद्रिपुमन्मथः ॥

---

१. Sir A. Cunningham महाशयानुसारेण लेखोऽयं कालञ्जरनामग्रामतो नैर्ऋतदिग्वर्तमानाजयगढाख्यगिरिदुर्गेऽस्ति. कालञ्जरग्रामश्च Greenwitch नगरतः ८०–२० मिते पूर्वरेखांशे, २४–५४ मिते उत्तराक्षांशेऽस्ति. लेखश्चायं शिलायां देवनागराक्षरैरसंस्कृतभाषायामेव वर्तते. लेखनिर्मितिसमयस्तु लेखान्ते संवत् १३१७ A. D. १२६१ इति स्फुट एव ।' इति Professor F. Kielhorn. Ph. D., C. I. E., Gottingen महाशयाः.

अथाभव[च्छ्रीप]रमर्दिराजो बालोऽपि नेता रिपुवीरहन्ता।
[साम्रा]ज्य[ल]क्ष्मीर्यमिहानुरक्ता पतिंवरेवाशु समाजगाम॥
**त्रैलोक्यवर्म**क्षितिपोऽथ राज्यं [शशास दु]र्गप्रविधानवेधाः।
तुरुष्ककुल्याम्बुधिमग्नधा[त्री] समुद्धृतिं विष्णुरिव प्रतन्वन्॥
रणाजिरे कृत्तरिपुप्रवीरप्रियाप्तिसंमोदितनाकक[न्यः]।
तस्यात्मजो **वीर**[मही]महेशो जयत्यसौ निर्मलवीरधर्मः॥
तार्क्ष्येण[1] वल्गान्विहरन्वृषेण[2] दुष्टप्रहन्ता रिपुराशिभेत्ता।
किं विष्णुरीशः किमु वेति दृष्टो जयत्यसौ विश्वजनैर्नमस्यः॥
**दधीचिवंशे**ऽद्भुतसत्य[धा]मा श्री[**चा**]**द्लो**ऽभूद्भुजजन्मवन्द्यः।
अथास्य साक्षादिव वीरधर्मो[र्मः] **श्रीपाल** इत्यास शु[सु]तो वरिष्ठः॥
मूर्द्धाभिषिक्तैरपि वन्दनीयो **महेश्वर**स्तत्तनयो बभूव।
यं राजमानं वृष[ली]लयैव यथार्थनामानमुदाहरन्ति॥
**गोविन्दराज**क्षितिपालपुत्री तेनोपयेमे सुचरित्रशी[सी]मा।
लोकोत्तरैर्या चरितैः प्रपूज्या शिवेव नित्यं पतिदेवतानाम्॥
नाम्ना [वेस]**लदेवी**ति सौन्दर्यगुणशालिनी।
**कल्याणदेवी**ति सुता तस्या-अथ यशस्विनी॥
सेयं सदा श्रीरिव कैटभारेः **श्रीवीर**[राज्ञो] महिषीत्वमाप्ता।
मनोहरै[ः स्वैः] चरितैरुदारैर्बभूव पुण्यैः परिकीर्तनीया॥
किं व[र्ण्य]ते चारुचरित्र[सी]मा विशुद्धकीर्तिप्रथिता जगत्याम्।
या सत्यवाचा भुवनप्रसिद्धं धर्मप्र[भुः] तं सहसा जिगाय॥
तेषां वं[द्यत]मावशिष्टदयिता स्थाणो शरीरार्धकं
भ्राजिष्णुं गिरिजां नमन्ति किल ते गङ्गापि तैः संस्तुता।
ते [काम]प्रमदास्तुतिव्यवसिता येषां न दृग्गोचरा
[सत्याद्यैः] प्रथिता गुणैः शुचितनुः कल्याणदेवी [गि]रा।
[आयुः] श्रीवयसां स्थितिं कमलिनी[प]त्रोल्लसद्वारिण-
स्तुल्यां प[ण्य]नत[भ्रुवो] निपति[ता] मोहान्धकारे घने।

---

१. 'तार्क्ष्यस्तु स्यन्दने वाहे गरुडे.' २. 'वृषेण धर्मेण सौरभेयेण.'

[एकां] कीर्तिलतां विलोक्य सुचिरं स्थाणुं तदुत्पत्तये
सत्यौदार्यगुणा········मचिरात्कल्याणदेवी [गिरा] ॥
[स्थली] मथेयं व(ब)लिश[स्त्र]गु[प्तां] निश्चित्य चक्रे कृपया परीता।
जीवातवे पूर्ण[त]नुं पयोभिः सुधोपमैर्निर्जरकूपमेनम् ॥
सा पा[त्रं] प्रददावे[कं] निर्जरस्य यशस्विनी।
पुण्य[मे]तत्प्रय(पा)याश्च मण्डपं रुचिरं व्यधात् ॥
सागरोपमकासारं [महाशे]स्वर[म]न्दिरम् ।
[नां]दीपुरे [च]कारासौ यशोधवलितावनिः ॥
**वत्सराजकवेः** पौत्रो **हरिपालकवेः** [सु]तः ।
**रत्नपाल** इमां शुद्धां प्रशस्तिमकरोद्बुधः ॥
सागरेन्द्वग्निसुधांसु(शु)मिते विक्रमवत्सरे ।
उच्चकार विसु(शु)द्धात्मा विदग्धो **राम**[नाम]कः ॥

संवत् १३१७ रा श्रीजे(त)नव्यापारे ॥ श्रीमद्वीरवर्मराज्ये ॥ वैशाष-(ख)शुदि १२ गुरौ ॥ ०००००००००००

(एपिग्राफिआ इण्डिक्—३२७-२८ पृष्ठे)

---

# (१०६)

## भोजवर्मकोशाध्यक्षसुभटस्य पूर्वजानां देवालयस्य च प्रशस्तिः ।

ओं नमः केदाराय ।

गङ्गातरङ्गतरलीकृतसर्पराज-
वे[ष्टा]य चारुशशिखण्डविभूषणाय ।

---

१. अयं च द्वितीयो लेखः शिलोत्कीर्णस्तत्रैव (अजयगढे) F. Kielhorn. Ph. D. महाशयेन सव्याख्यः प्रकाशितः. लेखसमयश्च भोजवर्मराज्यकालः विक्रमसंवत् १३४५ A. D. 1300. लेखश्चायं भोजवर्मकोशाध्यक्षस्य सुभटाख्यस्य देवालयनिर्माणं सूचयन्सुभटपूर्वजानां वृत्तं प्रकाशयति.

कन्दर्पदर्पशमनाय सुरार्चिताय
　केदाररूपवि[धृ]ताय नमः शिवाय ॥
षट्त्रिंशतिः करणकर्मनिवासपूता
　आसन्पुरः परमसौख्यगुणातिरिक्ताः ।
तन्मध्यगा विबुधलोकमता वरिष्ठा
　टक्कारिका समजनि स्पृहणीयकल्पा ॥
सर्वोपकारकरणैकनिधेः स्वकीय-
　वंशस्य पात्रसुभगस्य द्विजाश्रयस्य ।
कल्पावसानसमयस्थितये पु[रीं]यां
　वास्तुः स्वयं समधिगम्य समाससाद ॥
तस्यां श्रुतेर्निनदसङ्कुनिनादितायां
　वास्तव्यवंशभविनंकरणास्त आसन् ।
आशाः समस्तभुवनानि यदीयकीर्त्या
　पूर्णानि हंसधवलानि विशेषयन्त्या ॥
विद्याश्चतुर्दश कलाः सकलाः समीयुः
　पद्माभिराममिव वल्लभमायताक्ष्यः ।
यं गर्भसंस्थमविलम्बितमद्वितीयं
　दुःखं वियोगजमसंवृतमुद्वहन्त्यः ॥
तद्वंशतः स उदपादि नरेश्वरेण
　**गण्डाह्वयेन** युधि दुर्जयतां गतेन ।
**जाजूकसंज्ञ** इति ठक्कुर[ध]र्मयुक्तः
　सर्वाधिकारकरणेषु सदा नियुक्तः ॥
आराध्य तं नृपतिमण्डलमण्डनैकं
　देवं गदाधरमिवाच्युतवासमाद्यम् ।
कायस्थवंशनलिनीगणतादिनेशो
　ग्रामं **दुगौंडमपि** ताम्रकमाशु लेभे ॥

तत्संततौ सकलवाङ्मयपारदृश्वा
भूभूषणं निशिपतेरिव कान्तिभर्ता।
मोहान्धकारकुहरेषु निपातहर्ता
**माहेश्वरः** समभवत्सुकृताभिसर्ता॥
यः पीतशैलविषयेषु महीपतीनां
चूडामणिं समनु[से]व्य समार्जयच्च।
श्री**कीर्तिवर्म**नृपतिं विशिषाभिधानं
**कालञ्जरस्य** पिपलाहिकया समेतम्॥
तस्मिन्कुले महति सज्जनलोकजुष्टे
**गङ्गाधरः** समुदभूत्सचि[वो]ऽभिरामः।
नूनं विचार्य **परमर्दि**नरेश्वरेण
युक्तः स [कञ्चुकि]तया परया तु धीरः॥
**जौणाधर**स्तदनुजः सहकर्मचारी
सदारतः समरकर्मणि मोक्षकारी।
तौ वीरमार्गमनुसृत्य गिरौ गरिष्ठे
**कालञ्जरे** युयुधतुर्विशिखा[कु]लेन॥
तथैव **मालाधर**नामधेयस्तस्य द्वितीयोऽजनि वीरमुख्यः।
सुरैः सदाकल्पतरुप्रसूनैरभ्यर्चितो यः समरेषु रेमे॥
क्रमेण तस्मिन्प्रबभूव धीर **आल्हू** प्रतोलीरुचिराधिकारः।
येनावरुद्धे कलुषे वृषेण सदैव रेमे रभसेन दुर्गे॥
तस्यात्मजश्चापि बभूव रम्यः शुभान्वितः **शोभन**नामधेयः।
चित्रैश्चरित्रैः ककुभां मुखानि यश्चित्रयामास शुचिर्गुणौघैः॥
विद्यानिधानं तनयश्च तस्य विद्याधरैस्तुल्यतनुर्बभूव।
यस्मिन्नृपो **वीदन**नामधेयौ(ये) विन्यस्य राज्यं सुमनाः सदैव॥
वशं पुराम्येति जनस्य चित्तं **त्रैलोक्यवर्म**क्षितिपस्य [चा]त्र।
इतीव **वाशेरचित**ाभिधानो बभूव पुत्रोऽस्य गुणैरुदारः॥

कार्यक्षमं तं विगणय्य राज्या(जा)दुर्गे जयाख्ये विशिषाधिकारे।
नियोज्य तस्मै व्यतरत्प्रसिद्धं ग्रामं सदा ब[र्मि]वरीति नाम्ना॥

तस्मिन्मनोरममयं सुरसद्म वापीं
वास्तव्यवंशतिलकः सुजलां च रम्याम्।
विज्ञाय देहमचिरं चिरतां सिसृक्षुः
प्राचीकरत्तदनुया(पा)धिकलेवरेण॥

तत्रायं परिपन्थिपार्थिवचमूकुक्षेषु दावानलो
द्वैराज्यं जनयत्तमप्रतिहतं कृत्वा कृतान्तातिथिम्।
भोजूकं युधि युद्धदुर्मदनिधिं वाशेकनामा सुधी-
र्भूयो येन महीशवंशतिलकस्त्रैलोक्यवर्मा कृतः॥
स्फीतं राज्यमकण्टकं गुणिगणाक्रान्तातिसर्वास्पदं
दानेनोज्ज्वलवद्विधाय विधिवत्सीमाः समस्ता अपि।
तेनालम्भि महीधरे जयपुरे कैलासवासोपमे
वासो वासववासदर्पदलनो रम्यप्रतोलीकृते॥

अस्यानुजः पुण्ययशा उदार आनन्दनामा प्रथितः पृथिव्याम्।
सदैव लोकं मदयन्तमाराद्यं सत्यनामानमुदाहरन्ति॥
भियामभूमिं विगणय्य चैनं दुर्गाधिकारे नृपतिः प्रचक्रे।
आज्ञाकरान्पल्लिनिवासिनोऽयं चकार भिल्लान्सबरान्पुलिन्दान्॥

तस्यात्मजोऽभवद[सौ] रुचिराभिधानो
विद्यासु तासु सकलासु शुचिः कलासु।
यो लीलयैव विहरन्समराङ्गणेषु
तीव्रानरातिनिवहान्कुणितामनैषीत्॥

दुर्गे जयाख्ये प्रबलासुरौघविध्वंसनीं स्तोत्रपरम्पराभिः।
दुर्गां स्तुवन्नेष सदैव भक्त्या कृताञ्जलिः पुण्यतमामुपास्ते॥
गुणैरुदारः सुकृतैकचारः पापापहारः सुजनैकसारः।
[श]स्त्रास्त्रविद्यानिपुणः प्रवीणः कलासु रेजे स सदा यशस्वी॥

तस्यात्मजो **गोपति**नामधेयो विद्यावदातो नृपतिप्रपूज्यः ।
श्रियां गिरां चाप्यविरोधवासो वन्द्यः सतां साधुजनैकसेव्यः ॥

तस्यानुजन्मा **महिपाल**नामा सौन्दर्यशौर्यप्रवरो रराज ।
यं वीक्ष्य लज्जावनतो मनोभूः सदैव चित्तेषु तिरोबभूव ॥

जयति तदनुजन्मा श्रीविलासैकसौधः
सुकृतिजनवरिष्ठो वाग्मिनामग्रणीश्च ।
नृपतिसमितिदक्षः श्लाघनीयस्वभावः
**सुभट** इति च नाम्ना कीर्तनीयस्वरूपः ॥

परोपकारप्रतिबद्ध[कां]क्षः प्रारब्धकार्याधिगतार्थसिद्धिः ।
श्री**भोजवर्म**क्षितिपस्य सोऽभूत्कोशाधिकाराधिपतिः सदैव ॥

सर्वाभारधुरंधरोऽपि सुभटो विश्वासविद्यास्थितिः
**श्रीमद्भोज**महीमहेन्द्रसचिवः प्रख्यातकीर्तिर्गुणैः ।
निर्मर्यादपरोपकारनिरतः सौजन्यमुद्रानिधि-
र्भाण्डागारपतिश्चिरं विजयते धर्मैकबुद्धिर्भृशम् ॥

लोकः शोक............[दुःखत्रयी]मन्दिरं
दोला[न्दो]लनचञ्चलं धनमिदं स्वल्पायुषो मानुषाः ।
धर्मः केवल एव देहविरहे देहान्तरं गच्छतो
गन्ता [त्या]गविधेरसंभवतया देवालयः क्रीयताम् ॥

ततो जाता महाप्राज्ञा महिपालसुतास्त्रयः ।
**कीर्तिपालो बृहत्कीर्तिः** कुमारो मारसंनिभः ॥

..............................................

(अपूर्णोऽयं लेखः)

(एपिग्राफिआ इण्डिक्—३३-३५ पृष्ठे)

# (१०७)

## सिद्धान्तशिरोमण्याद्यनेकग्रन्थनिर्मातृश्रीमद्भास्कराचार्यवंशप्रशस्तिः[1]।

ओं नमो गणाधिपतये।

सिद्धं दि[वा]करसुधाकरभूमिपुत्र-
श्वेतांशुपुत्रगुरुशुक्रश[नैश्चरा]···· ।
·············स····द्ध··················
संरक्षणानि गगनेचरचारवो वः ॥
उद्भट[बु]द्धिर्भाट्टे सांख्येऽसंख्यः स्वतं[त्र]धीस्तन्त्रे।
वेदेऽनव[द्य]विद्योऽनल्पः शिल्पादिषु कलासु ॥
स्वच्छन्दो यश्छन्दसि शास्त्रे वैशेषिके विशेषज्ञः।
यः श्रीप्रभाकरगुरुः प्राभाकरदर्शने कविः काव्ये ॥
[ब]हुगुणगणितप्रभृतिस्कन्धत्रितये त्रिनेत्रसमः।
विबुधाभिवन्दितपदो जयति **श्रीभास्कराचार्यः** ॥
श्रीमद्यदुवंशाय स्वस्त्यस्तु समस्तवस्तुसहिताय।
विश्वं यत्र त्रातुं जातो विष्णुः स्वयं त्रस्तम् ॥
गर्जद्गूर्जरकुञ्जरोत्कटघटासंघट्टकण्ठीरवो
लाटोरस्ककपाटपाटनपटुः कर्णाटहृत्कण्टकः।
**श्रीमान्भिल्लम**भूपतिः समभवद्भूपालचूडामणि-
स्तत्रार्तान्भ्रपुरंध्रिकान्तसुखहृच्छ्रीजैत्रपालोऽभवत् ॥

---

१. प्रशस्तिलेखोऽयं पाषाणखण्डोत्कीर्णः खानदेशान्तर्गतचालीसगांवतो दक्षिणपश्चिमायां वर्तमाने निर्जने पटनाख्ये ग्रामे भग्ने भवानीमन्दिरे डॉक्टर्-भाऊ-दाजी-महाशयैरुपलब्धः प्रसिद्धज्योतिर्विच्छ्रीमद्भास्कराचार्यपौत्रो यदुवंशीयसिंहणाख्यस्य राज्ञः प्रधानगणकश्चङ्गदेवेति नाम्ना स्वपितामहविरचितसिद्धान्तशिरोमण्यादिग्रन्थप्रचाराय मठमेकमधिस्थापयामासेतिवृत्तं लेखेनानेन सुव्यक्तीक्रियते. समयश्च लेखान्ते व्यक्त एव.

लक्ष्मीकान्तलवः प्रतारि[त]भवः श्रीजैत्रपालोद्भवः
सङ्गमाङ्गण[सं]चितातिविभवः शास्ता भुवः **सिङ्घणः** ।
पृथ्वीशो मथुराधिपो रणमुखे काशीपतिः पाति[तो]
येनासावपि यस्य भृत्यवटुना हं[मी]रवीरो जितः ॥
अवततार पुरा पुरुषोत्तमो यदुकुले जगतीहितहेतवे ।
जयति सोऽयमिमां सकलामिलामवति मा **पतिसिंहमहीपतिः** ॥

अथ भृत्यान्वयवर्णनम् ।

श्रीमद्भास्करवंशाय भव्यं भूयात्स भूपतिः ।
**निकुम्भो** यत्र संभूतो **रा[मो]** यस्यान्वयेऽभवत् ॥
तत्रासीन्नृपतिर्जितक्षितिपतिर्ध्यातैकलक्ष्मीपति-
र्देवब्राह्मणवन्दने त[त]मतिः श्री**कृष्णराजा**ह्वयः ।
शौ[र्यौ]दार्यविवेकविक्रमगुणैस्तुल्यो न येनापरः
प्राप्तं पाण्डवपुंगवार्जितपदं तद्धर्मराजेति यत् ॥
आसन्नप्रभवस्ततस्ततमतिः प्राप्तप्रतापोन्नति-
र्वीरो वैरवधूविधूनितशिरा यः श्री**इन्द्रराजा**ह्वयः ।
तस्यासीत्तनयः सतां सविनयः सामन्तसीमन्तिनी-
वैधव्यव्रतसद्गुरुर्गुरुगणः सत्पुण्यपण्यापणः ॥
चतुरस्तुरगारूढो रेवन्त इव **गोवनः** ।
सौन्दर्यदर्पकन्दर्पो यं दृष्ट्वानङ्गतां गतः ॥
श्रीगोवनासं[स्तुत रत्न] सिन्धोरुद्भूतमूर्तिस्ततपुण्यकीर्तिः ।
जितारिचक्रः क्षितिपालचक्रः श्री**सोइदेवः** स्तुतवासुदेवः ॥
शरणागतवज्रपञ्जरः परनारीषु सदा सहोदरः ।
व्रतसत्यपथे युधिष्ठिरः सततं वैरिवधूभयज्वरः ॥
स षोडश[श]तग्रामदेशं दुर्गपुरान्वितम् ।
सोइदेवे दिवं याते शास्ति तस्यानुसंभवः ॥
त्यागे सूर्यसुनोपमोऽर्जुनसमः शौर्ये निकुम्भान्वये
विख्यातः क्षितिपालभालतिलकः श्री**गोवन**स्यात्मजः ।

श्रीमत्सिङ्घणदेववैरिकरटो कण्ठीरवो यत्करो
नन्द्यान्नन्दसुनन्दने [तत]मतिर्हेमाडिदेवश्चिरम् ॥
शाण्डिल्यवंशे कविचक्रवर्ती त्रिविक्रमोऽभूत्तनयोऽस्य जातः।
यो भोजराजेन कृताभिधानो विद्यापतिर्भास्करभट्टनामा ॥
तस्माद्गोविन्दसर्वज्ञो जातो गोविन्दसंनिभः।
प्रभाकरः सुतस्तस्मात्प्रभाकर इवापरः ॥
तस्मान्मनोरथो जातः सतां पूर्णमनोरथः।
श्रीमन्महेश्वराचार्यस्ततोऽजनि कवीश्वरः ॥
तत्सूनुः कविवृन्दवन्दितपदः सद्वेदविद्यालता-
कन्दः कंसरिपुप्रसादितपदः सर्वज्ञविद्यासदः।
यच्छिष्यैः सह कोऽपि नो विवदितुं दक्षो विवादी क्वचि-
च्छ्रीमान्भास्करकोविदः समभवत्सत्कीर्तिपुण्यान्वितः ॥
लक्ष्मीधराख्योऽखिलसूरिमुख्यो वेदार्थवित्तार्किकचक्रवर्ती।
क्रतुक्रियाकाण्डविचारसारविशारदो भास्करनन्दनोऽभूत् ॥
सर्वशास्त्रार्थदक्षोऽयमिति मत्वा पुरादतः।
जैत्रपालेन यो नीतः कृतश्च विबुधाग्रणीः ॥
तस्मात्सुतः सिङ्घणचक्रवर्तिदैवज्ञवर्योऽजनि चङ्गदेवः।
श्रीभास्कराचार्यनिबद्धशास्त्रविस्तारहेतोः कुरुते मठं यः ॥
भास्कररचितग्रन्थाः सिद्धान्तशिरोमणिप्रमुखाः।
तद्वंश्यकृताश्चान्ये व्याख्येया मन्मठे नियमात् ॥

---

१. अनेनैव त्रिविक्रमभट्टेन विरचितेषु ग्रन्थेषु दमयन्तीकथापरपर्याया नलचम्पूरुपलब्धा. तत्र च शाण्डिल्यवंशीयानूचानान् श्लेषेण संवर्ण्य 'तेषां वंशे विशदयशसां श्रीधरस्यात्मजोऽभूद्देवा[ऽनेमा]दित्यः स्वमतिविकसद्वेदविद्याविवेकः। उत्कल्लोलं दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ॥ तैस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम्। तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः॥' इति पितामहं पितरमात्मानं च प्रस्तौति स्मायं त्रिविक्रमः. २. अनेनैव लक्ष्मीधरसूरिवरेण भास्कराचार्यविरचितग्रन्थानां व्याख्या निर्मिता.

श्रीसोइदेवेन मठाय दत्तं हेमाडिना किंचिदिहापरैश्च ।
भूम्यादि सर्वं प्रतिपालनीयं भविष्यभूपैर्बहुपुण्यवृद्ध्यै ॥

स्वस्ति श्रीशाके ११२८ प्रभवसंवत्सरे श्रावणमासे पौर्णमास्यां चन्द्रग्रहणसमये श्रीसोइदेवेन सर्वजनसंनिधौ हस्तोदकपूर्वकं निजगुरुरचितमठायायस्थानं दत्तम् ॥

(इतोऽग्रे देशभाषा—)

(एपिग्राफिआ इण्डिक् ३४१–४३ पृष्ठे)

---

## (१०८)

## नारोदग्रामीयवापीप्रशस्तिः।

ओं नमः शिवाय।

प्रावृषेण्यनवाम्भोदगर्जितौर्जित्यजिन्ति वः ।
वैनायकानि निघ्नन्तु निर्विघ्नं बृंहितान्यघम् ॥
प्रसन्नौजस्विमधुरव्यक्ताव्यक्तस्वरूपभाक् ।
देवता वाक्सरिद्भेदैर्मुदे स्ताद्वः सरस्वती ॥
संपूर्णाङ्गमशेषकल्मषमुषः संपन्नमप्यादरा-
द्दूरं पादतलावघट्टननमत्कैलासनश्यत्स्थिति ।
सानन्दं युगपत्सुरासुरसभासंरम्भदत्तव्यथं
शंभोर्लास्यपरिग्रहस्य दिशतु श्रेयांसि वः स्थानकम् ॥
चरणभरावनतावनिविनमत्कमठोरुकर्पराभोगा ।
नाट्यस्य धूर्जटेर्धुरि वर्णपरिष्वष्कणी जयति ॥

---

१. अयं च नारोद (रानोद) ग्रामः पुरातनो विशीर्णश्च गोपगिरि(ग्वालीयर)राज्ये झाँसी गूना मध्यदेशस्थो नरवरग्रामात् दक्षिणस्यां दिशि ४५ मीलदूरे वर्तते. २. 'प्रशस्तिश्चेयं पाषाणोत्कीर्णा Dr. Führer साहिबेन तत्र गत्वा तत्प्रतिबिम्बद्वयं च समानीय मह्यमदायीति समयश्चास्या नैव व्यक्ततयाज्ञातोऽपि पूर्वेतिहासपर्यालोचनया ११ शतकस्यारम्भात्मक इति प्रतीयते' इति च Professor F. Keilhorn Ph. D. C. I. E. महाशया एतद्भूमिकायां प्रकाशितवन्तः.

उत्क्षिप्तो दण्डपादो ग्रहगणमुडुभिः सार्धमुत्तम्भ्य भूयः
　मायाद्यावत्त्वसीमामपरपदभरभ्रष्टपृष्ठा क भूमिः।
इत्थं दौस्थ्येऽपि रङ्गे गगनतलचलच्चारिकाचारवृत्ते-
　स्त्रायन्तां वस्त्रिसंध्यं त्रिपुरविजयिनस्ताण्डवक्रीडितानि॥

भक्त्योपसन्नं स्थिरभक्तिगम्यः पद्मासनं दारुवनेऽतिरम्ये।
विधाय यज्ञं विधिना विधिज्ञः किलानुजग्राह पुरा पुरारिः॥

यच्छन्फलं विपुलनिर्वृतिबीजमुच्चैः
　पूर्वोत्तरं विपुलवर्धितभूरिशाखः।
तस्मादपूर्व उदभून्मुनिवंश एष
　निर्ग्रन्थिरन्तरतिसारतरोऽस्तरन्ध्रः॥

तस्मिन्मुनिः सकललोकनमस्यमूर्ति-
　रिन्दूपमः प्रतिदिनं समुदीयमानः।
श्रीमानभूद्भुवि **कदम्बगुहाधिवासी**
　तस्माच्च **शङ्खमठिकाधिपति**र्मुनीन्द्रः॥

**तेरम्बिपालः** प्रमथाधिपस्य तुलां दधत्कामजयोदयेन।
ततोऽभवद्धूरितपास्ततोऽपि सत्ख्याति**रामर्दकतीर्थनाथः**॥

तस्मात्पुरंदरगुरुर्गुरुवद्धरिम्णः
　प्रज्ञातिरेकजनितस्य बभूव भूमिः।
यस्याधुनापि विबुधैरितिकृत्यशंसि
　व्याहन्यते न वचनं नयमार्गविद्भिः॥

वन्द्यः कोऽपि चकास्त्यचिन्त्यमहिमा तुल्यं मुनिर्भास्वता
　राजन्नुत्तमशब्दपूर्वशिखराभ्यर्णे प्रकीर्णद्युतिः।
दीक्षार्थीति वचो निशम्य सुकृती चारोक्तमुर्वीपति-
　र्यस्येहानयनाय यत्नमकरोच्छ्रीमानवन्तिः पुरा॥

गत्वा तपस्यन्तमुपेन्द्रपूर्वे पुरे तदा **श्रीमदवन्तिवर्मा**।
भृशं समाराध्य तमात्मभूमिं कथंचिदानीय चकार पूताम्॥

अथोपसद्याप्य च सम्यगैशीं दीक्षां स दक्षो गुरुदक्षिणार्थम्।
निवेद्य यस्मै निजराज्यसारं स्वजन्मसाफल्यमवाप भूपः॥
स कारयामास समृद्धिभाजं मुनिर्मठं सन्मुनिरत्नभूमिम्।
प्रसिद्धमावारिधि मेरुकल्पं श्रीमत्पुरे मत्तमयूरनाम्नि॥
पुनर्द्वितीयं स्वयमद्वितीयो गुणैर्मुनीन्द्रो रणिपद्रसंज्ञम्।
तपोवनं श्रेष्ठमठं विधाय प्रष्ठः प्रतिष्ठां परमां निनाय॥

आसीदतः कवचपूर्वशिवाभिधानो
लोकप्रियः कवचवद्दृढदुष्टशक्तिः।
यः सर्वतो वहति संयति संयताङ्गो
दार्ढ्यं गुणाढ्यमिति कामशरैरभेद्यः॥

सदाशिवस्तस्य च शिष्य आसीत्सदा शिवः सर्वजनस्य शान्त्या।
तपोवनं यो रणिपद्रनाम प्रसाधयामास तपःसमृद्ध्या॥
अस्मादनल्पादुदयाद्रिकल्पाल्लब्धोदयोऽभूद्धृदयेशसंज्ञः।
आचार्यसूर्यस्तमसां विदार्य प्रकाममौदार्यमहार्यवीर्यैः॥

निरवधि वर्धते न च बिभर्ति पुरो लघुभावमात्मनः
प्रसरति दिङ्मुखेषु न च चलति मनागपि मार्गसंस्थितेः।
स्फुरति समस्तवर्णरुचितं न च मुञ्चति चारुशुभ्रता-
मलमधुनापि यस्य कृतिनोऽद्भुतमित्थमहर्निशं यशः॥

यस्यात्मेन्द्रियनिग्रहे निजगुरुस्थानान्यलंकुर्वतः
प्रीतिः पालपरिग्रहे च दधतः साधूपभोग्याः श्रियः।
स्वभ्यस्ताखिलशास्त्रनिर्मलमतेरासीत्स एकः परं
कान्यैः स्वोदरपूर्तिमात्ररतिभिस्तृष्णाभिभूतैः कथा॥

यदि गुणकीर्तनमधुना निःशेषं तस्य साधु विवृणोमि।
तद्वक्तुं कीर्तिमिमां नावसरः प्रस्तुतां तदलम्॥

औदार्याद्गुरुभारदुर्वहधुरानिर्व्यूढवीर्योदयः
शिष्यः शिष्यवतां विशेषक इव प्रस्तावमुख्यः सताम्।

श्रीमान्व्योमशिवाह्वयः समभवत्तस्यापि तादृक्पुन-
र्यादृग्भूरिभिरप्यमद्भुततमैस्तैस्तैस्तपोभिर्भवेत् ॥
श्लाघ्यं जन्म जगत्त्रयेऽपि दधतः शेषस्य तस्य क्षमा-
मस्य व्योमपदादिमन्त्ररचनाख्याताभिधानस्य च ।
उद्धर्तुं विपदि प्रजां गुरुभरव्यापारदत्तात्मनो
यस्योद्रिक्तपरोपकारकरुणामात्रं प्रवृत्तेः फलम् ॥
यस्योच्चैश्चरितं चिरात्पुलकभृद्गण्डस्थलश्रेणिभि-
र्मञ्जुव्यञ्जित[म]न्द्रतारगमकैः संगीयते किन्नरैः ।
सूर्याचन्द्रमसोः समं प्रतापः प्रध्वंस्य दूरं तम-
स्तस्यास्याद्भुतकर्मणः किमपरैः स्तोत्रैर्विचित्रैरपि ॥

द्रढिष्ठसदनुष्ठानो म्रदिष्ठमितभाषितः ।
योऽन्वतिष्ठत्प्रतिष्ठावत्स्रष्टः सद्व्रतिनां व्रतम् ॥

यः संयमस्य विनयस्य नयस्य सम्य-
क्पुण्यस्य चारुचरितस्य च कीर्तनस्य ।
एकत्र वस्तुमिति सद्गुण[सं]····[स्य]
त्वष्ट्रा प्रतिश्रयगृहं गृहिणेव जज्ञे ॥

सर्वत्र निर्वृतिक[रे]ण निरन्तरेण
लब्धोदयेन धवलेन दिगायतेन ।
वर्धिष्णुनाधिकमलंकृतमेतदिन्दो-
र्द्योतेन यस्य च गुण[प्रस]रेण विश्वम् ॥

लोकालोकान्तरालभ्रमणपरिणतावर्तवेगप्रवृत्ति-
र्वातूलोत्ताललीलां द्रुतगति तुलयन्व्यासदिक्चक्रवालः ।
निर्धूयाशेषविश्वाक्रमणपटुरजःपावनैवर्तनैर्द्रा-
मारादाश्वभुवानस्तपस उदगमद्यस्य दूरं प्रतापः ॥

येनेदं पुरमापदन्धतमसे मग्नं नियोगाद्विधेः
सत्कीर्त्या रणिपद्रसं[ज्ञम]चिरादुद्धृत्य यत्याश्रमम् ।

भूपृष्ठं शशिनेव निर्मलतरस्फारस्फुरत्तेजसा
 सर्वानन्द्युदयेन पौरसहितं नीतं पुनस्ताः श्रियः ॥
स्फारैर्धान्यहिरण्यरत्ननिवहैर्निःशेषमन्तर्बहि-
 स्त्वङ्गत्तुङ्गतुरङ्गमैर्मदभरोद्वृत्तैश्च गर्जद्गजैः ।
स्वस्थानस्य विशीर्णविद्रुममठस्योद्दामलक्ष्मीभृतो
 भूभागास्तपसा पुनर्नवरुचः संरेजिरे यस्य च ॥
सा श्लाघ्या वसतिः स एव विषयस्ते प्राणिनस्ता दिशः
 सा भूर्भूमिपतिः स एव किमतस्ते ते प्रदेशाः परम् ।
यत्रास्तेयमशेषसत्त्वहितकृत्कृत्यप्रवृत्तः स्वयं
 पुण्यानां प्रगुणीकृतोऽवनिसृजा पुञ्जो वपुष्मानिव ॥
यद्वाचां मनसां च गोचरमतिक्रान्तेन भूम्नान्वितं
 यद्गीतं गुणगर्वितैर्दिविषदां दारैरदभ्रादरम् ।
यत्सत्त्वज्वलितैः प्रचण्डतपसां तेजोभिरुन्मीलितं
 तन्नान्यत्र चरित्रमुन्नतमतावत्रैव तावत्स्थितम् ॥
पुरा योषित्सङ्गादनिभृतनिजाक्षं भगवता
 विजिग्ये यः कामस्त्रिपुररिपुणाविष्कृतरुषा ।
निरुद्धाक्षः क्षान्त्या तमयमजयत्सङ्गरहितः
 सुचीर्णानां स्याद्वा किमिह तपसां दुष्करमिति ॥
स्फारास्फालनघातनिर्दयदलद्गम्भीरभेरीरव-
 व्याजेनोज्जगुरा कुमारचरितात्सद्ब्रह्मचर्यं तपः ।
यस्याराधयतस्त्रिसंध्यमधुतध्यानस्थितेर्धूर्जटिं
 चैतन्योज्झितवृत्तयोऽपि समये सद्धूपवेलोत्सवाः ॥
स्तुल्यं स्यात्किमिहास्य नाम चरितं न स्यात्सुपुण्यार्थिना
 मा बाल्यात्सहकीर्तिसंचिततपस्तेजः समुत्तेजितम् ।
यस्यौचैरलघून्नमद्गुणगुरुब्रह्माण्डमाडम्बर-
 व्यग्रैर्द्राक्शतरुद्रबाहुपरिघैः संधार्यते यत्नतः ॥

सिद्धान्तेषु महेश एव नियतो न्यायेऽक्षपादो मुनि-
गैम्भीरे च कणाशिनस्तु कणभुक्शास्त्रे श्रुतौ जैमिनिः।
सांख्येऽनल्पमतिः स्वयं च कपिलो लोकायते सद्गुरु-
र्बुद्धो बुद्धमते जिनोक्तिषु जिनः को वाथ नायं कृती॥
यद्भूतं यदनागतं यदधुना किंचित्कचिद्वर्तते
सम्यग्दर्शनसंपदा तदखिलं पश्यन्प्रमेयं महत्।
सर्वज्ञः स्फुटमेष कोऽपि भगवानन्यः क्षितौ संकरो
धत्ते किंतु न शान्तधीर्विषमदृग्रौद्रं वपुः केवलम्॥
अस्मिन्नुद्दामधाम्नि प्रचुरतरतपःसीम्नि विख्यातनाम्नि
सर्वानन्द्युक्त[सा]म्नि क्षितिभृदुरुभरस्पर्धिपुष्यद्गरिम्णि।
संपन्नप्रेम्णि सत्सु स्वयशसि निहितस्फारसारप्रथिम्नि
विद्योत्सर्पन्महिम्नि त्रिभुवनतिलके के गुणा हन्त न स्युः॥
संलीनं मुख एव शाक्यकरिणामत्यूर्जितं गर्जितं
त्रासाद्यस्य च जैनजम्बुकशतैर्दुर्व्याहृतं संहृतम्।
सोढं जातु न जैमनीयहरिणैर्लीलाकृतं हुंकृतं
तस्यान्यद्गमनेशकाननपतेः किं स्यात्स्तुतं प्रस्तुतम्॥
यस्योच्चकैः स्फुरति संतमसं निरस्य
तेजः परं प्रतिनिशं प्रतिवासरं च।
अन्यः स एष ननु चन्द्रमसो रवेश्च
चन्द्रावदातचरितः सुतरां चकास्ति॥
यस्यामलं स्फुरति सद्गुणरत्नवृन्द-
मानन्दकारि जगतां जलताविहीनम्।
श्रीव्योमशंभुजलधिः स खलु व्युदस्त-
तृष्णः सतां समभवद्भुवि कोऽप्यपूर्वः॥
माधुर्यं विनयो नयोऽनलसता त्यागः क्षमा प्रश्रयः
सौर्यं धैर्यमहार्यवीर्यकलितं सद्ब्रह्मचर्यं तपः।

इत्यादि प्रचिनोमि चेतसि चिरं यद्यत्किमप्यादरा-
त्तत्तत्स[र्वं]मचिन्त्यमस्य महतः कस्मास्तु वाचां पथि ॥
रेजुः सज्जनरक्तभावजननान्या सिन्धुवेलावधे-
श्चित्रं तस्य यशांसि कुन्दकलिकाक्रोडप्रभाभाञ्ज्यपि ।
तस्यायं खलु देवतायतनवान्वापीनिवेशः शुभः
सोद्यानः प्रथते स्वकीर्तिविभवः साक्षादिवानश्वरः ॥
शिवयुग्ममुमादेवीनाट्येश्वरविनायकौ ।
स मठं मन्दिरै रम्यैरयमेतान्यचीकरत् ॥
प्रतिक्षपं या प्रतिबिम्बतां गते सुनिर्मले वारिणि तारकागणे ।
कुमुद्वतीसङ्गसमुज्झिताप्यलं विभाति विष्वक्कुमुदैरिवाचिता ॥
प्रासादमाधुर्यनिकामहृद्यं विराजते यत्र गभीरमम्भः ।
विडम्बयत्सत्कविकाव्यबन्धं विशुद्धवर्णाहितचारुशोभम् ॥
शैलात्मजाभक्तिपरप्रयातपौराङ्गनानूपुरशिञ्जितेन ।
प्रतिक्षणं या कलहंसनादभ्रमं विधत्ते श्रुतिपेशलेन ॥
धृतोदपात्रावनताङ्गनानां मुखैर्विचित्राधरपल्लरम्यैः ।
तोयं गतैर्या प्रतिबिम्बनेन भृ[शा]रविन्देव बिभर्ति शोभाम् ॥
अपूर्वविन्यासविशेषकेण विभूषिता या दयितेव दृष्टा ।
सोपानमालावलिचारुमध्या नानन्दयत्कस्य मनो मनोज्ञा ॥
प्रासादा यत्र भासन्ते कुन्देन्दुकुमुदोज्ज्वलाः ।
श्रीव्योमेशमहीव्यापियशोबीजाङ्कुरा इव ॥
या नीलकण्ठेन तटोपकण्ठं कृतास्पदा धाम परं सुखस्य ।
प्रासादरम्या रमणीयभूमिः पुरा पुरारेः सदृशी चकास्ति ॥
यत्सन्निधौ सान्द्रसुधासितिम्ना प्रासादमालानुदिनं विभाति ।
भयेन भानोः परिणाममेत्य ज्योत्स्ना स्थितेवामरसद्ममूर्त्या ॥
अम्भोनिधिस्तुङ्गतुषारशैलैः सम्यग्विराजेद्यदि कूललीनैः ।
तेनोपमीयेत तदा स्फुटं या समुन्नतैर्नाकिगृहैर्विभान्ती ॥

अमुक्तमुक्ताफलचारुकान्ति तोयं सदैव प्रतिभाति यत्र ।
अमूर्ततावाच्यमसोढुकाममुच्चैरमून्मूर्तमिवान्तरिक्षम् ॥
शरन्निशेवामलचन्द्रकान्त्या सरोजलक्ष्म्येव सरोजलर्द्धिः ।
अलंकृता चारुतया व्यधत्त या निर्वृतिं कस्य न दृश्यमाना ॥
या सर्वदा नोज्झति यन्निकामं सत्सूपकारं च गभीरतां च ।
जलैरनल्पैर्भृशमास्थितापि फलं तदेतद्धि कुलीनतायाः ॥
मृगाङ्कबिम्बे प्रतिमागते या स्फुरत्तरङ्गाङ्गुलिभिर्विलोले ।
स्वचारुसौन्दर्यविलोकनाय धृतामलादर्शतयेव भाति ॥
स्थिराणि तुङ्गानि स्थिरोज्ज्वलानि निरन्तराण्यार्जवसुन्दराणि ।
सतां मनांसीव सदानुकूलं विभान्ति यस्याः सुरमन्दिराणि ॥
इदं नभः किं द्रवता कुतोऽस्य किं वामृतं तत्कथमत्र चित्रम् ।
अह्नाय यत्रेति वितर्कयु[क्तो] जलं न निश्चेतुमलं जनौघः ॥
सन्मीनभूमिर्भवतु प्रकामं मनोरमा द्यौर्बहुवारिदा च ।
तथापि सामान्यगुणादुदस्ता यया विचित्रां रचनां दधत्या ॥
जित्वारिषड्वर्गमनर्थमूलं धर्मे रताः सन्तु सदैव सन्तः ।
यस्यामितीवाह सुरालयाली निलीनपा[राप]तमन्द्रनादैः ॥
रङ्गत्तरङ्गातिमनोरमभ्रू रथाङ्गनामोरुपयोधरा या ।
दिक्षु क्षिपन्ती शफरीकटाक्षानचूचुरत्पान्थदृशं प्रियेव ॥
यदस्ति किंचित्कचिदप्यनिन्द्यमानन्दहेतुर्जगतीह वस्तु ।
तदेकदेशे निखिलं विधाय या वेधसोच्चैर्घटितेव रम्या ॥
कुवलयमतीव वापीं विभूषयति यदतिसुप्रसिद्धमदः ।
चित्रमिदं तु विचित्रा या कुवलयमप्यलंकुरुते ॥
स्थिरा सैषा वापी गगनशशिमौलेर्भगवतो
भवत्वाचन्द्रार्कं प्रथिततपसो भूरियशसः ।

---

१. जलैर्जडैः. २. 'मीनो राश्यन्तरे झषे'. ३. प्रचुरमेघा प्रचुरजलदायिनी च.
४. 'स्यादुत्पलं कुवलयम्' इत्यमरः. ५. भूमिमण्डलम्.

यदीये भातीयं शरदमलचन्द्रांशुधवला
सुराणां सद्माली विकटतटपृष्ठे शिखरिणी ॥
वापीतो निकटं यः पादपमारोपयिष्यति [ग्रात्य]ः ।
याता स पञ्चपातकयुक्तः खलु दुस्तरे निरये ॥
पञ्चैव तेषामिह पातकानि स्वप्स्यन्ति खट्वासु शठा मठे ये ।
येऽभ्यन्तरे मूढधियो रजन्यां दास्यन्त्यनार्या वसतिं च नार्याः ॥
प्रशस्ता देवसंलापपूर्वदत्ताह्वयेन या ।
विहिता मुख्यशब्दार्था सा [मुदेऽस्तु सतामियम्] ॥
देवदत्तसुतेनैषा हरदत्तेन वर्णिता ।
वापीप्रशस्तिका रम्या जेज्जाकेनोदखोटि च ॥
रुद्रेण लिखिता ॥

(एपिग्राफिआ इण्डिका—१५४-६१ पृष्ठे)

## (१०९)

## विजयनगराधीशमहाराजश्रीकृष्णराय-वितीर्णग्रामप्रशस्तिः ।

श्रीकृष्णदेवराय श्रीशुभमस्तु ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शंभवे ॥
कल्याणायास्तु तद्धाम प्रत्यूहतिमिरापहम् ।
यद्गजोऽप्यगजोद्भूतं हरिणापि च पूज्यते ॥

---

१. प्रशस्तिलेखस्यास्य मुख्यादर्शः शून्यीभूतविजयनगरनगरतः पश्चिमोत्तरे प्रदेशे तुङ्गभद्रातरङ्गिणीतटनिकटवर्तिहैम्यनामकग्रामे शिवमन्दिरे मण्डपाभिमुखस्थशिलाखण्डे उत्कीर्णो लभ्यते। स चायं लेखो Dr. Pigson महाशयैः फोटूग्राफयन्त्रेणादर्शप्रतिकृतीकृतः Mr. Fleet महाशयैः प्रकाशितोऽपि पुनःE. Hultzschमहाशयैः स्फुटानुवादपूर्वं व्यक्तीकृतः. समयस्त्वस्याः प्रशस्तेरन्ते १४३० (1509 A.D.) शकाब्दात्मकः स्फुट एव.

अस्ति क्षीरमयाद्दैवैर्मथ्यमानान्महाम्बुधेः।
नवनीतमिवोद्भूतमपनीततमो महः॥
तस्यासीत्तनयस्तपोभिरतुलैरन्वर्थनामा बुधः
पुण्यैरस्य पुरूरवा भुजबलैरायुर्द्विषां निघ्नतः।
यस्यायुर्नहुषोऽस्य तस्य पुरुषो युद्धे ययातिः क्षितौ
ख्यातस्तस्य तु धुर्वसुर्वसुनिभः श्रीदेवयानीपतेः॥
तद्वंशे देवकीजानिर्दिदीपे तिम्मभूपतिः।
यशस्वीतुलुवेन्द्रेषु यदोः कृष्ण इवान्वये॥
ततोऽभूद्बुक्कमाजानिरीश्वरक्षितिपालकः।
अलासमगुणभ्रंशं मौलिरत्नं महीभुजाम्॥
पद्माक्षो बलिजिन्निजैस्त्रिभुवनाक्रान्तिक्षमैर्विक्रमै[ः]
शङ्खं चक्रमपि श्रयन्निजकरे श्रीदेवकीनन्दनः।
भूत्वाप्यद्भुतमीश्वरोऽयमिति या भूयस्तरां पप्रथे
भूतिं चाखिलपूज्यतामतिभृशं भूभृत्सुतामाश्रितः॥
भूवासैकपरोऽपरो रविरिव प्राप्तोदयोऽहर्निशं
यो मन्देहरिपूनहन्कविबुधोपेतोऽनपेतो रणात्।
आपूर्वापरवारिराशि नितरामासेतु हेमाचलं
विख्यातो विहसंश्च यो वितरणैर्व्यद्योतत द्योतरून्॥
सरसादुदभूत्तस्मान्नरसावनिपालकः।
देवकीनन्दनात्कामो देवकीनन्दनादिव॥
कावेरीमाशु बध्वा(द्ध्वा) बहलजलरयां तां विलङ्घ्यैव शत्रुं
जीवग्राहं गृहीत्वा समिति भुजबलात्तं च राज्यं तदीयम्।
कृत्वा श्रीरङ्गपूर्वं तदपि निजवशे पट्टणं यो बभासे
कीर्तिस्तम्भं निखाय त्रिभुवनभवनस्तूयमानापदानः॥
चेरं चोलं च पाण्ड्यं तमपि च म[धु]रावल्लभं मानभूषं
वीर्योदग्रं तुरुष्कं गजपतिनृपतिं चापि जित्वा तदन्यान्।

आगङ्गातीरलङ्काप्रथमचरमभूभृत्तटान्तं नितान्तं
ख्यातः क्षोणीपतीनां स्रजमिव शिरसा शासनं यो व्यतानीत् ॥
विविधसुकृतोद्दामे रामेश्वरप्रमुखे मुहु-
र्मुदितहृदयः स्थाने स्थाने व्यधत्त यथाविधि ।
बुधपरिवृतो नानादानानि यो भुवि षोडश
त्रिभुवनजनोद्गीतं स्फीतं यशः पुनरुक्त[यन्] ॥
तिप्पाजीनागलादेव्योः कौसल्याश्रीसुमित्रयोः ।
देव्योरिव नृसिंहो(हे)न्द्रात्तस्मा[त्पं]क्तिरथादिव ॥
वीरौ विनयिनौ रामलक्ष्मणाविव नन्दनौ ।
जातौ वीरनृसंह्ये(हे)न्द्रकृष्णरा[यमहीपती] ॥
वीरश्रीनारसिंह(हः) स विजयनगरे रत्नसिंहासनस्थः
कीर्त्या नीत्या निरस्यन्नृ[गनलनहुषा]नप्यव[न्या]मथान्यान् ।
आ सेतोरा सुमेरोरवनिसुरनुतः स्वैरमा चोदया[द्रे-
रा पाश्चात्याच]लात्तादखिलहृदयमावर्ज्य राज्यं शशास ॥
नानादानान्यका[र्षीत्कनकस]दसि [यः श्री]विरूपाक्षदेव-
स्थाने श्रीकालहस्तीशिशुरपि नगरे वेङ्क[टा]द्रौ च का[ञ्च्याम्] ।
श्रीशैले शोणशैले महति हरिहरेऽहोबले सङ्गमे च
श्रीरङ्गे कुम्भघोणे [ह]त[तम]सि महानन्दितीर्थे निवृत्तौ ॥
गोकर्ने(र्णे) रामसेतौ जगति तदितरेष्वप्यशेषेषु पुण्य-
स्थानेष्वार[ब्धना]नाविधबहलमहादानवारिप्रवाहैः ।
यस्योदञ्चत्तुरङ्गप्रकरखुररजःशुष्यद[म्भोधिम]ग्न-
क्ष्माभृत्पक्षच्छिदोद्यत्तरकुलिशधरोत्कुण्ठिता कुण्ठताभूत् ॥
ब्रह्माण्डं विश्वचक्रं [घट]मुदितमहाभूतकं रत्नधेनुं
स[प्तां]भोधिं च कल्पक्षितिरुहतिलके काञ्चनीं कामधेनुम् ।
स्वर्न(र्ण)क्ष्मां यो हिरण्याश्वरथमपि तु[लापू]रुषं गोसहस्रं
हेमाश्वं हेमगर्भं कनककरिरथं पञ्चलाङ्गल्यतानीत् ॥

प्रा[ज्यं] प्रशा[स्य] निर्विघ्नं राज्यं द्यामिव शासितुम्।
तस्मिन्गुणेन विख्याते क्षितेरिन्द्रे [दिवं ग]ते ॥
[ततोऽ]प्य[वा]र्यवीर्यः श्रीकृष्णरायमहीपतिः।
बिभर्ति मणिकेयूरनिर्वि[शेषं] महीं [भुजे] ॥
कीर्त्या यस्य समन्ततः प्र[सृत]या विश्वं रुचैक्यं व्रजे-
दित्याशङ्क्य [पुरा पुरारिरभवद्भा]लेक्षणः प्रायशः।
पद्माक्षोऽपि च[तु]र्भुजोऽजनि चतुर्वक्त्रोऽभवत्पद्म[भूः]
काली [खड्गमधाद्रमा] च [कमलं] वी[णां] स्ववेणीकरे ॥
शत्रूणां वासमेते ददत इति रुषा किंनु सप्ताम्बुरासी(शी)-
नानाशे(से)नातुरङ्गत्रुटितवसुमतीधूलिकापालिकाभिः।
संशोष्य स्वैरमेतत्प्रतिनिधिजलधिश्रेणिका यो विधत्ते
ब्रह्माण्डस्वर्न्न(र्ण)मेरुप्रमुखनिजमहादानतोयैरमेयैः ॥
मद्दत्तामर्थिसार्था[ः] श्रियमिह सुचिरं भुञ्जतामित्यवेत्य
माय[ः]मत्यूहहेतोस्तपनरथगतेरालयं देवतानाम्।
तत्तु दि(त्तद्दिग्)जैत्रवृत्त्यापि च विरुदपदैरङ्कितस्तत्र तत्र
स्तम्भाञ्जातप्रतिष्ठाञ्व्यतनुत भुवि यो भूभृदभ्रंकषाग्रान् ॥
[कां]चीश्रीशैलशोणाचलकनकसभावेङ्कटादिप्रमुख्ये-
ष्वावर्त्यावर्त्य सर्वे[ष्व]तनुत विधिवद्भूयसे श्रेयसे यः।
देवस्थानेषु तीर्थेष्वपि कनकतुलापूरुषादीनि नाना-
दानान्येवो[प]दानैरपि सममखिलैरागमोक्तानि तानि ॥
रोषकृतप्रतिपार्थिवदण्डः शेषभुजः क्षितिरक्षणशौण्डः।
भाषेगे तप्पुवरायरगण्डस्तोषकृदर्थि[षु] यो रणचण्डः ॥
राजाधिराज इत्युक्तो यो राजपरमेश्वरः।
मूळारायरगण्डश्च पररायभयंकरः ॥
हिन्दुरायसुरत्राणो दुष्टशार्दूलमर्दनः।
गजौघगण्डभेरुण्ड [इ]त्यादिबिरुदान्वितः ॥

आलोकय महाराज जय जीवेति वादिभिः।
अङ्गवङ्गकलिङ्गाद्यै[:] राजभिः सेव्यते च यः॥

स्तुत्यौदार्यसुधीभिः स विजयनगरे रत्नसिं[हासनस्थ]:
[क्ष्मा]पालान् कृ[ष्ण]रायक्षितिपतिरधरीकृत्य नीत्या नृगादी[न्]।
आ पूर्वाद्रेर[थ]ास्त [क्षि]तिधरकटकादा च हेमाचलान्ता-
दा सेतोरर्थिसार्थिसार्थश्रियमिह बहलीकृत्य कीर्त्या समिन्धे॥

इह किल जगति निखिलकविकुलाभिनन्द्यमानौदार्यधैर्यादिजनितयशः-पूरकर्पूरपूरितब्रह्माण्डकरण्डेन समरचण्डेन विहसितनृगनलनहुषनाभागदुन्धुमारमान्धातृभरतभगीरथदशरथरामादिचरितेन कृतभूसुरत्राणेन परिभूतसुरत्राणेन गजपतिगजकूटपाकलेन विदि(तनाना)कलेन वदनविजिताम्भोजेन भोजेनापरेण काव्यनाटकालंकारमर्मज्ञेन धर्मज्ञेन प्रतिवर्षप्रवर्ति[त]कनकवसन्तमहोत्स[वे]न सवेन कृतार्थितविप्रसार्थे[न] सार्थेन निखिलनृपतिमूर्धन्येन धन्येन नागाम्बिकानरसनृपनन्दनेन निखिलहृदयानन्देन समरमुखविजयेन विजयेन दिशां विजयनगरे सिंहासनमारुह्य शासता सकलां भुवं भुजविजितसाम्परायेण कृष्णदेवमहारायेण भुवनभरणसावधानाय श्रीविरूपाक्षाभिधानाय वितीर्णविनतजनहेमकूटाय हेमकूटायतनशालिने शूलिने मधुरफलपूपादिहृद्याय नैवेद्याय सिंगेनायकनहल्लीतिविख्यातनामा चतुरसीमाभिरामो ग्रामो दत्तो वित्तोपकारिणा रवितनयानुकारिणा रङ्गमण्डपोऽपि विरचितस्तस्यैव देवस्य तेनैव प्रकटितनरजनुषा प्रसूनध[नु]षा॥

तदिदमवनीवनीपकविनुतधरायस्य कृष्णरायस्य।
शासनमतिबलशासनतरुकरदानस्य [सापद]ानस्य॥

स्वस्ति श्रीविजयाभ्युदयशालिवाहनशकवर्ष १४३० संदु मेले नडव शुक्लसंवत्सरद माघ शु० १४ लु श्रीमन्महाराजाधिराजराजपरमेश्वरश्रीवीरप्रतापश्रीवीरकृष्णरायमहाराजरुपट्टाभिषेकोत्सवपुण्यकालदलु श्रीविरूपाक्षदेवर (इत्यादि देशभाषायामपि सर्वं प्रागुक्तमनूदितम्।)

(एपिग्राफिआ इण्डिक्—३६३-६६ पृष्ठे)

१. धराया आयः प्राप्तिः.

# (११०)

## महाराजयशःकर्णदेवानां प्रशस्तिः[1]।

ओं नमो ब्रह्मणे।

जयति जलजनाभस्तस्य नाभीसरोजं
जयति जयति तस्माज्जातवानब्जसूतिः।
अथ जयति स तस्यापत्यमत्रिस्तदक्ष्ण-
स्तदनु जयति जन्म प्राप्तवानब्धिबन्धुः॥
अथ बोधनमादिराजपुत्रं गृहजामातरमब्जबान्धवस्य।
तनयं जनयांबभूव राजा गगनाभोगतडागराजहंसः॥
पुत्रं पुरूरवसमौरसमाप सूनु-
र्देवस्य सप्तजलराशिरसायनस्य।
आसीदनन्यसमभाग्यशतोपभोग्या
यस्योर्वशी च सुकलत्रमिहोर्वरा च॥
अत्रान्वये किल शताधिकसप्तिमेध-
यूपोपरुद्धयमुनोक्तविविक्तकीर्तिः।
सप्ताब्धिरत्नरसनाभरणाभिराम-
विश्वंभराशुभरतो भरतो बभूव॥
हेलागृहीतपुनरुक्तसमस्तशस्त्रो
गोत्रे जयत्यधिकमस्य स कार्तवीर्यः।
अत्रैव हैहयनृपान्वयपूर्वपुंसि
राजेति नाम शशलक्ष्मणि चक्षमे यः॥

---

१. इयं प्रशस्तिश्च Professor F. Kielhorn Ph. D., C. I. E. महाशयैः Dr. Burgess, Mr. Fleet, and Colonel J. T. Temple महाशयसंमत्या व्याख्याता, एतत्प्रशस्त्याधारशिला नागपुरे वर्तते. अस्याः प्रशस्तेरन्ते खण्डितत्वेन यद्यपि समयो न ज्ञायते, तथापि यशःकर्णमहाराजसूनुगयकर्णधर्मपत्न्याः श्रीमत्या अल्हणदेव्याः प्रशस्तेः समासौ चेदि(चंदेली)राज्यसंवत्सरस्योपलब्ध्या लेखस्यास्यापि समयः समासन्नतया A. D. 1122 वत्सरात्मकः प्रतीयते.

स हिमाचल इव कलचुरिवंशमसूत क्ष्माभृतां भर्ता ।
मुक्तामणिभिरिवामलवृत्तैः पूतं महीपतिभिः ॥
तत्रान्वये नयवतां प्रवरो नरेन्द्रः
पौरंदरीमिव पुरीं त्रिपुरीं पुनानः ।
आसीन्मदान्धनृपगन्धगजाधिराज-
निर्माथकेसरियुवा युवराजदेवः ॥
सिंहासने नृपतिसिंहममुष्य सूनु-
मारूरुपन्नवनिभर्तुरमात्यमुख्याः ।
कोकल्लमर्णवचतुष्टयवीचिसंघ-
संघट्टरुद्धचतुरङ्गचमूप्रचारम् ॥
इन्दुप्रभां निन्दति हारगुच्छं जुगुप्सते चन्दनमाक्षिपन्ती ।
यत्र प्रभौ दूरतरं प्रयाते वियोगिनीव प्रतिभाति कीर्तिः ॥
मरकतमणिपट्टप्रौढवक्षाः स्मिताक्षो
नगरपरिघदैर्घ्यं लङ्घयन्दोर्द्वयेन ।
शिरसि कुलिशपातो वैरिणां वीरलक्ष्मी-
पतिरभवदपत्यं यस्य गाङ्गेयदेवः ॥
स वीरसिंहासनमौलिरत्नं स विक्रमादित्य इति प्रसिद्धः ।
यस्मादकस्मादपवर्गमिच्छन्नकुच्छलः कुं स्वजितां बभार ॥
प्राप्ते प्रयागवटमूलनिवेशबन्धौ
सार्धं शतेन गृहिणीभिरमुत्र मुक्तिम् ।
पुत्रोऽस्य खड्गदलितारिकरीन्द्रकुम्भ-
मुक्ताफलैः स ककुभोऽर्जति कर्णदेवः ॥
कनकशिखरवेल्लद्वैजयन्तीसमीर-
ग्लपितगगनखेलत्खेचरी चक्रखेदः ।
किमपरमिह काश्यां यस्य दुग्धाब्धिवीची-
वलयबहलकीर्तिः कीर्तनं कर्णमेरुः ॥

अग्र्यं धाम श्रेयसो वेदविद्या वल्लीकन्दः लःसवन्त्याः किरीटम्।
ब्रह्मस्तम्भो येन कर्णावतीति प्रत्यष्ठापि क्ष्मातलब्रह्मलोकः॥
अजनि कलचुरीणां स्वामिना तेन हूणा-
न्वयजलनिधिलक्ष्म्यां श्रीमदावल्लदेव्याम्।
शशभृदुदयस(श)श्वाक्षुब्धदुग्धाब्धिवेला-
सहचरितयसः(शः)श्रीः श्रीयसः(शः)कर्णदेवः॥
[चन्द्रार्कदीप]वति पर्वतराजपूर्ण-
कुम्भावभासिनि महाब्धिचतुष्कमध्ये।
चक्रे पुरोहितपुरस्कृतिपूतकर्मा
धर्मात्मनोऽस्य हि पितैव महाभिषेकम्।
न खलु स[मदगो]ष्ठी पक्षपातस्य पात्रं
न खलु कलुषचर्याकज्जलो[द्भावकश्च]।
कलयति कलिनामन्युद्गमं यस्त्रिजा(या)मा
तमसि जयति जम्बूद्वीपरत्नप्रदीपः॥
चिन्तामणि[कृष्ण](?) सु(शु)क्तियुग्मक्रोडे स्याद्यदि कामधेनुदुग्धम्।
दृश्येत दृशोस्तस्य दातुः सादृश्यं धवलारुणेक्षणस्य॥
यः ककुप्कुञ्जरालानस्तम्भसब्रह्मचारिणः।
[आसा(शा)न्ते]षु जयस्तम्भानुदस्तम्भयदुच्चकैः॥
यो ब्रह्मणां पाणिषु पञ्चषाणि दाता निधत्ते पयसः पृषन्ति।
तैरेव तृष्णामवधूय ते च रत्नाकरेऽपि प्रथयन्त्यव[ज्ञाम्]॥
महीभर्ता महादानैस्तैस्तुलापुरुषादिभिः।
गरिम्णा [मे]रुरत्यर्थं कृतार्थयति योऽर्थिनः॥
स्वर्गराजगजदन्तरुचीनि क्षीरनीरनिधिसं(शं)खसु(शु)चीनि।
सा(शा)ङ्गि[वेष]फणिकञ्चुकभांसि स्फीततां दधति यस्य यसां(शां)सि।
अभ्राधीशमरन्ध्रदोर्विलसितं स्वच्छन्दमुच्छिन्दता
येनाभ्यर्च्यत भूरिभिः स भगवान्भीमेस्व(श्व)रो [भूष]णैः।

यस्या[व]र्ण[यदात्त]नृत्यलहरीद्रु(?)वल्लिगोदावरी
[वीर्याण्यु]न्मदहंसनादमधुरैः स्रोतःस्वरैः सप्तभिः ॥
कुर्वन्महीं ब्राह्मणसादरिक्षत्रतिव (ब)र्हणः।
शा(सा)र्धं परसु(शु)रामेण यः स्पर्धामधिरोहति ॥
स च परमभट्टारकमहाराजाधिराजपरमेस्व(श्व)रश्रीवामदेव····· ·····
·········································(इतोऽग्रे त्रुटितम्।)

(एपिग्राफिआ इण्डिका २। ३-५)

# (१११)

## श्रीमद्यशःकर्णमहाराजसुतगयकर्णमहाराजधर्मपत्न्याः श्रीमदल्हणदेव्या दानपत्रम्[1]।

ओं नमः शिवाय।

कल्याणितामविकलां भवतां तनोतु
भाले कलानिधिकला शशिशेखरस्य।
एकैव या प्रथमसार्थगतां द्वितीया
बुद्धिं प्रदोषविरहेऽपि करोति नित्यम् ॥
किं मालाः कुमुदस्य किं शशिकलाः किं धर्म्यकर्माङ्कुराः
किं वा कम्बुकिकञ्चुकाः किमथवा भूत्युद्गमा भान्त्यमी।
इत्थं नाकिवितर्किताः शिवशिरःसंचारिनाकापगा-
रिङ्गद्वल्गुतरङ्गभङ्गिततयः पुण्यप्रपाः पान्तु वः ॥
भूतं सद्विभु यद्विभाति भुवनं यद्विभ्रमाद्यज्जग-
न्नेत्रानन्दकरं धराश्रयरसाधन्यत्वहेतुश्च यत्।

---

१. दानपत्रमिदं Professor F. Kielhorn, Ph. D., C. I. E., Gottingen, महाशयैः पुनः प्रकाशितम्, अस्य समाप्तौ चेदि(चंदेरी)राजधानीसंवत्सराणां ९०७ (A. D. 1156) लिखितत्वाचात्र समये विवादः.

यद्गन्धोद्धुरधाम यश्च भजते शीतं यदेकान्ततः
सस्पर्शो यदरूपमेभिरवताद्युष्माञ्शरीरैः शिवः ॥
शक्तिहेतिपरप्रीतिहेतुश्चन्द्रकचर्चितः ।
ताण्डवाडम्बरः कुर्यान्नीलकण्ठः प्रियाणि वः ॥
विघ्नौघसंतमससंहरणाय शक्तं
मुक्तं कलङ्ककलया शकलं सुधांशोः ।
कुन्दावदाततरदन्तमिषाद्दधानः
श्रेयः परं दिशतु वः सदयं द्विपास्यः ॥
रूपैरनेकैर्व्यवहारजातमातन्वती पातु सरस्वती वः ।
यल्लेशलालित्यलवादपि स्यात्संसत्सु पुंसां गरिमा गरीयान् ॥
गोत्रे रात्रिकरस्य भूपतिरभूद्बिभ्रत्सहस्रं करा-
न्प्रत्येकं त्रिजगन्मनोविनयने रात्रिंदिवं जागृविः ।
तेजोभिर्जगतीभृतां परिभवी नाम्नार्जुनः संस्मृते-
र्यस्याद्याप्यधिगम्यते वसु गतं नीतं च चौरैश्चिरम् ॥
तस्यान्वये समभवन्प्रथितः पृथिव्या
नाथः कथाद्भुततमापि वृथा न यस्य ।
कोकिल्लदेव इति बिभ्रदु[दार]रूपं
नाम त्रिलोकसुखसंजननैकधाम ॥
निर्जित्योर्जितगर्वपर्वतभृतः प्रत्यर्थिपृथ्वीभुजः
प्राप्तानन्तयशा बभूव नृपतिर्गाङ्गेयदेवस्ततः ।
थ्वी येन विधाय मेरुमतुलं कल्पद्रुमेणार्थिनां
स्वर्गादूर्ध्वमधःस्थितापि विबुधाधारे समापादिता ॥
पुण्यामृतेन संसिक्ता शुद्धसत्त्वप्रवर्धिता ।
यत्कीर्तिव्रततिः सर्वं व्याप ब्रह्माण्डमण्डपम् ॥
तेनाजनि महीपालः कर्णः स्वर्णेन कुर्वता ।
पूर्णतृष्णार्णवानर्थिस्वार्थानर्थितकीर्तिना ॥

पाण्ड्यश्चण्डिमतां मुमोच मुरलस्तत्याज गर्व[प्र]हं
[कु]ङ्गः सद्गतिमाजगाम चकपे वङ्गः कलिङ्गैः सह ।
कीरः कीरवदास पञ्जरगृहे हूणः प्रहर्षं जहौ
यस्मिन्राजनि शौर्यविभ्रमभरं बिभ्रत्यपूर्वभ्रमे ॥
अस्मद्भर्तृपराभवेन सकलां भुङ्क्ते [भुवं] यामसौ
तामेतां तनवामहै तनुतराकारामितीव स्त्रियः ।
यत्प्रत्यर्थिमहीभुजां नयनजैर्बाष्पैः पयोधीन्व्यधुः
स्फारान्नलमहोर्मिभिः पुनरमी तं वर्ष[यांच]क्रिरे ॥
चम्पारण्यविदारणोद्गतयशःशुभ्रांशुना भासय-
न्नाशाचक्रमवक्रभावहृदयः क्ष्मापालचूडामणिः ।
तस्माज्जन्म समाससाद विशदं श्रीमान्यशःकर्ण इ-
त्यौदार्याद्ध[निकी]चकार विबुधान्यः प्रेक्ष्य सर्वानपि ॥

तस्मादशेषगुणरत्ननिधेरगाधा-
द्भूवल्लभः समभवद्गयकर्णदेवः ।
यस्य प्रतापतपनोऽप्यरिसुन्दरीणां
शोकार्णवोदयनिदानपदं प्रपेदे ॥

द्युतिजितहरितालः श्रीलताकल्पशालः
पृथुतरगुणमालः शत्रुवर्गैककालः ।
विमलितरणभालः कान्तकीर्त्या श(स)टालः
शिततरकरवालः सोऽभवद्भूमिपालः ॥

अस्ति प्रसिद्धमिह गोभिलपुत्रगोत्रं
तत्राजनिष्ट नृपतिः किल हंसपालः ।
शौर्यावसज्जितनिरर्गलसैन्यसंघ-
नम्रीकृताखिलमिलद्रिपुचक्रवालः ॥

तस्याभवत्तनुभवः प्रणमत्समस्त-
सामन्तशेखरशिरोमणिरञ्जिताङ्घ्रिः ।

श्रीवैरिसिंहवसुधाधिपतिर्विशुद्ध-
बुद्धेर्निधिर्न परमर्थिजनस्य चोच्चैः ॥
स वैरिसिंहोऽप्यनयद्रिपूणां कुलानि गम्भीरगुहागृहाणि।
स्वयं च तेषामधिशय्य चक्रे पुराणि दूरावजितालकानि ॥
तस्मादजायत समस्तजनाभिवन्द्य-
सौन्दर्यशौर्यभरभङ्गुरिताहितश्रीः।
पृथ्वीपतिर्विजयसिंह इति प्रवर्ध-
मानः सदा जगति यस्य यशःसुधांशुः ॥
तस्याभवन्मालवमण्डलाधिनाथोदयादित्यसुता सुरूपा।
शृङ्गारिणी श्यामलदेव्युदारचरित्रचिन्तामणिरर्चितश्रीः ॥
मेनायामिव शंकरप्रणयिनी क्षोणीभृतां नायका-
द्धीरिण्यामिव शुभ्रभानुवनिता दक्षात्प्रजानां सृजः।
तस्मादल्हणदेव्यजायत जगद्रक्षा क्षमाभृत्पते-
रेतस्यां निजदीर्घवंशविशदप्रेङ्खत्पताकाकृतिः ॥
विवाहविधिमाधाय गजकर्णनरेश्वरः।
चक्रे प्रीतिं परामस्यां शिवायामिव शंकरः ॥
शृङ्गारशाला कलशी कलानां लावण्यमाला गुणपण्यभूमिः।
असूत पुत्रं गयकर्णभूपादसौ नरेशं नरसिंहदेवम् ॥
अस्य श्रीनरसिंहदेवनृपतेः प्रोद्यन्यशश्चन्द्रमा
दिग्भित्तीर्विदधातु बन्धुरसुधासंभारगर्भा इव।
भूभर्तारमवाप्य चैनमुचितं प्रीतिं तथा प्राप्नुया-
त्पूर्वेषां न यथा मनागपि महाक्षोणीभृतां ध्यायति ॥
अस्यानुजो विजयतां जयसिंहदेवः
सौमित्रिवत्प्रथमजेऽद्भुतरूपसेवः।
यो मेघनादबहुमायमहातिकाय-
सैन्यं द्विषामभिभवन्नह-[ह]-महस्तः ॥

अकारयन्मन्दिरमिन्दुमौलेरिदं मठेनाद्भुतभूमिकेन।
सहामुना श्रीनरसिंहदेवप्रसूरसावल्हणदेव्युदारा॥
व्याख्यानशालामुद्यानमालामविकलाममूम्।
अकारयत्स्वयं शंभुप्रासादालीद्वयं निजैः॥
देवायास्मै वैद्यनाथाभिधाय प्रादाद्देवी जाउलीपत्तलायाम्।
ग्रामं नाम्ना नामनुण्डीति सर्वादायैः सार्द्धं चारुचर्याप्रसिद्ध्यै॥
नर्मदादक्षिणे कूले पर्वतोपत्यकाश्रये।
तथा परमदाद्ग्रामं नाम्ना मकरपाटकम्॥
लाटान्वयः पाशुपतस्तपस्वी श्रीरुद्रराशिर्विधिवद्ध्य(द्वि)धत्ताम्।
स्थानस्य रक्षाविधिमस्य तावद्यावन्निमीते भुवनानि शंभुः॥
मौनान्वये भार्गववैतहव्यसावेतसेति प्रवरत्रयाढ्ये।
महेश्वराख्याद्धरणीधरोऽभून्नाम्ना गरिम्णा यशसा श्रिया च॥
कोमलकान्तिसटालेनोच्चैः स्नेहातिभारभरितेन।
दीर्घमनोज्ञदशेन त्रिभुवनदीपायितं येन॥
पृथ्वीधरस्तस्य सुतः समस्तगम्भीरशास्त्रार्णवपारदृश्वा।
प्रशस्तिमेतामलिखद्यदीयैर्दिङ्मण्डली शिष्यगणैर्विजिग्ये॥
एतस्यावरजस्तर्कनिष्णातोद्भुतनैपुणः।
प्रशस्तिमकरोदेतां सूरिः शशिधराभिधः॥
असूत्रयदिदं सर्वं विश्वकर्मविधानवित्।
पीथेसमभिधः सूत्रधारः पृथ्वीं पृथुर्यथा॥
सूत्रधाराग्रणीबालसिंहसूनुर्महीधरः।
शिलां तथाकरोद्वर्णैर्नभस्तारकितं यथा॥
संवत् ९०७ मार्गसुदि ११ रवौ

(एपिग्राफिआ इण्डिक् २।१०-१३.)

## (११२)

## शत्रुंजयाचलबिम्बसप्तमोद्धारप्रशस्तिः।

ॐ स्वस्ति श्रीगुर्जरधरित्र्यां पातसाहश्रीमहिमूदपट्टप्रभाकर-पातसाहश्रीमदाफरसाहपट्टोद्योतकारक-पातसाहश्रीश्रीश्रीश्रीश्रीबाहदरसाहविजयराज्ये संवत् १५८७ वर्षे राज्यव्यापारधुरंधरपानश्रीमझादषानव्यापारे श्रीशत्रुंजयगिरौ श्रीचित्रकूटवास्तव्य । दो० करमाकृतसप्तमोद्धारसक्ता प्रशस्तिर्लिख्यते—

स्वस्ति श्रीसौख्यदो जीयाद्युगादिजिननायकः ।
केवलज्ञानविमलो विमलाचलमण्डनः॥

श्रीमेदपाटे[2] प्रगटप्रभावे भावेन भव्ये भुवनप्रसिद्धे ।
श्रीचित्रकूटो[3] मुकुटोपमानो विराजमानोऽस्ति समस्तलक्ष्म्याः ॥
सन्नन्दनो[4] दातृसुरद्रुमश्च[5] तुङ्गः सुवर्णोऽपि विहारसारः।
जिनेश्वरस्नात्रपवित्रभूमिः श्रीचित्रकूटः सुरशैलतुल्यः ॥
विशालसालक्षितिलोचनाभो रम्यो नृणां लोचनचित्रकारी।
विचित्रकूटो गिरिचित्रकूटो लोकस्तु यत्राखिलकूटमुक्तः ॥

तत्र श्रीकुम्भराजोऽभूत्कुम्भोद्भवनिभो नृपः ।
वैरिवर्ग(?)समुद्रो हि येन पीतः क्षणात्क्षितौ ॥
[त]त्पुत्रो राजमल्लोऽभूद्राज्ञां मल्ल इवोत्कटः ।
सुतः संग्रामसिंहोऽस्य संग्रामविजयी नृपः ॥
तत्पट्टभूषणमणिः सिंहेन्द्रवत्पराक्रमी ।
रत्नसिंहोऽधुना राजा राजलक्ष्म्या विराजते ॥

इतश्च गोपाह्वगिरौ गरिष्ठः श्रीवप्पभट्टिप्रतिबोधितश्च ।
श्रीआमराजोऽजनि तस्य पत्नी काचिद्बभूव व्यवहारिपुत्री ॥

---

१. इयं प्रशस्तिश्च Mr. Cousens महाशयैरुपलब्धा G. Bühler, Ph. D., L. L. D., C. I. E., महाशयैर्व्याख्याता. २. 'मेवाड' इति नाम्नाधुना प्रसिद्धे. ३. 'चितोड' इति नाम्ना प्रसिद्धोऽयं पर्वतः. ४. सतां नन्दनः नन्दनाख्यवनयुक्तश्च. ५. दातार एव सुरद्रुमा यत्र, दातारः सुरद्रुमा यत्रेत्यादिरीत्या व्याख्येयम्.

तत्कुक्षिजाता किल राजकोष्ठागाराह्वगोत्रे सुकृतैकपात्रे।
श्रीउश(श)वंशे विशदे विशाले तस्यान्वयेऽमी पुरुषाः प्रसिद्धाः॥

श्रीसरणदेवनामा तत्पुत्रो रामदेवनामाभूत्।
लक्ष्मीसिंहः पुत्रोत(त्रस्त)त्पुत्रो भुवनपालाख्यः॥

श्रीभोजराजपुत्रो·········रसिंहाख्य एव तत्पुत्रः।
षेताकस्तत्पुत्रो नरसिंहस्तत्सुतो··············॥

तत्पुत्रस्तोलाख्यः पत्नी तस्या(स्य) प्रभूतकुलजाता।
तारादे परनाम्नी लीलू पुण्यप्रभापूर्णा।

तत्कुक्षिसमुद्भताः ष(ट्)पुत्राः कल्पपादपाकाराः।
[धर्मा]नुष्ठानपराः श्रीव(म)न्तः श्रीकृतोऽन्येषाम्॥

प्रथमो रत्नाख्यसुतः सम्यक्त्वोद्योतकारकः कामम्।
श्रीचित्रकूटनगरे प्रासादः [कारितो] येन॥

तस्यास्ति कोमला पा(क)ल्पवल्लीव विशदा सदा।
भार्या रजमलदेवी पुत्र[ः] श्रीरङ्गनामासौ॥

भ्रातान्यः पोमाह्वः पतिभक्ता दानशीलगुणयुक्ता।
पद्मापाटमदेव्यौ पुत्रौ माणिक्यहीराह्वौ॥

बन्धुर्गणस्तृतीयभार्या गुणरत्नराशिविख्याता।
गडरागारतदेव्यौ पुत्रो देवाभिधो ज्ञेयः॥

तुर्यो दशरथनामा भार्या तस्यास्ति देवगुरुभक्ता।
देवल[दू]रमदेव्यौ पुत्रः केल्हाभिधो ज्ञेयः॥

भ्रातान्यो भोजाख्यो भार्या तस्यास्ति सकलगुणयुक्ता।
भावलहर्षमदेव्यौ पुत्रः श्रीमण्डणो जीयात्॥

सदा सदाचारविचारचारुचातुर्यधैर्यादिगुणैः प्रयुक्तः।
श्रीकर्मराजो भगिनी च तेषां जीयात्सदा सूहविनामधे[या]॥

कर्माख्यभार्या प्रथमा कपूर[ा] देवी पुनः कामलदे द्वितीया।
श्रीभीषजीकस्वकुलोदयाद्रिसूर्यप्रभः कामलदेविपुत्रः॥

श्रीतीर्थयात्राजिनबिम्बपूजा पदप्रतिष्ठादिकधर्मपुर्या ।
सुपात्रदानेन पवित्रमात्राः सर्वेदशाः सत्पुरुषाः प्रसिद्धाः ॥

श्रीरत्नसिंहराज्ये राज्यव्यापारभारधौरेयः ।
श्रीकर्मासिंहदक्षो मुख्यो व्यवहारिणां मध्ये ॥
श्रीशत्रुंजयमाहात्म्यं श्रु[त्वा] सद्गुरुसंनिधौ ।
तस्योद्धारकृते भावः कर्मराजस्य [हृ]द्यभूत् ॥
आगत्य गौर्जरे देशे विवेकेन नरायणे ।
वसन्ति विबुधा लोकाः पुण्यश्लोका इवाद्भुताः ॥
तत्रास्ति श्रीधराधीशः श्रीमद्बाहद्रो नृपः ।
तस्य प्राप्य स्फुरन्मानं पुण्डरीके समाययौ ॥
राज्यव्यापारधौरेयः षानः श्रीमान् मझादकः ।
तस्य गेहे महामन्त्री रवाख्यो नरसिंहकः ॥
तस्य सन्मानमुत्प्राप्य बहुवित्तव्ययेन च ।
उद्धरः सप्तमस्तेन चक्रे शत्रुंजये गिरौ ॥

श्रीपादलिप्तललनासरशुद्धदेशे
सद्वाद्यमङ्गलमनोहरगीतना[दैः] ।
श्रीकर्मराजसुधिया जलया[त्रि]कायां
चक्रे महोत्सववरः सुगुरूपदेशात् ॥

चञ्चच्चङ्गमृदङ्गरङ्गरचनाभेरीनफेरीरवा-
वीणा[वंश]विशुद्धनालविभवासाधर्मि [वात्सल्य]कम् ।
वस्त्रालंकृति[हेम]तुङ्गतुरगादीनां च स[द्व]र्षण-
मेवं विस्तरपूर्वकं गिरिवरे बिम्बप्रतिष्ठापनम् ॥

विक्रमसमयातीते तिथिमितसंवत्सरेऽष्टवसु(१९८७)वर्षे ।
शाके जगत्रिबाणे (१४९३) वैशाखे कृष्णषष्ठ्यां च ॥

मिलिताः सूरयः संघा मार्गणमुनिपुङ्गवाः ।
वहमाने धनुर्लग्ने प्रतिष्ठा कारिता वराः ॥

लावण्यसमयाख्येन पण्डितेन महात्मना ।
स[प्त]मोद्धारसक्ता च प्रशस्तिः प्रकटीकृता ॥
श्रीमद्बा[हदर]क्षितीशवचनादागत्य शत्रुंजये
प्रासादं विदधाप्य(?) येन वृ·····।····द्बिम्बमारोप्य च ।
उद्धारः किल सप्तमः कलियुगे चक्रेऽथ ना·········
जीयादेष सदोशवंशमुकुटः श्रीकर्मराजश्चिरम् ॥
यत्कर्मराजेन कृतं सुकार्यमन्येन केनापि कृतं हि तन्नो ।
यन्म्लेच्छराज्ये[ऽपि नृपा]ज्ञयैवोद्धारः कृतः सप्तम एष येन ॥
स·········र्याणि बहूनि संघे कुर्वन्ति भव्याः परम[त्र] काले ।
कर्माभिधानव्यवहारिणैवोद्धारः कृतः श्रीविमलाद्रिशृङ्गे ॥
श्रीचित्रकूटोदयशैलशृङ्गे कर्माख्यभानोरुदयान्वितस्य ।
शत्रुंजये बिम्बविहारकृत्य[कर्माव]लीयं स्फुरतीति चित्रम् ॥
श्रीमेदपाटे विषये निवासिनः श्रीकर्मराजस्य च कीर्तिरु[ज्वला] ।
देशेष्वनेकेष्वपि [संचरत्य]हो ज्योत्स्नेव चन्द्रस्य नभोविहारिणः ॥
दत्तं येन पुरा धनं बहु सुरत्राणाय तन्मानतो
यात्रा येन [नृ]णां च संघपतिना शत्रुंजये कारिता ।
साधूनां सुगमैव सा च विहिता चक्रे प्रतिष्ठार्हता-
मित्थं वर्णनमुच्यते कियदहो श्रीकर्मराजस्य तु ॥
येनोद्धारः शुभवति नगे कारितः पुण्डरीके
स्वात्मोद्धारो विशदमतिना दुर्गतस्तेन चक्रे ।
येनाकारि प्रवरविधिना तीर्थनाथप्रतिष्ठा
प्राप्तास्तेन त्रिभुवनतले सर्वदैव प्रतिष्ठा ॥
सौम्यत्वेन निशामणिर्दिनमणिस्तीव्रप्रतापेन च
वंशोद्दीपनकारणाद्गृहमणिश्चिन्तामणिर्दानतः ।
धर्माच्छाद्धशिरोमणिर्मदविषध्वस्त(स्ता)न्मणिर्भोगिनः
एकानेकमयो गुणैर्नवनवैः श्रीकर्मराजः सुधीः ॥

तोलासुतः सुतन[यो] विनयोज्ज्वलश्च
    लीलूसुकुक्षिनलिनीशुचिराजहंसः।
संमानदानविदुरो मुनिपुंगवानां
    सद्बद्धबान्धवयुतो·····कर्मराजः॥
कर्मी श्रीकर्मराजोऽयं कर्मणा केन निर्ममे।
तेषां शुभानि कर्माणि यैर्दृष्टः पुण्यवानसौ॥
अधीशः पुण्डरीकस्तु महादेवा(वः) कपर्दिराट्।
श्राद्धश्रीकर्मराजस्य सुप्रसन्ना भवन्त्वमी॥
श्रीशत्रुंजयतीर्थोद्धारे।

(इतः परं देशभाषा—)

(एपिग्राफिआ इण्डिका २।४२-४७)

---

# (११३)

## सौवर्णिकसाहश्रीतेजःपालोद्धृतविमलाचल[पट्ट]न-श्रीआदीशमूलप्रासादप्रशस्तिः।

ॐ नमः।

श्रेयस्वी प्रथमः प्रभुः प्रथिमभाग्प्रैपुण्यपुण्यात्मना-
    मस्तु स्वस्तिकरः सुखाब्धिमकरः श्री····देवः स वः।
पद्मोल्लासकरः करैरिव रविर्व्योम्नि क्रमाम्भोरुह-
    न्यासैर्यस्तिलकीबभूव भगवाञ्शत्रुंजयोऽनेकशः॥
श्रीसिद्धार्थनरेशवंशसरसीजन्माब्जिनीवल्लभः
    पायाद्वः परमप्रभावभवनं श्रीवर्धमानः प्रभुः।
उत्पत्तिस्थितिसंहृतिप्रकृतिवाग्यद्गीर्जगत्पावनी
    स्वर्वापीव महाव्रतिप्रणयभूरासीद्रसोल्लासिनी॥
आसीद्वासवबृन्दवन्दितपदद्वन्द्वः पदं संपदां
    तत्पट्टाम्बुधिचन्द्रमा गणधरः श्रीमान्सुधर्माभिधः।

यस्यौदार्ययुता प्रहृष्टसुमना अद्यापि विद्यावती
धत्ते संततिरुन्नतिं भगवती वीरप्रभोर्गौरिव ॥
श्रीसुस्थितः सुप्रतिबुद्ध एतौ सूरी अभूतां तदनु क्रमेण ।
याभ्यां गणोऽभूदिह कोटिकाह्वश्चन्द्रार्यमभ्यामिव सुप्रकाशः ॥
तत्राभूद्वज्रिणां संघः श्रीवज्रर्षिगणाभिधः ।
मूलं श्रीवज्रशाखाया गङ्गाया हिमवानिव ॥
तत्पट्टाम्बरदिनमणिरुदितः श्रीवज्रसेनगुरुरासीत् ।
नागेन्द्रचन्द्रनिर्वृतिविद्याधरसंज्ञकाश्च तच्छिष्याः ॥
स्वस्वनामसमानानि येभ्यश्चत्वारि जज्ञिरे ।
कुलानि काममेतेषु कुलं चान्द्रं तु दिद्युते ॥
भास्करा इव तिमिरं हरन्तः ख्यातिभाजनम् ।
भूरयः सूरयस्तत्र जज्ञिरे जगतां मताः ॥
बभूवुः क्रमतस्तत्र श्रीजगच्चन्द्रसूरयः ।
यैस्तपाविरुदं लेभे बाणसिद्ध्यर्क(१२८५)वत्सरे ॥
क्रमेणास्मिन्गणे हेमविमलाः सूरयोऽभवन् ।
तत्पट्टे सूरयोऽभूवन्नानन्दविमलाभिधाः ॥
साध्वाचारविधिः पथः शिथिलितः सम्यक्श्रियां धाम यै-
रुद्दध्रे स्तनसिद्धिसायकसुधारोचि(१५८२)र्मितेऽनेहसि ।
जीमूतैरिव यैर्जगत्पुनरिदं तापं हरद्भिर्भृशं
सश्रीकं विदधे गवां शुचितमैः स्तोमै रसोल्लासिभिः ॥
पद्माश्रयैरलमलंक्रियते स्म तेषां
प्रीणन्मनांसि जगतां कमलोदयेन ।
पट्टः प्रवाह इव निर्जरनिर्झरिण्याः
शुद्धात्मभिर्विजयदानमुनीशहंसैः ॥
सौभाग्यं हरि[1]सर्वपर्वहरणं रूपं च रम्भापति[2]-
श्रीजैत्रं शतपत्रमित्र[3]महसां चौरं प्रतापं पुनः ।

१. हरिः सूर्यः. २. रम्भापतिरिन्द्रः. ३. शतपत्रमित्रं सूर्यः.

येषां वीक्ष्य सनातनं मधुरिपुस्वःस्वामिधर्मांशवो
जाताः काममपत्रपाभरभृतो गोपत्वमाप्ताश्रयः ॥
तत्पट्टः प्रकटः प्रकामकलितोद्द्योतस्तथा सौधव-
त्सस्नेहैर्यतिराजहीरविजयस्नेहप्रियैर्निर्ममे ।
सौभाग्यं महसां भरेण महतामत्यर्थमुल्लासिनां
बिभ्राणः स यथाजनिष्ट सुदृशां काममप्रमोदास्पदम् ॥
देशाद्गुर्जरतोऽथ सूरिवृषभा आकारिताः सादरं
श्रीमत्साहिअकब्बरेण विषयं मेवातसंज्ञं शुभम् ।
शा·········जपाणयोऽवतमसं सर्वं हरन्तो गवां
स्तोमैः सूत्रितविश्वविश्वकमलोल्लासैर्नभोऽर्का इव ॥
चक्रुः फतेपुरम··········································भौम-
दृग्युग्मकोककुलमाप्तसुखं सृजन्तः ।
अब्देऽङ्कपावकनृप(१६३९)प्रमिते स्वगोभिः
सोल्ला······························म्बुजकाननं ये ॥
दामेवाखिलभूपमूर्धसु निजामाज्ञां सदा धारय-
ञ्श्रीमान्साहिअकब्बरो नरवरो देशेष्वशेषेष्वपि ।
षण्मासाभयदानपुष्टपटहोद्घोषानघध्वंसिनः
कामं कारयति स्म हृष्टहृदयो यद्वाक्कलारञ्जितः ॥
यदुपदेशवशेन मुदं दधन्निखिलमण्डलवासिजने निजे ।
मृतधनं च करं च सुजीजिआभिधमकब्बरभूपतिरत्यजत् ॥
यद्वाचा कतकाभया विमलितः स्वान्ताम्बुपूरः कृपा-
पूर्णः शाहिरनिन्द्यनीतिवनिताक्रोडीकृतात्मात्यजत् ।
शुल्कं त्यक्तुमशक्यमन्यधरणीराजां जनप्रीतये
तद्वाग्नीडजपुञ्जपूरुषपशूंश्चामूमुचन्द्रूरिशः ॥
यद्वाचां निचयैर्मुधाकृतसुधास्वादैरमन्दैः कृता-
ह्लादः श्रीमदकब्बरः क्षितिपतिः संतुष्टिपुष्टाशयः ।

---

१. गावो धेनवः चक्षूंषि किरणाश्च.

त्यक्त्वा तत्करमर्थसार्थमतुलं येषां मनःप्रीतये
जैनेभ्यः प्रददौ च तीर्थतिलकं शत्रुंजयोर्वीधरम् ॥
यद्वाग्भिर्मुदितश्चकार करुणास्फूर्जन्मनाः पौस्तकं
भाण्डागारमपारवाङ्मयमयं वेश्मेव वाग्दैवतम् ।
यत्संवेगभरेण भावितमतिः शाहिः पुनः प्रत्यहं
पूतात्मा बहु मन्यते भगवतां सद्दर्शनो दर्शनम् ॥
यद्वाचा तरणित्विषेव कलितोल्लासं मनःपङ्कजं
बिभ्रच्छाहिअकब्बरो व्यसनधीपाथोजिनीं चन्द्रमाः ।
जज्ञे श्राद्धजनोचितैश्च सुकृतैः सर्वेषु देशेष्वपि
[वि]ख्यातोऽर्हतभक्तिभावितमतिः श्रीश्रेणिकक्ष्मापवत् ॥
लुम्पाकाधिपमेघजीऋषिमुखा हित्वा कुमत्याग्रहं
भेजुर्यच्चरणद्वयीमनुदिनं भृङ्गा इवाम्भोजिनीम् ।
उल्लासं गमिता यदीयवचनैर्वैराग्यरङ्गोन्मुखै-
र्जाताः स्वस्वमतं विहाय बहवो लोकास्तपासंज्ञकाः ॥
आसीच्चैत्यविधापनादिसुकृतक्षेत्रेषु वित्तव्ययो
भूयान्यद्वचनेन गुर्जरधरामुख्येषु देशेष्वलम् ।
यात्रां गुर्जरमालवादिकमहादेशोद्भवैर्भूरिभिः
संघैः सार्धमृषीश्वरा विदधिरे शत्रुंजये ये गिरौ ॥

तत्पट्टमब्धिमिव रम्यतमं सृजन्तः
स्तोमैर्गवां सकलसंतमसं हरन्तः ।
कामोल्लसत्कुवलयप्रणया जयन्ति
स्फूर्जत्कला विजयसेनमुनीन्द्रचन्द्राः ॥

यत्प्रतापस्य माहात्म्यं वर्ण्यते किमतः परम् ।
अस्वप्नाश्चक्रिरे येन जीवन्तोऽपि हि वादिनः ॥

सौभाग्यं विषमायुधात्कमलिनीकान्ताच्च तेजस्विना(ता)-
मैश्वर्यं गिरिजापतेः कुमुदिनीकान्तात्कलामालिना(ता)म् ।

माहात्म्यं धरणीधरान्मलभुजां गाम्भीर्यमम्भोनिधे-
रादायाम्बुजभूः प्रभुः प्रविदधे यन्मूर्तिमेतन्मयीम् ॥
ये च श्रीमदकब्बरेण विनयादाकारिताः सादरं
श्रीमल्लाभपुरं पुरंदरपुरं व्यक्तं सुपर्वोत्करैः ।
भूयोभिर्व्रतिभिर्बुधैः परिवृता वेगादलंचक्रिरे
सामोदं सरसं सरोरुहवनं लीलामराला इव ॥
अर्हन्तं परमेश्वरत्वकलितं संस्थाप्य विश्वोत्तमं
साक्षात्साहिअकब्बरस्य सदसि स्तोमैर्गवामुद्यतैः ।
यैः संमीलितलोचना विदधिरे इत्यक्षशूरैः श्रिया
वादोन्मादभृतो द्विजातिपतयो भट्टा निशाटा इव ॥
श्रीमत्साहिअकब्बरस्य सदसि प्रोत्सर्पिभिर्भूरिभि-
र्वादैर्वादिवरान्विजित्य समदान्सिंहैर्द्विपेन्द्रानिव ।
सर्वज्ञाशयतुष्टिहेतुरनघो दिश्युत्तरस्यां स्फुर-
न्यैः कैलास इवोज्ज्वलो निजयशःस्तम्भो निचख्ने महान् ॥
दत्तं साहसधीरहीरविजयश्रीसूरिराजां पुरा
यच्छ्रीसाहिअकब्बरेण धरणीशक्रेण तत्प्रीतये ।
तच्चक्रेऽखिलमप्यबालमतिना यत्साज्जगत्साक्षिकं
तत्पत्रं फुरमाणसंज्ञमनघं सर्वा दिशो व्यानशे ॥
किं च गोवृषभकासरकान्ता कासरा यमगृहं नहि नेयाः ।
मोच्यमेव मृतवित्तमशेषं वन्दिनोऽपि हि न च ग्रहणीयाः ॥
यत्कलसलिलवाहविलासप्रीतचित्ततरुणा जनतुष्ट्यै ।
स्वीकृतं स्वयमकब्बरधात्रीस्वामिना सकलमेतदपीह ॥
चोलीबेगमनन्दनेन वसुधाधीशेन संमानिता
गुर्वी गुर्जरमेदिनीमनुदिनं स्वर्लोकबिब्बोकिनी ।
सद्वृत्ता महसां भरेण सुभगा गाढं गुणोल्लासिनी
ये हारा इव कण्ठमम्बुजदृशां कुर्वन्ति शोभास्पदम् ॥

इतश्च

आभूरान्वय[प]द्मपद्मसवया(?) ओकेशवंशेऽभव-
च्छ्रेष्ठी श्रीशिवराज इत्यभिधया सौवर्णिकः पुण्यधीः।
तत्पुत्रोऽजनि सीधरश्च तनयस्तस्याभवत्पर्वतः
[का]लाह्वोऽजनि तत्सुतश्च तनुजस्तस्यापि वाघाभिधः॥
तस्याभूद्वछिआभिधश्च तनुजः ख्यातो रजाईभव-
स्तस्याभूच्च सुहासिणी[ति] गृहिणी पद्मेव पद्मापतेः।
इन्द्राणीसुरराजयोरिव जयः पुत्रस्तयोश्चाभव-
त्तेजःपाल इति प्रहृष्टसुमनाः पित्रोर्मनः प्रीतिकृत्॥
कामस्येव रतिर्हरेरिव रमा गौरीव गौरीपते-
रासीत्तेजलदे इति प्रियतमा तस्याकृति········।
भोगश्रीसुभगौ गुरौ प्रणयिनौ शश्वत्सुपर्वादरौ
पौलोमीत्रिदशेश्वराविव सुखं तौ दंपती भेजतुः॥
वैराग्यवारिनिधिपूर्णनिशाकराणां
तेषां च हीरविजयव्रतिसिन्धुराणाम्।
सौभाग्य[भा]ग्यपरभागविभासुराणां
तेषां पुनर्विजयसेनमुनीश्वराणाम्॥
वाग्भिः सुधाकृतसुधाभिरुदञ्चिचेताः
श्राद्धः स शोभनमना भजति स्म भावम्।
श्रीसं[घभ]क्तिघनदानजिनेन्द्रचैत्यो-
द्धारादिकर्मसु भृशं सुकृतिप्रियेषु॥

(विशेषकम्)

ग्रहैः प्रशस्तेऽह्नि सुपार्श्वभर्तुरनन्तभर्तुश्च शुभां प्रतिष्ठाम्।
सोऽचीकरत्षड्युगभूपवर्षे हर्षेण सौवर्णिकतेजपालः॥
आदावार्षभिरत्र तीर्थतिलके शत्रुंजयेऽचीकर-
त्सै(चै)त्यं शैत्यकरं दृशोर्मणिगणस्वर्णादिभिर्भासुरम्।

---

१. अङ्कानां वामतो गत्या १६४६ मिते वर्षे इत्यर्थः.

अत्रान्येऽपि भुजार्जितां फलवतीमुच्चैः सृजन्तः श्रियं
प्रासादं तदनुक्रमेण बहवश्चाकारयन्भूभुजः ॥
तीर्थेऽत्र साधुकरमाभिधो धनी सिद्धिसिद्धितिथि(१९८८)संख्ये ।
चैत्यमचीकरदुच्चैरानन्दविमलमुनिराजाम् ॥
तं वीक्ष्य जीर्णं भगवद्विहारं स तेजपालः स्वहृदीति दध्यौ ।
भावी कदा सोऽवसरो वरीयान्यत्रात्र चैत्यं भविता नवीनम् ॥
अन्येद्युः स्वगुरूपदेशशरदा कामं वलक्षीकृत-
स्वान्ताम्भाः स वणिग्वरः पुरवरे श्रीस्तम्भतीर्थे वसन् ।
तीर्थे श्रीमति तुङ्गतीर्थतिलके शत्रुंजयेहगृहो(?)-
द्धारं कर्तुमना अजायततमां साफल्यमिच्छञ्श्रियः ॥
अत्र स्यात्सुकृतं कृतं तनुमतां श्रेयः श्रियां कारणं
मत्वैवं निजपूर्वजव्रजमहानन्दप्रमोदाप्तये ।
तीर्थे श्रीविमलाचलेऽतिविमले मौलेऽर्हतो मन्दिरे
जीर्णोद्धारमकारयत्स सुकृती कुन्तीतनूजन्मवत् ॥
शृङ्गेण भिन्नगगनाङ्गणमेतदुच्चै-
श्चैत्यं चकास्ति शिखरास्थितहेमकुम्भम् ।
हस्तेषु हस्तमितमुच्चमुपैति नाक-
लक्ष्मीं विजेतुमिव काममखर्वगर्वाम् ॥
यत्रार्हदोकसि जितामरकुम्भिकुम्भाः
कुम्भा विभान्ति शरवेदकरेन्दु(१२४५)संख्याः ।
किं सेवितुं प्रभुमयुः प्रचुरप्रताप-
पूरैर्जिता दिनकराः कृतनैकरूपाः ॥
उन्मूलितप्रमदभूमिरुहानशेषा-
न्विश्वेषु विघ्नकरिणो युगपन्निहन्तुम् ।
सज्जाः स इत्थमभिधातुमिवेन्दुनेत्राः(२१)
सिंहा विभान्त्युपगता जिनधाम्नि यत्र ॥

योगिन्यो यत्र शोभन्ते चतस्रो जिनवेश्मनि ।
निषेवितुमिवाक्रान्ताः प्रतापैरागता दिशः ॥
राजन्ते च दिशां पाला··········यत्रार्हदालये ।
मूर्तिमन्तः किमायाता धर्माः संयमिनाममी ॥
द्वासप्ततिः श्रियमयन्ति जिनेन्द्रचन्द्र-
बिम्बानि देवकुलिकासु च तावतीषु ।
द्वासप्ततेः श्रितजनालिकलाललतानां
किं कुड्मलाः परिमलैर्भुवनं भरन्तः ॥
राजन्ते यत्र चत्वारो गवाक्षा जिनवेश्मनि ।
विरञ्चेरिव वक्त्राणि विश्वाकारणहेतवे ॥
यत्र चैत्ये विराजन्ते चत्वारश्च तपोधनाः ।
अमी धर्माः किमायाताः प्रभूपास्त्यै वपुर्भृतः ॥
पञ्चालिकाः श्रियमयन्ति जिनेन्द्रधाम्नि
द्वात्रिंशदिन्द्ररमणीभरजैत्ररूपाः ।
ज्ञात्वा पतीनिह जिने किमु लक्ष्मणक्ष्मा-
राजां प्रिया निजनिजेशनिभालनोत्काः ॥
द्वात्रिंशदुत्तमतमानि च तोरणानि
राजन्ति यत्र निजधाम्नि मनोहराणि ।
किं तीर्थकृद्दशनलक्ष्मि(क्ष्म)मृगेक्षणाना-
मन्दोलनानि सरलानि सुखासनानि ॥
गजाश्चतुर्विंशतिरद्रितुङ्गा विभान्ति शस्ता जिनधाम्नि यत्र ।
देवाश्चतुर्विंशतिरीशभक्त्यै किमागताः कुञ्जररूपभाजः ॥
स्तम्भाश्चतुःसप्ततिरद्रिराजोत्तुङ्गा विभान्तीह जिनेन्द्रचैत्ये ।
दिशामधीशैः सह सर्व इन्द्राः किमाप्तभक्त्यै समुपेयिवांसः ॥
रम्यं नन्दपयोधिभूपति(१६४९)मिते वर्षे सुखोत्कर्षकृ-
त्साहाय्याज्जसुठक्कुरस्य सुकृतारामैकपाथोमुचः ।

प्रासादं बच्छिआसुतेन सुधिया शत्रुंजये कारितं
दृष्ट्वाष्टापदतीर्थचैत्यतुलितं केषां न चित्ते रतिः ॥
चैत्यं चतुर्णामिह धर्ममेदिनीभुजां गृहं प्रीणितविश्वविष्टपम् ।
शत्रुंजयोर्वीभृति नन्दिवर्धनाभिधं सदा यच्छतु वाञ्छितानि वः ॥

.... यः प्रभाभरविनिर्मितनेत्रशैत्ये
चैत्येऽत्र भूरिरभवद्विभवव्ययो यः ।
ज्ञात्वा वदन्ति मनुजा इति तेजपालं
कल्पद्रुमत्ययमनेन धनव्ययेन ॥

शत्रुंजये गगनबाणकला(१६५०)मितेऽब्दे
यात्रां चकार सुकृताय स तेजपालः ।
चैत्यस्य तस्य सुदिने गुरुभिः प्रतिष्ठा
चक्रे च हीरविजयाभिधसूरिसिंहैः ॥

मार्तण्डमण्डलमिवाम्बुरुहां समूहः
पीयूषरश्मिमिव नीरनिधेः प्रवाहः ।
किंकिव्रजः सलिलवाहमिवातितुङ्गं
चैत्यं निरीक्ष्य मुदमेति जनः समस्तः ॥

चैत्यं चारु चतुर्मुखं कृतसुखं श्रीरामजीकारितं
प्रोत्तुङ्गं जसुठक्कुरेण विहितं चैत्यं द्वितीयं शुभम् ।
रम्यं कुंअरजीविनिर्मितमभूच्चैत्यं तृतीयं पुन-
र्मूलश्रेष्ठिकृतं निकामसुभगं चैत्यं चतुर्थं तथा ॥

एभिर्विश्वविसारिभिर्द्युतिभरैरत्यर्थसंसूत्रितो-
द्द्योतो दिक्ष्वखिलासु निर्जरपतिः स्वर्लोकपालैरिव ।
श्रीशत्रुंजयशैलमौलिमुकुटं चैत्यैश्चतुर्भिर्युतः
प्रासादोऽङ्किमनोविनोदकमलाचैत्यं चिरं नन्दतु ॥

वस्ताभिधस्य वरसूत्रधरस्य शिल्पं
चैत्यं चिरादिदमुदीक्ष्य निरीक्षणीयम् ।

शिष्यत्वमिच्छति कलाकलितोऽपि विश्व-
कर्मास्य शिल्पिपटले भवितुं प्रसिद्धः ॥
सदाचाराढ्यानां कमलविजयाह्वानसुधियां
पदद्वन्द्वाम्भोजभ्रमरसदृशो हेमविजयः ।
अलंकारैराढ्यां स्त्रियमिव शुभां यां विहितवा-
न्प्रशस्तिः शस्तैषा जगति चिरकालं विजयताम् ॥

इति सौवर्णिकसाहश्रीतेजपालोद्धृतविमलाचलपट्टनश्रीआदीशमूलप्रासादप्रशस्तिः श्रेय········

बुधसहजसागराणां विनेयजयसागरोऽलिखद्वर्णैः ।
शिल्पिभ्यामुत्कीर्णा माधवनानाभिधानाभ्याम् ॥

(एपिग्राफिआ इण्डिका २।५०-५९)

## (११४)

## साहश्रीपद्मसिंहकारितशत्रुंजयतीर्थप्रासादप्रशस्तिः ।

ॐ

स्वस्ति श्रीवत्सभर्तापि न विष्णुश्चतुराननः ।
न ब्रह्मा यो वृषाङ्कोऽपि न रुद्रः स जिनः श्रिये ॥

संवत् १६७५ वर्षे शाके १५४१ प्रवर्तमाने

समग्रदेशशृङ्गारहालारतिलकोपमम् ।
अनेकेभ्यगृहाकीर्णं नवीनपुरमुत्तमम् ॥
अभ्रंलिहविहाराग्रध्वजांशुकहतातपम् ।
रूप्यस्वर्णमणिव्याप्तचतुष्पथविराजितम् ॥

(युग्मम्)

१. सर्वा अपि शत्रुंजयतीर्थस्थप्रशस्तयो डॉक्टर बुलर (G. Bühler, Ph. D, C. I. E.,) महाशयैरेव व्याख्याताः. शत्रुंजयश्च 'पालीटाना'प्रान्ते वर्तते इत्यपि त एव निर्णीतवन्तः. २. नवनगरं हालारदेशान्तर्गतं 'काठिआवार'मध्ये वर्तते.

तत्र राजा प्रशास्ति श्रीजसवन्ताभिधो नृपः ।
यामश्रीशत्रुशल्याह्वकुलाम्बरनभोमणिः ॥
यत्प्रतापाग्निसंतापसंतप्त इव तापनः ।
निर्माति जलधौ नित्यमुन्मज्जननिमज्जने ॥

(युग्मम्)

बभूवुः श्रीमहावीरपट्टानुक्रमभूषणाः ।
श्रीअञ्चलगणाती(धी)शा आर्यरक्षितसूरयः ॥
तत्पट्टपङ्कजादित्याः सूरिश्रीजयसिंहकाः ।
श्रीधर्मघोषसूरीन्द्रा महेन्द्रसिंहसूरयः ॥
श्रीसिंहप्रभसूरीशाः सूरयोऽजितसिंहकाः ।
श्रीमद्देवेन्द्रसूरीशाः श्रीधर्मप्रभसूरयः ॥
श्रीसिंहतिलकाह्वाश्च श्रीमहेन्द्रप्रभाभिधाः ।
श्रीमन्तो मेरुतुङ्गाख्या बभूवुः सूरयस्ततः ॥
समग्रगुणसंपूर्णाः सूरिश्रीजयकीर्तयः ।
तत्पट्टेऽथ सुसाधुश्रीजयकेशरिसूरयः ॥
श्रीसिद्धान्तसमुद्राख्यसूरयो भूरिकीर्तयः ।
भावसागरसूरीन्द्रास्ततोऽभूवन्गणाधिपाः ॥
श्रीमद्गुणनिधानाख्यसूरयस्तत्पदेऽभवन् ।
युगप्रधानाः श्रीमन्तः सूरिश्रीधर्ममूर्तयः ॥
तत्पट्टोदयशैलाग्रप्रोद्यत्तरणिसंनिभाः ।
जयन्ति सूरिराजः श्रीयुजः कल्याणसागराः ॥
श्रीनव्यनगरे वास्युपकेशज्ञातिभूषणः ।
इभ्यः श्रीहरपालाह्व आसील्लालणगोत्रकः ॥
हरीयाख्योऽथ तत्पुत्रः सिंहनामा तदङ्गजः ।
उदेसीत्यथ तत्पुत्रः पर्वताह्वस्ततोऽभवत् ॥
वच्छनामाथ तत्पत्नी चाभूद्वाच्छलदेविका ।
तत्कुक्षिमानसे हंसतुल्योऽथामरसंज्ञकः ॥

लिङ्गदेवीति तत्पत्नी तदौरस्यास्त्रयो वराः ।
जयन्ति **श्रीवर्धमान-चांपसी-पद्मसिंहकाः** ॥

अतः परं विशेषतः साहिवर्धमान-साहिपद्मसिंहयोर्वर्णनम्—

गाम्भीर्येण समुद्राभौ दानेन धनदोपमौ ।
श्रद्धालुगुणसंपूर्णौ बोधिना श्रेणिकोपमौ ॥
प्राप्तश्रीयामभूपालसमाजबहुलादरौ ।
मन्त्रिश्रीवर्धमानश्रीपद्मसिंहौ सहोदरौ ॥
महेला वर्धमानस्य वन्नादेवीति विश्रुता ।
तदङ्गजावुभौ ख्यातौ वीराख्यविजपालकौ ॥
वर्णिनी पद्मसिंहस्य रत्नगर्भा सुजाणदे ।
श्रीपाल-कुंरपालाह्व-रणमल्लास्तदङ्गजाः ॥
एवं स्वतन्त्रयुक्ताभ्यामनल्पोत्सवपूर्वकम् ।
साहिश्रीवर्धमानश्रीपद्मसीभ्यां यथादरात् ॥
प्रागुक्तवत्सरे रम्ये माधवार्जुनपक्षके ।
रोहिणीभे तृतीयायां बुधवासरसंयुजि ॥
श्रीशालिनाथमुख्यानां जिनानां चतुरुत्तरा ।
द्विशती प्रतिमा हृद्या भारिताश्च प्रतिष्ठिताः ॥

(युग्मम्)

पुनर्निजबहुद्रव्यसफलीकरणाकृतेः ।
श्रीनव्यनगरेऽकारि प्रासादः शैलसंनिभः ॥
द्वासप्ततिजिनौकोभिर्वेष्टितश्च चतुर्मुखैः ।
कैलासपर्वतोत्तुङ्गैरष्टाभिः शोभितोऽभितः ॥

(युग्मम्)

साहिश्रीपद्मसिंहेनाकारि शत्रुंजयोपरि ।
उत्तुङ्गतोरणः श्रीमान्प्रासादः शिखरोन्नतः ॥
यं दृष्ट्वा भविकाः सर्वे चिन्तयन्ति स्वचेतसि ।
उच्चैर्भूतः किमेषोऽद्रिर्दृश्यतेऽभ्रंलिहो यतः ॥

येन श्रीतीर्थराजोऽयं राजते सावतंसकः।
प्रतिमाः स्थापितास्तत्र श्रीश्रेयांसमुखार्हताम्॥

तथा च संवत् १६७१ वर्षे फाल्गुनसितद्वितीयायां तिथौ दैत्यगुरुवासरे रेवतीनक्षत्रे श्रीमतो नव्यनगरात्साहिश्रीपद्मसीकेन श्रीभरतचक्रवर्तिनिर्मितसंघसदृशं महासंघं कृत्वा श्रीअञ्चलगणाधीश्वरभट्टारकपुरंदरयुगप्रधानपूज्यराजश्रीपकल्याणसागरसूरीश्वरैः सार्धं श्रीविमलगिरितीर्थवरे समेत्य स्वयंकारितश्रीशत्रुंजयगिरिशिरःप्रासादे समहोत्सवं श्रीश्रेयांसप्रमुखजिनेश्वराणां सन्ति बिम्बानि स्थापितानि। सद्भिः पूज्यमानानि चिरं नन्दन्तु।

यावद्विभाकरदिवाकरभूधरार्य-
रत्नाकरध्रुवधराः किल जाग्र(म्र)तीह।
श्रेयांसनाथजिनमन्दिरमत्र ताव-
न्नन्दत्वनेकभविकौघनिषेव्यमानम्॥

वाचकश्रीविनयचन्द्रगणीनां शिष्यमु०देवसागरेण विहिता प्रशस्तिः।

(एपिग्राफिआ इण्डिक्–२।६४-६६)

---

## (११९)

## पारीक्षश्रीसोमचन्द्रजननीश्रीहीरबाईकारित-जिनमन्दिरजीर्णोद्धारप्रशस्तिः।

संवत् १६८२ वर्षे पातिसाहजिहांगीरश्रीसलेमसाहभूमण्डलाखण्डलविजयराज्ये श्रीचक्रेव(श्व)रीयै नमः ॥ ओम् ॥ महोपाध्यायश्री५हेममूर्तिगणिसद्गुरुभ्यो नमः।

ओं नमः।

स्वस्ति श्रीः शिवशंकरोऽपि गणमान्सर्वज्ञशत्रुंजयः
शर्वः शंभुरधीश्वरश्च भगवान्गौरो वृषाङ्को मृडः।
गङ्गोमापतिरस्तकामविकृतिः सिद्धैः कृतातिस्तुती
रुद्रो यो न परं श्रिये स जिनपः श्रीनाभिभूरस्तु मे॥

उद्यच्छ्रीरजडः कलङ्करहितः संतापदोषापहः
सौम्यः प्राप्तस····यामितकलः सुश्रीर्मृगाङ्कोऽव्ययः ।
गौरानोमृतसूरपास्तकलुषो जैवातृकः प्राणिनां
चन्द्रः [कोऽपि] जयत्यहो जिनपतिः श्रीवैश्वसैनिर्महान् ॥
त्यक्त्वा राजीमतीं यः स्वनिहितहृदयानेकपत्नीः ····पां
सिद्धिस्त्रीं भूरिरक्तामपि बहु चकमेऽनेकपत्नीमपीशः ।
लोके ख्यातस्तथापि स्फुरदतिशयवान्ब्रह्मचारीति नाम्ना
स श्रीनेमिर्जिनेन्द्रो दिशतु शिवसुखं सात्वतां योगिनाथः ॥
यच्छच्छार[द]चन्द्रचारुवदनश्रेयोविनिर्यद्वचः
पीयूषौघनिषेकतो विषधरेणापि प्रपेदे द्रुतम् ।
देवत्वं सुकृतैकलभ्यमतुलं यस्यानुकम्पानिधेः
स श्रीपार्श्वजिनेशितास्तु सततं विघ्नच्छिदे सात्वताम् ॥
यस्य श्रीवरशासनं क्षितितले मार्तण्डबिम्बायते
यद्वाक्यं भवसिन्धुतारणविधौ पोतायते देहिनाम् ।
यद्ध्यानं भविपापपङ्कदलने गङ्गाम्बुधारायते
श्रीसिद्धार्थनरेन्द्रनन्दनजिनः सोऽस्तु श्रिये सर्वदा ॥

अथ पट्टावली—

श्रीवर्धमानजिनराजपदक्रमेण
श्रीआर्यरक्षितमुनीश्वरसूरिराजाः ।
विद्यापगाजलधयो विधिपक्षगच्छ-
संस्थापका यतिवरा गुरवो बभूवुः ॥
तच्चारुपट्टकमला····लराजहंसा-
श्चारित्रमञ्जुकमलाश्रवणावतंसाः ।
गच्छाधिपा बुधवरा जयसिंहसूरि-
नामान उद्यदमलोरुगुणावदाताः ॥
श्रीधर्मघोषगुरवो वरकीर्तिभाजः
सूरीश्वरास्तदनु पूज्यमहेन्द्रसिंहाः ।

आसंस्ततः सकलसूरिशिरोवतंसाः
सिंहप्रभाभिधसुसाधुगुणप्रसिद्धाः ॥
तेभ्यः क्रमेण गुरवो जिनसिंहसूरि-
गोत्रा बभूवुरथ पूज्यतमा गणेशाः ।
देवेन्द्रसिंहगुरवोऽखिललोकमान्या
धर्मप्रभा मुनिवरा विधिपक्षनाथाः ॥
पूज्याश्च सिंहतिलकास्तदनु प्रभूत-
भाग्या महेन्द्रविभवो गुरवो बभूवुः ।
चक्रेश्वरीभगवतीविहितप्रसादाः
श्रीमेरुतुङ्गगुरवो नरदेववन्द्याः ॥
तेभ्योऽभवन्गणधरा जयकीर्तिसूरि-
मुख्यास्ततश्च जयकेसरिसूरिराजः ।
सिद्धान्तसागरगणाधिभुवस्ततोऽनु
श्रीभावसागरगुरूरुगुणा अभूवन् ।
तद्वंशपुष्करविभा(का)सनभानुरूपाः
सूरीश्वराः सुगुणशेवधयो बभूवुः ॥

षट्पदी ॥

तत्पट्टोदयशैलशृङ्गकिरणाः शास्त्राम्बुधेः पारगा
भव्यस्वान्तचकोरलासनलसत्पूर्णाभचन्द्राननाः ।
श्रीमन्तो विधिपक्षगच्छतिलका वादीन्द्रपञ्चानना
आसञ्श्रीगुरुधर्ममूर्तिगुरवः सूरीन्द्रवन्द्याङ्घ्रयः ॥
तत्पट्टेऽथ जयन्ति मन्मथभटाहंकारशर्वोपमाः
श्रीकल्याणसमुद्रसूरिगुरवः कल्याणकन्दाम्बुदाः ।
भव्याम्भोजविबोधनैककिरणाः सज्ज्ञानपाथोधयः
श्रीमन्तोऽत्र जयन्ति सूरिविभुभिः सेव्याः प्रभावोद्यताः ॥

श्रीमालज्ञातीयमन्त्रीश्वरश्रीभण्डारीतत्पुत्रमह० श्रीअमरसीसुतमह० श्रीकरणतत्पुत्रसाश्रीधन्नातत्पुत्रसाहश्रीसोपातत्पुत्रसा० श्रीवन्ततद्भार्या

उभयकुलानन्ददायिनी वाईश्रीसौभाग्यदे तत्कुक्षिसरोराजहंससाहश्रीरूप-तद्भगिनी उभयकुलानन्ददायिनी परमश्राविका हीरवाई पुत्रपारीक्षश्रीसोमचन्द्रप्रभृतिपरिकरयुतया संवत् १६८३ वर्षे माघसुदी १३ त्रयोदशीतिथौ सोमवासरे श्रीचन्द्रप्रभस्वामिजिनमन्दिरजीर्णोद्धारः कारितः ॥

(एपिग्राफिआ इण्डिक्—२।६८–७१)

---

# (११६)

## विग्रहराजमहाराजसमकालिकाल्लटकारितहर्षनाथप्रासादप्रतिष्ठाप्रशस्तिः।

[ओं नमः शिवा]य ॥

सर्वविघ्नशम[नं सुरार्चितं] पूर्वमेव शिवयोस्तनूभवम् ।
भुक्तिमुक्तिपरमार्थसिद्धिदं तं नमामि वर[दं गजाननम्] ॥
........................कुलितमानसैः ।
स्तूयमानस्तु सद्देवैः पातु वस्त्रिपुरान्तकः ॥
पादन्यासावनुन्ना नमति वसुमती शेषभोगावलग्ना
[बा]हूत्क्षेपैः स........................र्कचन्द्रैः ।
भिन्नावस्थं समस्तं भवति हि भुवनं यस्य नृत्ते प्रवृत्ते
स श्रीहर्षाभिधानो जयति पशुपतिर्दत्तविश्वानुकम्पः ॥
सव्ये शूलं त्रिशिखमपरे दोष्णि [भि]क्षाक[पालं]
भूषा..............भुजगः कण्ठिका नीलकण्ठे ।
नेदृग्वेषस्त्रिनयन मया क्वापि दृष्टो विचित्र
इत्थं गौर्या प्रहसितहरः सस्मितः पातु युष्मान् ॥

---

१. लेखोऽयं पाषाणमयशिलोत्कीर्णः जयपुरराष्ट्रान्तर्गतशेखावाटीविषये शीकरराजधानीतो दक्षिणे जयपुरतश्च वायव्यकोणे हर्षनाम्नो गिरेः शृङ्गे देवालये १५३४ ईशाब्दे Dr. G. E. Rankin and Sergeant E. Dean महाशयाभ्यामुपलभ्य Asiatic Society सभायै प्रेषितः। स च F. Keilhorn Ph. D. C. I. E. महाशयेन व्याख्यातः.

वेगोद्धूतार्यमादिग्रहगगनतलं व्यश्नुवाना जलौघै-
न्यक्कुर्वाणा स[मुद्रान्] क्षयवलितजलानूर्मिमालासहस्रैः।
देयादभ्यर्थितं वः शशधरधवला स्वर्धुनी चन्द्रमौले-
र्मौलौ लीलां वहन्ती स्फुटविकटजटाबन्धने चीरिकायाः॥
चञ्चच्चन्द्रार्कतारं भुवननगनदीद्वीपसिन्धुप्रपञ्चं
विश्वं देवासुराहिप्रमथमुनिवरैर्यक्षमर्त्यैः सनाथम्।
यस्येच्छाशक्तिभावादसदपि सकलं जायते लीयते च
सोऽव्याद्वो हर्षदेवो भुवनविरचनासूत्रधारोऽप्रमेयः॥
नूनं बाणाग्निदग्धत्रिपुरसुररिपुर्जातहर्षः सहर्षै-
रिन्द्राद्यैर्देववृन्दैः कृतनतिनुतिभिः पूज्यमानोऽत्र शैले।
योऽभून्नाम्नापि हर्षो गिरिशिखरभुवोर्भारतानुग्रहाय
स स्ताद्वो लिङ्गरूपो द्विगुणितभवनश्चन्द्रमौलिः शिवाय॥
निर्यन्नेत्राण्डभाण्डानणुदहनरुचिप्लोषसंभ्रान्तसत्त्वं
प्रान्तज्वालावलीढद्रुमबहलमहाधूमधूम्रायिताशम्।
संरम्भारम्भभीमस्वनमसमशरोच्छेदि यस्याशशङ्के
दृष्ट्वा देवैः स्वरूपं किमियमसमये संहृतिर्बोभुवे[ति[1]]॥
देवः पुरधगध्यास्ते यमभ्रंकषमुच्चकैः।
हर्षख्यातिः स हर्षाख्यो गिरिरेष पुनातु वः॥
शूरस्येदं(स्यैष) श्लोकं(कः)।

गाङ्गं नो निर्झराम्भः प्रवहति न शुभा नन्दनोद्यानलक्ष्मीः
सद्रत्नस्वर्णशृङ्गामलविविधरुचो नैव [सौधास्त]थात्र।
अन्यां धत्ते तथापि श्रियमतिशयिनीमेष शैलोऽद्वितीयां
साक्षाच्छंभुर्यदास्ते तदपि हि परमं कारणं रम्यतायाः॥
अष्टमूर्तिर्यमध्यास्ते सिद्ध्यष्टकविभुः स्वयम्।
महिमा भूधरस्यास्य परमः कोऽपि [विद्यते]॥

---

१. 'बोभुवे[य]' इति पूरणेऽर्थोऽस्फुटः। 'बोभुवा' इति यङ्लुगन्तम्.

एतत्स्वर्णाण्डकान्तिप्रवरतममहामण्डपाभोगभद्रं
प्रान्तप्रासादमालाविरचितविकटापाण्डुपुत्राभिरामम्।
मेरोः शृङ्गोपमानं सुघटितवृषसत्तोरणद्वाररम्यं
नानासद्भोगयुक्तं जयति भगवतो हर्षदेवस्य हर्म्यम्॥
आद्यः श्रीगूवकाख्यामथितनरपतिश्चाहमानान्वयोऽभू-
च्छ्रीमन्नागा....लोकप्रवरनृपसभालब्धवीरप्रतिष्ठः।
यस्य श्रीहर्षदेवे वरभवनमयी भौतली कीर्तिमूर्ति-
र्लोकेऽद्यापि स्थिरैषा प्रतपति परमै............... ॥
पुत्रः श्रीचन्द्रराजोऽभवदमलयशास्तस्य तीव्रप्रतापः
सूनुस्तस्याथ भूपः प्रथम इव पुनर्गूवकाख्यः प्रतापी।
तस्माच्छ्रीचन्दनोऽभूत्क्षितिपतिभयदस्तोमरेशं सदर्पं
हत्वा रुद्रेनभूपं समरभुवि [ब]लाद्ये[न लब्धा] जयश्रीः॥
ततः परमतेजस्वी सदा समरजित्वरः।
श्रीमान्वाक्पतिराजाख्यो महाराजोऽभवत्सुतः॥
येनादैन्यं स्वसैन्यं कथमपि दधता वाजिवल्गा मुमुक्षु
प्रागेव त्रासितेभ्यः सरसि करिरटङ्किण्डिमैडि......... ।
वन्द्यक्ष्माभर्तुराज्ञां समदमभिवहन्नागतोऽनन्तपार्श्वं-
क्ष्मापालस्तन्त्रपालो दिशि दिशि गमितो ह्रीविषण्णः प्रसन्नः॥
शूरस्येदम्।
लोकैर्यो हि महीतले ननु हरिश्चन्द्रोपमो गीयते
त्यागैश्वर्यजयेषु कीर्तिरमला धर्मेश्च यस्योज्ज्वलः।
येनादायि हराय मन्दिरकृते भक्त्या प्रभूतं वसु
श्रीमद्वाक्पतिराजसूनुरसमः श्रीसिंहराजोऽभवत्॥
हैममारोपितं येन शिवस्य भवनोपरि।
पूर्णचन्द्रोपमं स्वीयं मूर्तं यश.........डकम्॥
....तोमरनायकं सलवणं सैन्याधिपत्योद्धतं
युद्धे येन नरेश्वराः प्रतिदिशं निर्नाशिता जिष्णुना।

कारावेश्मनि भूरयश्च विधृतप्रस्तावद्धि यावद्गृहे
तन्मुक्त्यर्थमुपागतो रघुकुले भूचक्रवर्ती स्वयम् ॥
श्रीमान्विग्रहराजोऽभूत्तत्सुतो वासवोपमः।
वंशलक्ष्मीर्जयश्रीश्च येनैते विधुरोद्धृते ॥
श्रीसिंहराजरहिता किल चिन्तयन्ती
भीतेव संप्रति विभुर्ननु को ममेति।
येनात्मबाहुयुगले चिरसंनिवासं
संधीरितेति ददता निजराज्यलक्ष्मीः ॥
येन दुष्टदमनेन सर्वतः साधिताखिलमही स्वबाहुभिः।
लीलयैव वशवर्तिनी कृता किंकरीव निजपादयोस्तले ॥
यस्य चारु चरितं सता सदा शृण्वतां जगति कीर्तितं जनैः।
हृष्टिजातघनरोमकं[टका] जायते तनुरलं मुहुर्मुहुः ॥
मुक्ताहारैः सुतारैः प्रतरलतुरगैश्चारुवस्त्रैश्च शस्त्रैः
कर्पूरैः पूगपूरैर्मलयतरुवरैर्हेमभारैरपारैः।
उग्रद्दानैः समानैश्चलकुलगिरिभिर्दन्तिवारैः सदारै-
र्निर्व्याजैः प्रातिर········भिरिति भृतैः प्राभृतैर्यः सिषेवे ॥
छत्रधारावरग्रामो द्वितीयः शंकराणकः।
तेनेमौ हर्षनाथाय भक्त्या दत्तौ सशासनौ ॥
श्रीमद्दुर्लभराजेन योऽनुजेन विभूषितः।
लक्ष्मणेनेव काकुत्स्थो विष्णुनेव हलायुधः ॥
महाराजावली चासौ शंभुभक्तिगुणोदया।
श्रीहर्षः कुलदेवोऽस्यास्तस्माद्दिव्यः कुलक्रमः ॥
अनन्तगोचरे श्रीमान् पण्डित औत्तरेस्व(श्व)रः।
पञ्चार्थलकुलाम्नायी विश्वरूपोऽभवद्गुरुः ॥
दीक्षाजातमलध्वंसविस्फुरज्ज्ञाननिर्मलः।
प्रशस्ताख्योऽभवच्छिष्यस्तस्य पाशुपतः कृती ॥

भा····रक्तोऽभवत्तस्य शिष्यो ह्रि(हि) नामतोऽल्लुटः ।
वार्गटिकान्वयोद्भूतसद्विप्रकुलसंभवः ॥
हर्षस्यासन्नतो ग्रामः प्रसिद्धो राणपल्लिका ।
सांसारिककुलाम्नायस्ततो यस्य विनि[र्गमः] ॥
अल्लटच्छद्मना नन्दी शिवासन्नस्थितिक्रमः ।
श्रीहर्षाराधने नूनं स्वयं मर्त्यमवातरत् ॥
आजन्म ब्रह्मचारी दिगमलवसनः संयतात्मा तपस्वी
श्रीहर्षाराधनैकव्यसनशुभमतिस्त्यक्तसंसारमोहः ।
आसीद्यो लब्धजन्मा भवतरणधियां········सुबन्धु-
स्तेनेदं धर्मवित्तैः सुघटितविकटं कारितं हर्षहर्म्यम् ॥
अस्मिंश्चन्द्राङ्कशैले गगनपथलिहोत्तुङ्गशृङ्गेऽप्रमेयं
हर्म्यं श्रीहर्षनामप्रथितपशुपतेः सद्विमानोपमानम् ।
दृष्ट्वा सद्भोगयुक्तं बहुसुरभवनं कारितं येन·······
नासाध्यं किंचिदस्ति स्फुटमिति तपसो निःस्पृहाणां यतीनाम्॥
आसीन्नैष्ठिकरूपो यो दीप्तपाशुपतव्रतः ।
ती[व्र]वेगतपोजातपुण्यापुण्यमलक्षयः ॥
सदा शिवसमाकारस्तस्येश्वरसमद्युतेः ।
भावद्योतोऽभवच्छिष्यः संदीपितगु[रुक्र]मः ॥
गुरोराज्ञामयं प्राप्य प्रतिष्ठासोः शिवालयम् ।
यथाप्रारब्धकार्याणामङ्गीकृतभरोऽभवत् ॥
पुरस्तात्पर्वतस्याधस्त्रितयं येन कारितम् ।
सत्कूपो वापिका दिव्या गोप्रपा घटितोपलैः ॥
सदैव वहमानेन कूपेन स्वादुवारिणा ।
वाटिकासेच··········प्रपाभरणं तथा ॥
सत्पुष्पैरर्चनं शंभोः पयःपानं गवामपि ।
कार्यद्वयमिदं सारं दर्शितं पुण्यकाङ्क्षिणाम् ॥

दिगम्बरं जटा भस्म तल्पं च विपुलं मही।
भिक्षा वृत्तिः करः पात्रं यस्यैतानि परिग्रहः॥
शिवभवनपु..............................रं
तदखिलमुपलौघैः पूरयित्वा गभीरम्।
समतलसुखगम्यं प्राङ्गणं तेन कान्तं
मसृणतरशिलाभिः कारितं बन्धयित्वा॥
वीरभद्रसुतः ख्यातः सूत्रधारोऽत्र चाण्डसिव (?)।
विश्वकर्मेव सर्वज्ञो वास्तुविद्या.............॥
येन निर्मितमिदं मनोहरं शंकरस्य भवनं समण्डपम्।
[स]र्वदेवमयचारुतोरणं स्वर्गखण्डमिव वेधसा स्वयम्॥
गङ्गाधरवरभवने करणिकथीरुकसुतेन भक्तेन।
अक्रियतेयं सुगमा प्रशस्तिरिह धीरनागेन॥
यावच्छंभो..........नसुरनदीचन्द्रलेखापतित्वं
यावल्लक्ष्मीर्मुरारेरुरसि विलसति द्योतते कौस्तुभं च।
गायत्री यावदास्ते सततमुपनता प्रेयसी ब्रह्मणोऽन्ते
कैलासाकारमेतत्प्रतपतु भवनं हर्षदेवस्य तावत्॥
अ.........तः शंभुः कथं कालस्य गोचरः।
हर्म्यनिर्माणकालस्तु यथादृष्टो निबध्यते॥
संवत् १०१ [३?] आषाढशुदि १३ शंभोः प्रासादसिद्धिः॥
जा(या)तेऽब्दानां सहस्रे त्रिगुणनवयुते(१०२७) सिंहराशौ गतेऽर्के
शुक्ला यासीत्तृ[तीया] शुभकरसहिता सोमवारेण तस्याम्।
आदिष्टः शंभुनासौ भुवममलपदं दित्सुना शुद्धसत्त्वं
लब्धा(ब्ध्वा) वैदेहभावं शिवभवनमभिप्रस्थितो ह्यल्लटोऽथ॥

स्वस्ति संवत् १०३० आषाढशुदि १५ निरुद्धं यथालब्धशासना
.........त्रैव लिख्यते। महाराजाधिराजश्रीसिंहराजः स्वभोगे तूनकूपक-
द्वादशके सिंहगोष्ठम्, तथा पट्टबद्धकविषये त्रैकलककेशानकूपौ, सरःकोष्ट-

विषये कण्हपल्लिकाम्, एवं ग्रामांश्चतुरश्चन्द्राङ्कशिखरोपरि..................
[भ]गवते श्रीहर्षदेवाय पुण्येऽहनि श्रीमत्पुष्करतीर्थे स्नात्वा स्नपनार्चनविलेपनोपहारधूपदीपपर्वयात्रोत्सवार्थमा शशाङ्कतपनार्णवस्थितेर्यावच्छासनत्वेन प्रददौ ।

तथैतद्भ्राता श्रीवत्सराजः स्वभोगावासजय[पु]रविषये कर्दमखातग्राममदाच्छासनेन ।

तथा विग्रहराजेन शासनदत्तग्रामद्वयमुपरि लिखितमास्ते ।

तथा श्रीसिंहराजात्मजौ श्रीचन्द्रराजश्रीगोविन्दराजौ स्वभोगावासपट्टबद्धकविषये दर्भकक्षविषये..................................संख्येन स्वहस्ताङ्कितशासनौ...........के पाटकद्वयं पल्लिकाग्रामौ भक्त्या वितेरतुः ॥

श्रीसिंहराजीयदुःसाध्यश्रीधंधुकः खट्टकूपविषये स्वभुज्यमानमयूरप[द्रं] ग्रामं स्वाम्यनुमतः प्रदत्तवान् ॥

...........हिलात्मजः श्रीजयनराजः स्वभुज्यमानकोलिकूपकग्रामं भक्त्या हर्षदेवाय शासनेन दत्तवान् ॥ तथा समस्तश्रीभम्मह[दे]श्या शाकंभर्यी लवणकूटकं प्रति विंशोपकमेकं दत्तम् । तथोत्तरापथीयहेडाविकानां...........[घ]टकं प्रति द्रम्म एको दत्तः । पुण्यात्मभिर्दत्तानि देवभुज्यमानक्षेत्राणि यथा—मद्रापुरिकायां पि[प्प]लवारिकाक्षेत्रम्, निम्बडिकाग्रामे दर्भटिकाक्षेत्रम्, मरुपल्लिकायां [झा]टक्षेत्रम्, [ह]र्षे लाटक्षेत्रम्, ...................लावणपद्रे सेन्यकक्षेत्रम्, तथात्रैव द्विहलिकानन्दिसोमके बृहद्धलमिति ॥

सर्वानेतान्भाविनो भूमिपालान्भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ॥

(एपिग्राफिआ इण्डिका २।११९–१२५)

---

# (११७)

## श्रीपरमारान्वयभूषणश्रीनरवर्मदेवकारितमन्दिर-प्रशस्तिः[1]।

ओं नमो भारत्यै ॥

प्रसादौदार्यमाधुर्यसमाधिसमतादयः ।
युवयोर्ये गुणाः सन्ति वाग्देव्यौ तेऽपि सन्तु नः ॥
एक एव भुवनत्रयेऽपि स श्रीपतिर्भवतु वो विभूतये ।
यस्य मध्यमपदश्रितोऽप्यमी भास्करप्रभृतयश्चकासति ॥
जातिं वृत्तं च बि[भ्राणा] गुणालंकारचारवः ।
सरसाश्च प्रसीदन्तु सूक्तयः सूरयश्च नः ॥
दुर्धरारिपुरभङ्गभीषणो भूरिभूतिसविशे[षभूषणः] ।
[रा]जराजकृतसत्क्रियः क्रियाद्वह्निवंशसदृशः शिवः शिवम् ॥
जाता महार्णवोत्पन्ने ब्रह्माण्डशुक्तिसंपुटे ।
महेश[स्यार्चि]ता मुक्ता जयन्त्यम्भोजयोनयः ॥
वैराग्यं च सरागतां च नृशिरोमालां च माल्यानि च
व्याघ्रानेकपचर्मणी च वसने चाहींश्च हारादि च ।
यद्भूतिं च विलेपनं च भजते भीमं च भव्यं च त-
द्दिश्याद्रूपमुमारमारमणयोर्भुक्तिं च मुक्तिं च वः ॥
वैश्वरूप्यं सम[भ्य]स्य मीनाद्याकृतिकैतवात् ।
स्वाभिन्ननिर्मिताशेषविश्वो विष्णुः पुनातु वः ॥
अस्ति प्रस्तगिरीन्द्रगर्वगरिमा नीलाश्मसानूल्लस-
त्कान्तिव्रातविडम्बिताम्बरतलः श्रीमान्नगेन्द्रोऽर्बुदः ।
यस्य व्योमतलोद्विलङ्घिशिखरप्राग्भारपद्माकर-
प्रेङ्खत्पद्मपरागचक्रमितरब्रह्माण्डखण्डायते ॥

---

१. 'प्रशस्तिरियं पाषाणशिलोल्लिखिता नागपुरप्रदर्शन्यां वर्तते' इति Dr. F. Kielhorn, Ph. D., C. I. E. महाशया वदन्ति.

देवैरावृतमभ्रमण्डलमिदं मर्त्यैश्च भूमण्डलं
कृत्वा धर्मतुलायमानवपुषो यस्मान्तयोर्न्यस्य च।
जाने यावदवैतुमिच्छति विधिः किं शुद्धमित्येतयो-
रूर्ध्वं तावदगादमर्त्यशिखरिस्तम्भाग्रभोमण्डलम्॥

लेभे विभिद्य जलधिप्रथिभूमिचक्र-
माकाशचक्रमपि येन दिगन्तनेमि।
संसारवर्त्मनि महाविषमे निषण्ण-
भग्नोन्नतैकतटविश्वरथाक्षलक्ष्मीः॥

तस्मिन्वेदविदां वरः स भगवानाकाशगङ्गापयः-
पूरप्लावितकान्तकोमलतटेऽतिष्ठद्वसिष्ठो मुनिः।
यस्त्रेतानलधूमवर्तियमुनां प्रीत्यै पितुर्ब्रह्मणो
गङ्गासंगमसिद्धये समनयद्ब्रह्माण्डखण्डं प्रति॥

विद्यामहासरिदुपान्तविवर्तिघोर-
संसारसैकतविषक्तमसक्तमेते।
यस्य त्रिलोकरथमुत्पथसंप्रवृत्त-
मुत्तारयन्ति शतशोऽप्युपदेशधुर्याः॥

आयातस्य कदाचन क्षितिपतेराच्छिन्दतः कौशिक-
स्यातिथ्योचितवस्तुजातजननादानन्दिनीं नन्दिनीम्।
निर्जेता कुपितेन तेन हविषा संहर्षिताद्बर्हिषो
वीरः श्रीपरमार इत्यनुपमः सत्याभिधानोऽभवत्॥

राज्यवर्धनविशालधर्मभृत्सत्यकेतुपृथुकीर्तिपार्थिवः।
वर्धतेऽयमहिमांशुचन्द्रमःसंततिप्रतिकृतिर्यदन्वयः॥

वराजरामराजितोऽनलोद्भवः स भारतः।
ग्रहेन्द्रचन्द्रयोरिव व्यजायतायमन्वयः॥

---

१. वहेः.

वंशेऽस्मिन्वैरिसिंहः क्षितिपतिरभवद्भूरिभूतिप्रभाव-
प्रागल्भ्यौदार्यशौर्यप्रचयपरिचयप्राज्यसौराज्यसिद्धिः।
नम्रक्ष्मापालभालस्थलदलितलुलत्कान्तकोटीरकोटि-
त्रुट्यन्माणिक्यचक्रस्थपुटितमणिमत्पादपीठोपकण्ठः॥
सर्वाशाविजयप्रयाणसमये यस्येन्द्रनीलप्रभै-
र्मायूरातपवारणैः शुशुभिरे नष्टावकाशा दिशः।
सर्पन्मत्तकरीन्द्रचक्रचरणप्राग्भारदीर्णस्थिरा
रन्ध्रोद्भूतविषण्णशेषसविषश्वासावरुद्धा इव॥
पाताले वडवामुखानलमिषात्पृथ्वीतले च स्फुर-
त्सौवर्णाचलकैतवाद्वियति च ब्रह्माण्डखण्डच्छलात्।
[च]ञ्चत्काञ्चनचक्रवालवलयव्याजाच्च दिङ्मण्डले
यस्याद्यापि समुल्लसत्यविचलीभूतः प्रतापानलः॥
स्वर्लोकेषु च विद्विषत्क्षितिषु च व्यालेन्द्रगेहेषु च
स्वाराजं च रिपुव्रजं च मुरजिन्नागाधिराजं च यः।
ऐश्वर्येण च विक्रमेण च धराभारक्षमत्वेन च
न्यक्कुर्वंश्च पराभवंश्च समतिक्रामंश्च पृथ्वीमपात्॥
तस्माद्वैरिनृपावरोधनवधूवैधव्यदुःखोद्भव-
द्बाष्पाम्भःकणशान्तकोपदहनः श्रीसीयकोऽभून्नृपः।
आविर्भावितनूतनस्थितिरयं ब्रह्माण्डखण्डच्छला-
द्यस्याद्यापि विलोक्यते वियदधो धूमः प्रतापानलः॥
अनुगगनमुदस्थुः स्थूलमुक्तोच्चया ये
यदसिदलितकुप्यत्कुम्भिकुम्भस्थलेभ्यः।
सततमपि पतन्तस्तेऽद्य यावन्न पृथ्वीं
पृथुलतरलताराव्याजभाजो भजन्ते॥
अत्याश्चर्यमदृष्टमश्रुतमिदं कस्मै समाचक्ष्महे
को न्वेतत्प्रतिपद्यते च तदपि प्रस्तूयते कौतुकात्।

उद्धृत्यापि वसुंधरामसदृशीं लब्ध्वापि लक्ष्मीं च यः
कुर्वन्कार्यमनेकशः सुमनसामागान्न वैकुण्ठताम् ॥
तस्माद्वैरिवरूथिनीबहुविधप्रारब्धयुद्धाध्वर-
प्रध्वंसैकपिनाकपाणिरजनि श्रीमुञ्जराजो नृपः।
प्रायः प्रावृतवान्पिपालयिषया यस्य प्रतापानलो
लोकालोकमहामहीध्रवलयव्याजान्महीमण्डलम् ॥
यस्मिन्सर्पति लीलयापि ललितैः सैन्यैः समुज्जृम्भितं
बाहव्यूहविसारिधूलिपटलव्यालुप्तदिग्मण्डलैः।
अत्यद्री[न्द्र]करीन्द्र[संच]यपदप्रेङ्खोलनोच्छृङ्खल-
प्रेङ्खच्छृङ्खलनादनिर्भरभृतब्रह्माण्डभाण्डोदरैः ॥
यन्निस्त्रिंशनिरस्तमस्तकतया लब्ध्वान्यथा दुर्लभं
देवत्वं स्वकबन्धमु[द्ध]तमधो दृष्ट्वा भटैर्वेष्टितम्।
संहर्षात्पततो विमानशिखरादाश्लिष्य कण्ठे हठा-
द्वीरा[न्संग]ररागिणो रुरुधिरे संभूय सिद्धाङ्गनाः ॥
तस्यासीदथ पार्थिवः पृथुयशाः श्रीसिन्धुराजोऽनुजः
स्फूर्जद्वाडवपावकस्फुट[म]हः[सौन्द]र्यशौर्यानलः।
यः संग्रामयुगान्तवल्गितभुजादुर्वातदूरोल्लस-
त्कल्लोलायितमण्डलाग्रप[ट]लेनामज्जयद्भूभृतः ॥
व्रजति जयिनि यत्रामित्रजातेन जज्ञे
तरलतुरगवेगोद्धूतभूरेणुराजिः।
विकटकरटिभारभ्रष्टभूपृष्ठरन्ध्रा-
दुदित इव समन्तादन्तकालाग्निधूमः ॥
गाम्भीर्यं प्रलयार्णवस्य च बलं कल्पान्तवातस्य च
स्थेमानं कमठेशितुश्च [गुरु]तां [ब्रह्माण्ड]भाण्डस्य च।
तेजः कालहुताशनस्य च महीयस्त्वं द्युचक्रस्य च
स्वीकृत्येव विनिर्मितं यमविदुः प्रत्याजि पृथ्वीभुजः ॥

१. देवानाम्, धीमतां च. २. विष्णुताम्, निश्चयेन कुण्ठतां च.

तत्सूनुर्भुवनैकभूषणमभूद्भूपालचूडामणि-
श्छायाडम्बरचुम्बितांह्रिकमलः श्रीभोजदेवो नृपः।
यस्याद्या[पि] स[माश्र]यन्ति चरणौ शक्रासना[ध्या]सिनः
स्पर्धाबन्धविनम्रनिर्जरनटत्कोटीरकोटित्विषः॥

रटत्पटहपाटवप्रकटझर्झरस्फूर्जित-
स्फुरड्डमरुडम्बरोड्डमरडिण्डिमोड्डामरा।
स्फुटत्करटकुञ्जरप्रपदसंपतत्संभ्रम-
भ्रमद्भवन[म]भ्रमज्जग[ति] यच्चमूरुच्चकैः॥

वैकुण्ठः कमलासनाय चतुरास्याय स्वयंभूः पुनः
पञ्चास्याय हराय शंभुरपि षड्वक्त्राय पुत्राय च।
सेनानीरपि दन्दशूकपतयेऽजस्रं सहस्राननना-
याद्यापि स्पृहयत्यमर्त्यसमितौ यत्कीर्तिमुत्कीर्तयन्॥

तस्मिन्वासवबन्धुतामुपगते राज्ये च कुल्याकुले
मग्नस्वामिनि तस्य बन्धुरुदयादित्योऽभवद्भूपतिः।
येनोद्धृत्य महार्णवोपममिलत्कर्णाटकर्णप्रभु-
मुर्वीपालकदर्थितां भुवमिमां श्रीमद्वराहायितम्॥

यस्मादुग्रतरप्रताप[पवनो]पारूढदुर्दर्शता-
सादृश्योत्थरविभ्रमादभिमुखैः प्रापञ्चि यैः पञ्चता।
मन्ये सोऽयमिति प्रतीतिविततामर्षप्रकर्षेण ते
भि[त्त्वा] भास्करमण्डलं रिपुभटाः प्रापुः परां निर्वृतिम्॥

एकस्यां समितौ विलोक्य विजयं यस्यापरस्यां स्तुव-
..................तां समर्थयति दृग्जिह्वासहस्रद्वये।
किंत्वानन्दनिमीलितेक्षणतया श्रौतैः सुखैर्वञ्चित-
श्चक्षुःकर्णमकर्णमप्यहिपतिः स्वीयं वपुर्निन्दति॥

पुत्रस्तस्य जगत्त्रयैकतरणेः सम्यक्प्रजापालन-
व्यापारप्रवणः प्रजापतिरिव श्रीलक्ष्मदेवोऽभवत्।

नीत्या येन मनुस्तथानुविदधे नासौ न वैवस्वतः
सर्वत्रापि सदाप्यवर्धत यथा कीर्तिर्न वैवस्वतः ॥
संभूय म्रियतां गुरुर्बलभराद्भूः कूर्मराजादयः
सद्यो नश्यत [वा द्रु]तं नमत वा प्रत्यर्थिपृथ्वीभुजः ।
चक्षुर्मङ्क्षु पिधीयतामनिमिषाः पांसुः पुरा पूरय-
त्येवं व्याहरति प्रयाणपटहो यस्य स्वनच्छद्मना ॥
यस्मिन्सर्पति बान्धवोऽपि विधुरैः पूर्वैः परित्यज्यते
कल्याणस्य कथापि कातरतया नापेक्ष्यते दक्षिणैः ।
आशावल्लिरसत्फलेति विकलैर्निश्चीयते पश्चिमै-
र्मैत्रं केवलमुत्तमैर्नृपतिभिर्द्वेधाप्ययोध्यास्यते ॥
प्रयाति यस्मिन्प्रथमं दिशं हरेर्जिहीर्षयानन्यसमानदन्तिनाम् ।
यथाविशद्गौडपतेः पुरंदर[स्तथा] शशङ्के सहसा पुरंदरः ॥
उत्साहोन्नतिसन्निमित्तजनिताजस्रप्रयाणाक्रमे-
णाक्रम्य त्रिपुरीं रणैकरसिकां वि[ध्वं]स्य विद्वेषिणः ।
येनावास्यत विन्ध्यनिर्झरमरुत्संचारचारूल्लस-
ल्लोलोद्यानलतावितानवसतौ रेवोपकण्ठस्थले ॥
जातानि जन्यश्रममार्जितानि बीजानि यत्कुञ्जरमञ्जनानि ।
तटाचलोच्चाटनतत्पराया रेवाप्रवाहोर्मिपरम्परायाः ॥
ये व्यालोलकरालनिर्झरकराः कुम्भायमानोन्नम-
त्कूटान्ताः कटकान्तभागविगलद्दानायमानाम्भसः ।
प्रायस्तेऽपि विरोधिसिन्धुरधिया यद्वाहिनीवारणै-
रुन्मीलन्मदमेदुरैर्विभिदिरे विन्ध्यस्य पादाचलाः ॥
स्फार[त्वक्सा]रवारस्थगितगुरुतटीकूटकुट्टाकटङ्क-
प्रायप्रेङ्खत्खुराग्रत्वरित[ह]रिचमूचक्रच[ङ्क्र]म्यमाणा ।
येनालङ्घ्यन्त सेनाकरिकरटतटोद्दामदानाम्बुगन्ध-
व्याविद्धागण्यवन्यद्विपकुलपटलध्यामला विन्ध्यपादाः ॥

ये दिक्सिन्धुरबन्धवः क्षयमरुल्लोलाद्रिस[ता]भृतः
क्रीडाक्रोडकुटुम्बका[न्ति]जलमुक्सब्रह्मचर्याजुषः ।
यत्सेनानृपगन्धसिन्धुरमरुन्मैत्रीविहस्तीकृतै-
स्तैरप्यङ्गकलिङ्गकुञ्जरकुलैर्युद्धा[य] बद्धोऽञ्जलिः ॥
देवा(वो ऽ)सौ पुरुषोत्तमः स भगवानाशिश्रिये यः श्रिया
येनेदं बलिवैरिबन्धविधिना विश्वं समाश्वासितम् ।
येनाधारि वसुंधरेति दधतः सानन्दमन्दाक्षतां
यस्य प्राच्यपयोनिधौ बुधजनैर्व्याजस्तुतिः प्रस्तुता ॥
ये कल्पानलधूममण्डलनिभाः कादम्बिनीविद्विषः
संवर्तोल्लसितान्धकारसुहृदस्त्रुट्यद्वियद्बान्धवाः ।
..........[आहव]श्रमनुदे पा[थो]वगाहोद्यतै-
र्यत्सामन्तमतङ्गजैरधरितास्तेऽप्य[म्बु]धेरूर्मयः ॥
कुम्भसंभवसोदर्ये यत्रापाचीमुपार्च्छति ।
चोलाद्यैर्नी[च]कै[र्भूत्वा] विन्ध्यबान्धवता दधे ॥
लीलाम्भःप्लवने यदीयपृतनासामन्तसीमन्तिनी-
श्रोणि[श्रे]णि[विशी]र्यमाणर[श]नामुक्ताः पतन्ति स्म याः ।
ताभिः संप्रति पप्रथे नु पृथिवीं यत्ताम्रपर्णीपयः
पश्याद्यापि तदेव पाण्ड्यनृपते[र्जी]वातवे [जा]य[ते] ॥
स्वामिन्नेष स सेतुरत्नभवतो रामस्य यो मारुति-
प्रायोपाहृतशैलशृङ्गरचितो वर्धि[ष्णुविन्ध्या]यते ।
इत्याहत्य कुतूहलेन कथितं तज्ज्ञैरवज्ञाय यः
सेनाहास्तिकसेतुनैव विदधे द्वीपान्तरोपक्रमम् ॥
अथावभज्योभयथा यमाशां यस्या[नघे] सर्पति सैन्यसङ्घे ।
अभूत्स्वकीयां ककुभं व्यपायाद्गोपायितुं पाशभृदप्यपाशः ॥
मैनाकप्रमुखा वसन्ति कुहचित्कालाग्निरास्ते क्वचि-
त्सन्ति क्वापि तिमिंगिलप्रभृतयः कुत्रापि शेते हरिः ।

एतद्वेत्ति न कोऽपि यत्र जलधौ तस्याप्यशेषं पयः
[पीत्वा] यत्करिभिः कृतैकचुलकैस्तैस्तैरगस्त्यायितम् ॥
यैः संभूय तिमिंगिलप्रभृतिभिः संसर्पिणस्तन्वते
पोताधानसबन्धुतां शिखरिणो मैनाकमुख्या अपि ।
भ्राम्यन्मन्दरडम्बराणि दधिरे तैरप्यशेषेऽम्बुधौ
यत्सेनागजराज[पीव]रकरा········ नोच्छृङ्खलैः ॥
अथातितिक्षोरिव राजराजमन्यं तदाशां प्रति यस्य धातुः ।
द्विधापि भीत्युज्झितवित्तपाशैर्भूपैः प्रतीपैर्विभवैर्बभूवे ॥
आरामा समरा मरावपि तदा पुन्नागपूगादिम-
द्रुल्मान्तर्वनदेवतायितजयश्रीमद्यशःपादपाः ।
यस्यासन्भुजदण्डच[ण्डि]मलसल्लोलासिलक्षीकृत-
क्षोणीपालकपालमण्डलगलत्कीलालकुल्याकुलाः ॥
खेलोत्खाततुरुष्कदत्तविलसद्वाहावलीवेल्लन-
क्राम्यत्कुङ्कुमकेसराधिकमृदौ वङ्क्षूपकण्ठस्थले ।
येनावास्य सरस्वतीसविधतासाधिक्यवाक्पाटव-
श्लाघ्यनुत्कट[प]त्रिपञ्जरगतः कीराधिपोऽध्याप्यत ॥
तेन व्यापुरमण्डले सुकृतिना यस्मै ग्रहेन्द्रग्रहे
यद्ग्रामद्वयमग्रिमेण विधिना विश्राणितं श्रद्धया ।
तज्जाता नरवर्मदेवनृपतिः पश्चात्परी(रा)वर्त्य त-
द्ग्रामं मोखलपाटकाख्यमदिशद्देशत्रयस्येच्छया ॥
तेन स्वयंकृतानेकप्रशस्तिस्तुतिचित्रितम् ।
श्रीमल्लक्ष्मीधरेणैतद्देवागारमकार्यत ॥

सं ११६१

ओं

हंहो बुधाः साधु समुत्सहध्वं कुशाग्रकल्पां च धियं विदध्वम् ।
मध्यस्थभावं च समाश्रयध्वं सुखं च नः सूक्तिसुधामुपाध्वम् ॥

बन्दनीयावुभौ सूक्तिश्रोतारौ तौ विपश्चितौ।
यावश्रु मुञ्चतः सान्द्रमानन्दालस्यनिर्भरौ॥

(एपिग्राफिआ इण्डिका २।१८२–८८)

---

# (११८)

## अरितरुद्वयादवश्रीभिल्लममहाराजशासनपत्रम्।[1]

ओं [नमः] शिवाय।

स्वस्ति शकनृपका[ला]तीतसंवत्सरशतेषु नवसु द्वाविंशत्यधिकेष्वङ्कतोऽपि संवत्सराः ९२२॥

त्रयमपि भुवनानामीषदुन्मेषमात्रा-
प्रभवति लयशेषं यन्निमेषादुपैति।
अतिशयितचरित्रो योगिनामप्यगम्यः
स इह जयतु देवश्चारुच[न्द्राङ्क]मौलिः॥
भुव[न]भवनहेतुर्दुष्कृताम्भोधिसेतु-
र्विहितमदनमाथः पार्वतीप्राणनाथः।
निहतमरुदरीशः पातु भिल्लममीशः
करतलकृतशूलः सर्वदा चन्द्रचूलः॥
युगस्यादौ शं[भु]र्भुवनमसृज..........
न्नुवन्मूर्तिस्त्रेधा मुररिपुविरिञ्चिप्रभवतः।
विरिञ्चेः संभूतः सकलमरुतां योनिरमलो
मरीचिर्या(र्य)त्की[र्ति]र्भ्रमति भुवने कुन्दविशदा॥
अतृ(त्रि)नामाभवत्तस्मात्सूनुः सत्यपरायणः।
तत्सूनुरिन्दुराख्यातो जगदानन्दमन्दिरम्॥

---

१. इदं शासनं ताम्रपत्रत्रये समुल्लिखितं मुम्बईप्रान्तस्थअहमदनगरप्रान्तस्थसंगमनगराख्ये ग्रामे Mr. H. Cousens महाशयैः समुपलभ्य Archæological Survey of Western India नामकसभाप्रकाशनीयग्रन्थे प्रकाशितमासीत्.

........................................................ ।

........................................................ ॥

ततोऽभवन्निर्मलसोमवंशजो विशालभूपालगुणालयं हि यः ।
पुरूरवा भूपतिरर्धमासनं सदा सुरेन्द्रस्य बभाज लीलया ॥

अभूदायुस्तस्मान्नृपतिरमरैर्वन्द्यचरितो
हठाक्रान्तारातिप्रणतचरणाम्भोजयुगलः ।
ततो जातो यस्मान्नघुषनृपतिर्लाञ्छनमिषा-
ल्लिलेख स्वस्या[ख्यां] स्वभुजविजयी चन्द्रफलके ॥

अजनि नघुषभूपाद्भूमिपालो ययाति-
स्त्रिदशमहितकीर्तिर्वीरलक्ष्मीविलासः ।
किमिव गुणगणोऽसौ व[र्ण्य]ते तस्य सान्द्या(यस्मा)-
ज्जगदवननिमित्तं यादवानां प्रसूतिः ॥

अभवदिह ययातेः सज्जनानन्दकारो
यदुनृपतिरशेषाक्रान्तदायादचक्रः ।
सकलविबुधवृन्दैर्वन्दितोऽसौ मुरारि-
र्जगदवननिमित्तं यस्य वंशे प्रसूतः ॥

एतस्माद्यदुवंशतः समभवद्भूपालचूडामणि-
र्भूपालः कलिकालकल्मषलवैर्नालोकितो भूतले ।
ख्यातः सेउणचन्द्र एव सहसा नाम्ना निजेनाह्वयं
यो लोकं निजमण्डलं च समदारातीभकण्ठीरवः ॥

प्रख्यातोऽसौ सद्गुणैर्यो विशालसंग्रामोद्यद्दुर्दमारातिकालः ।
जातस्तस्मादष्टमीचन्द्रभालः सूनुः श्रीमान्धाडिख्यो(यप्पो) नृपालः ॥

तदनु विबुधवृ[न्दान]न्दसंदोहसीमा
समदमदन....[मानि]नीमानचौरः ।
असमस........योरिकालानलोऽभू-
त्तत इह....[रे]न्द्रो भूतले भिल्लवाख्यः ॥

[ननु] किमिह कवीनां तस्य वर्ण्ये हि न स्या-
त्कुमुदविशदकीर्तेर्भू[तले]ऽद्यापि यस्य।
रुचिरकनकभासोद्भासिनीमाबबन्ध
प्रतिदिनमिह देवः पट्टिकां सोमनाथः॥

तस्माज्जातः सुतो राजा राजा राजीवलोचनः।
राजेव राजते योऽत्र प्रजानन्दकरः सदा॥

तस्माद्वन्दिगभूपतिः समभवद्भूपालचूडामणि-
र्यः सौभाग्यमहोदधिर्मृगदृशां कन्दर्पदर्पोद्धतः।
राजा दीर्घभुजद्वयः पृथुलसद्वक्षस्थलः संगरे
क्रूरारिप्रमदेभदर्पदलनः श्रीकृष्णराजानुगः॥

श्रीधो[र]प्यमहानृपस्य दुहिता श्रीबोढिय[व्वा]भिधा
शंभोः शैलसुतेव कैटभरिपोर्लक्ष्मीरिव प्रेयसी।
यस्यासीत्कुमुदावदातयशसः स्तूपायमा[नं] यया
[ना]मावेश्वरमीशवेश्म विहितं कैलासलीलाहरम्॥

[स्वे]नारातिकरालकालरचनाचण्डासिदण्डेन यो
हत्वा मुञ्ज[ञ्ज]महानृपप्रणयिनीं संग्रामरङ्गाङ्गणे।
लक्ष्मीमम्बुधिमेखलावलयित[क्ष्मा]वर्तिनीं प्रापय-
द्भूपश्रीरणरङ्गभीमभवने साक्षात्कुलस्त्रीव्रतम्॥

अधिष्ठानं सिन्दीन[ग]रममरस्वर्गवदिदं
सदा मूर्ता लक्ष्मीर्वसति भवने यस्य मुदिता।
मनः शंभोः पादाम्बुरुहयुगले ध्याननियतं
यदोर्वंशे भूपाचरितमभवं चा[रु]महसः॥

हिमगिरिशिखरसदृशमिह राजति सुरपुरवर्त्मसंमिभं
हतपुर[म]थननियतकैलासगिरिस्पृहमंशुमसत्प्रभम्।
पुञ्जितयश इवेन्दुकुन्द[द्यु]ति भूतलतिलकसुन्दरं
विजयाभरणनाथाभिधमभिनवगिरीशमन्दिरम्॥

समधिगतपञ्चमहाशब्दमहासामन्तद्वारवतीपुरपरमेश्वरैकशङ्खध्वनिबधिरितदिगन्तरालविजयतूर्यारवसंत्रासितजितरिपुसमूहविष्णुवंशोद्भवभवचरणाराधनैकतत्परमनस्विनीमानोन्मूलनकन्दर्पदर्पोद्धतारातिनिष(षू)दनसंग्रामरामकन्दुकाचार्यसेल्लविडेगविजयाभरणेत्यादिसमस्तराजावलीविराजितश्रीमद्विल्लमराजा 'अन्तःशून्यः कदलीगर्भवदसारः संसारः, व्याधिजरामरणसाधारणं शरीरम्, प्रबलपवनकम्पितनलिनीदलगततुषारतले च धनायुषी यौवनं च, तथा च कृतत्रेताद्वापरयुगेभ्योऽत्यर्थं दानफलं कलौ युगे पुनः शंसन्ति ।

न तथा सफला विद्या न तथा सफलं धनम् ।
यथा तु मुनयः प्राहुर्दानमेकं कलौ युगे ॥

अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लो[क]त्रयं तेन भवेत्प्रदत्तं यः काञ्चनं गां च महीं च दद्यात् ॥

आस्फोटयन्ति पितरः प्रवल्गन्ति पितामहाः ।
भूमिदोऽस्मत्कुले जातः स नः संतारयिष्यति ॥

भूमिदानं सुपात्रेषु सुतीर्थेषु सुपर्वणि ।
अगाधापारसंसारसागरोत्तारणं भवेत् ॥

धवलान्यातपत्राणि दन्तिनश्च मदोद्धताः ।
भूमिदानस्य पुष्पाणि फलं स्वर्गः पुरंदरः ॥'

इति पराशरवत्सकुत्साङ्गिरसगौतममनुयाज्ञवल्क्यमुनिवचनान्यवधार्य मया दृढतरविरक्तबुध्या(द्ध्या) मातापित्रोरात्मनश्च श्रेयोर्थिना हि मया ब्राह्मणानां ग्रामो दत्तः । श्रीसिन्दीनगरान्तःपातिवाजिकाण्वशाखिने गौतमगोत्राय······ होपाध्या[या]य····तारणै उपाध्यायसुताय, तथा वाजिकाण्वशाखाय कौण्डिन्यगोत्राय [विद्याध]रैआय श्रीधरै उपाध्यायसुताय, तथा व(ब)ह्वृचशाखाय भरद्वाजगोत्राय म[हलपै]आय वि[द्रः]पैयसुताय, तथा वाजिमाध्यंदिनशाखाय कौण्डिन्यगोता(त्रा)य [महल]पैआय इन्द्पैयसुताय, तथा व(ब)ह्वचशाखाय देवपैयाय अल्लपैसुताय,

तथा [छन्दो]गप्रभाकरदीक्षिताय, तथा मित्रायणीवच्छपैयः, तथा अन्भ्रपम्यणैयः, तथा माध्यंदिन[गु]हिसपैयः, तथा छन्दोगग्गलः सोम्मैयसुतः, तथा माध्यंदिनमहल्लपैयः, तथा व(ब)हृचराजदौवारिकमहल्लपैयः, तथा व(ब)हृचसंगलः, तथा करहाटवप्पलः, तथा वाजिकाण्वनिम्बैयः, तथा व(ब)हृचनेवपैयः, तथा व(ब)हृचशाखाय कौशिकगोत्राय विक्कपैयाय श्रीधरैसुताय, तथा [भो]प्पलाय कौशिकगोत्राय व(ब)हृचशाखिने, तथा व(ब)हृचशाखाय अण्णलैआय, तथा व(ब)हृचशाखाय दन्दपैआय कालपैसुताय, तथा पौग्वदेवः अलपैसुताय एवममीषां द्विजानां पितृपैतामहोपार्जितं मातुलिङ्गीतटसमावासितं अर्जुनोण्टिकाग्रामं तथा लघु अर्जुनोण्ढीग्राम-लघुवब्बुलवेद्रग्रामं[द्व]याभ्यन्तरं सवृक्षमालाकुलं चा(च)तुःसीमापर्यन्तं साष्टादशप्रकृत्योपेतं वापीकूपतडागारामसहितं सतृणकाष्ठपाषाणोपेतं श(स)कलसमस्तोपेतम् । ग्रामस्याघाटाः लिख्यन्ते—पूर्वतः संगमनगरम्, दक्षिणतश्चिखलीग्रामः, पश्चिमतः जम्बलेनिम्बग्रामः, उत्तरतः वब्बुलवेद्रतृ(त्रि)ग्रामी, एवं चाचतुराघाटविशुद्धं सर्वाभ्यन्तरसिद्ध्या पुत्रपौत्रादिसंतत्योपेतानां चन्द्रार्कं यावत्प्रतिपालनीयम् । एवमन्वयजां(जानां) बन्धूनामपि [भुञ्जानानां भो]जयतां कृषतां कर्षापयतां वा यथेष्टं प्रतिदिशतां प्रतिदेशयतां केनापि स्वश्रे(?) बाधा न करणीया ।

उक्तं च मुनिभिः—

यानीह दत्तानि पुरा नरेन्द्रैर्धनानि धर्मार्थयशस्कराणि ।
निर्माल्यमालाप्रतिमानि तानि को नाम साधुः पुनराददीत ॥

व(ब)हुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥

सद्यो दानं निरायासं सायासं तस्य पालनम् ।
एवं हि ऋषयः प्राहुर्दानाच्छ्रेयोनुपालनम् ॥

दत्त्वा भूमिं भाविनः पार्थिवेन्द्रान्भूयो भूयो याचते रामभद्रः ।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः ॥

इत्यर्थितोऽपि यः कलिकालवस(शा)ल्लोभाभिभूतो यः पूर्वदानमपहरिष्यति स पञ्चमहापातकैरुपपातकैर्युतो रौरवादिषु नरकेषु पच्यमानो दुष्कृतमनुभविष्यति ।

तथा च व्यासभट्टारकः प्राह—

'स्वदत्तां परदत्तां वा यो हरेत वसुंधराम् ।
स विष्टायां कृमिर्भूत्वा कृमिभिः सह पच्यते ॥
विन्ध्याटवीष्वतोयासु शुष्ककोटरवासिनः ।
महाहयो हि जायन्ते भूमिदानापहारकाः ॥
तडागानां सहस्रेण वाजिमेधशतेन च ।
गवां कोटिप्रदानेन भूमिहर्ता न शुद्ध्यति ॥'

इति महर्षिवचनान्यवधार्य आगन्तुकराजभिः धर्मलोपभयेन प्रतिपालनीयम् ।

मद्वंशजा परमहीपतिवंशजा वा
पापादपेतमनसो भुवि भाविभूपाः ।
ये पालयन्ति मम धर्ममिमं समग्रं
तेषां मया विरचितोऽञ्जलिरेष मूर्ध्नि ॥

सा(शा)र्वरीसंवत्सरीयभाद्रपदामावास्यायाम् । श्रीनासिकीय अरुणासवै(वे)द्यमहातीर्थे परमव्रती(तो)पवासनियमयुक्तेन स्री(श्री)भिल्लमराजेन सूर्यग्रहणे ग्रामोऽयं प्रदत्तः ॥ लिख(खि)तमिदं शासनपट्टं स्थाननियमेन राजनियमेन च मया केशवै उपाध्यायेनेति

यदक्षरं परिभ्रष्टं मात्राहीनं च यद्भवेत् ।
क्षा(क्ष)न्तुमर्हथ विद्वांसः कस्य न स्खलते मनः ॥

यदत्रोनाक्षरमधिकं वा तत्सर्वं प्रमाणमिति ॥

(एप्रिग्राफिआ इण्डिका ३।२१७–२२१)

---

# (११९)

## खेलरीग्रामस्थहरिब्रह्मदेवमन्दिरप्रशस्तिपत्रम्[1]।

ॐ श्रीगणपतये नमः ॥

सकलदुरितहर्ताभीष्टसिद्धिप्रकर्ता
निगमसमुपगीतः शेषयज्ञोपवीतः ।
ललितमधुकरालीसेविता गण्डपाली-
तटभुवि गणराजः पातु वो विघ्नराजः ॥
वेदानाराध्य वेधाः पठति भगवतीं यामनायस्तचित्तः
श्रीकण्ठस्यापि नान्दैरपहरति मनः पार्वती किंनरीभिः ।
हारा नारायणस्योरसि रहसि रणत्कङ्कणा यद्भुजाः स्युः
सद्यः सत्काव्यसिद्ध्यै स्फुरतु कविमुखाम्भोरुहे भारती सा ॥
ब्रह्मादयो द(दि)विषदः श्रुतिवाक्यदृष्ट्या
ध्यायन्ति यं पुरुषमात्मविदोऽप्यमूर्तम् ।
पापानि यत्स्मरणतो विलयं प्रयान्ति
नारायणः स्फुरतु चेतसि सर्वदा वः ॥
अहिहयनृपवंशे शंभुभक्तोऽवतीर्णः
कलचुतिरिति शाखां प्राप्य तीव्रप्रतापः ।
निजभुजगुरुदर्पाद्योऽरिदुर्गाण्यजैषी-
द्रणभुवि दश चाष्टौ सिंहणक्षोणिपालः ॥
अभवदवनिपालस्तत्सुतो रामदेवः
समरशिरसि धीरो येन भोणिङ्गदेवः ।
मणिरिव फणिवंशस्याहृतः कोपदृष्ट्या
तरुणतरणितेजःपुञ्जराजत्प्रतापः ॥

---

१. 'अयं च खेलरीग्रामो रायपुरग्रामतः पञ्चचत्वारिंशन्मैलात्मके पूर्वस्यामन्तराले वर्तते' इति Dr. F. Kielhorn, Ph. D, C. I. E., महाशयाः.

तत्पुत्रः शत्रुहन्ता जगति विजयते चन्द्रचूडस्य भक्तः
श्यामः कामाभिरामो मनसि मृगदृशामुद्भटानां कृतान्तः ।
सर्वेषां याचकानां स्फुरदमरतरुर्वाक्पतिः पण्डितानां
गीतज्ञानां द्वितीयो भरत इव नृपः श्रीहरिब्रह्मदेवः ॥
तद्राजधानी नगरीगरिष्ठा खल्वाटिका राजति वाटिकाभिः ।
सुरालया यत्र हिमालयाभा विभान्ति शृङ्गैरतिशुभ्रतुङ्गैः ॥
भूदेवा यत्र वेदाध्ययनमनुरताः स्वस्तिमन्तो वसन्ति
श्रीमन्तः श्रीविलासैरमरपरिवृढं राजराजं हसन्तः ।
कामिन्यः कामदेवं त्रिपुरहरदृशा दग्धमुज्जीवयन्त्यः
प्रोद्यद्दोर्मूलकान्त्या स्मितमधुरगिरा भ्रूलताडम्बरेण ॥
**मोची** तत्रेन्दुरोचीरुचिरतरयशाः कर्मनिर्माणदक्षः
सौजन्यादग्रजन्मानुचर इव जसीनामधेयस्य पौत्रः ।
नानाधर्माभिलाषी गुणनिधिशिवदासाभिधानस्य पुत्रः
श्रीमन्नारायणस्य स्मरणविमलधी राजते देवपालः ॥
नारायणस्यायतनं स्वशक्त्या भक्त्या महत्या सह मण्डपेन ।
निर्मापितं तेन परत्र चात्र तस्मै हरिर्यच्छतु वाञ्छितार्थम् ॥
हरिचरणसरोजध्यानपीयूषसिन्धु-
प्रसरदलघुवेलास्फालकेलीरसेन ।
सरसकविजनानां निर्मितेयं प्रशस्ति-
र्मनसि रसविधात्री मिश्रदामोदरेण ॥
वहति जगति गङ्गा यावदादित्यपुत्र्या
स्फुरति वियति तारामण्डलाखण्डलेन ।
तरणिरमरसद्मच्छद्मना तावदेषा
जयतु जयतु मोचीदेवपालस्य कीर्तिः ॥
श्रीवास्तव्यान्वयेनैषा प्रशस्तिरमलाक्षरा ।
लिखिता रामदासेन पण्डिताधीश्वरेण च ॥

---

१. 'खेलरी' इति नामास्या एव भवेत्.

स्वस्ति श्रीसंवत् १४७० वर्षे शाके १३३४ षष्ट्यब्दयोर्मध्ये प्लवनामसंवत्सरे माघसुदि ९ शनिवासरे रोहिणीनक्षत्रे शुभमस्तु सर्वजगतः। सूत्रधाररत्नदेवेन ॥

(एपिग्राफिआ इण्डिका—२।२३०-२३१)

---

# (१२०)

## दुबकुण्डग्रामस्थजिनमन्दिरशासनपत्रम्।[1]

ओं नमो वीतरागाय ॥

आ·········द्रौ·····ट·······················टना[घत्पा]दपीठं लुठ-
न्मन्दारस्रगम[न्द]गुञ्ज[द]लि[म]त्रिष्ठचूतसांराविणम् ।
[त]त्पा·······················वद्ध[च]·····रसु···························[तां]
सं·········द्वेगमिवाकरोत्स ऋषभस्वामी श्रिये स्तात्सताम् ॥
वि[वि]श्रा[णो] गुण[सं]ह[तिं] हततमस्तापो निजज्योतिषा
[यु]क्तात्मापि जगन्ति संगतजयश्चके सरागाणि यः ।
उन्माद्यन्मकर[ध्व]जोर्जितगजग्रासोल्लसत्केसरी
संसारोग्रगदच्छिदेऽस्तु स मम श्रीसा(शा)न्तिनाथो जिनः ॥
जाड्यं सस्व(शश्व)दखण्डितक्षयमपि क्षीणाखिलोपक्ष[यं]
साक्षादीक्षितमक्षिभिर्दधदपि प्रौढं कलङ्कं तथा ।
चिह्नत्वाद्यदुपान्तमाप्य सततं [जातस्तथा]नन्दकृ-
च्चन्द्रः सर्वजनस्य पातु विपदश्चन्द्रप्रभोऽर्हन् स नः ॥
सो(शो)कानोकहसंकुलं रतितृणश्रेणिप्रणश्य[द्रुम]-
·········[त्मा]ध्वगपूगमुद्गतमहामिथ्यात्ववातध्वनिः ।

---

१. अयं दुबकुण्डग्रामो ग्वालियरनगरतः षट्सप्ततिमैलात्मके नैर्ऋतभागेऽन्तराले कुनुनद्या वामभागेऽरण्यान्यां वर्तत इति Dr. F. Kielhorn, Ph. D., C. I. E., महाशयाः.

योे रागादिमृगोपघातकृतधीर्ध्यानाग्निना भस्मसा-
द्भावं कर्मवनं निनाय जयतात्सोऽयं जिनः सन्मतिः ॥
प्रसाधितार्थगुर्भव्यपङ्कजाकरभास्करः।
अन्तस्तमोपहो वोऽस्तु गोतमो मुनिसत्तमः ॥
श्रीमज्जिनाधिपतिसद्वदनारविन्द-
मुद्गच्छदच्छतरवो(बो)धसमृद्धगन्धम्।
अध्यास्य या जगति पङ्कजवासिनीति
ख्यातिं जगाम जयतु सु(श्रु)तदेवता सा ॥
आसीत्कच्छपघातवंशतिलकस्त्रैलोक्यनिर्यद्यशः-
पाण्डुश्रीयुवराजसूनुरसमद्युद्भीमसेनानुगः।
श्रीमा[न]र्जुनभूपतिः पतिरपामप्याप यत्तुल्यतां
नो गाम्भीर्यगुणेन निर्जितजग[द्ध]न्वी धनुर्विद्यया ॥
श्रीविद्याधरदेवकार्यनिरतः श्रीराज्यपालं हठा-
त्कण्ठास्थिच्छिदनेकबाणनिवहैर्हत्वा महत्याहवे।
[डिण्डीरा]वलिचन्द्रमण्डल[मि]लन्मुक्ताकलापोज्ज्वलै-
स्त्रैलोक्यं सकलं यशोभिरचलैर्योऽजस्रमापूरयत् ॥
यस्य प्रस्थानकालोत्थितजलधिरवाकारवादित्रशब्दा
वेगान्निर्गच्छदद्रिप्रतिमगजघटाकोटिघण्टारवाश्च।
संसर्पन्तः समन्तादहमहमिकया पूरयन्तो विरेमु-
र्नो रोदोरन्ध्रभागं गिरिविवरगुरुद्यत्प्रतिध्वानमिश्राः ॥
दिव वक्राक्रमयो[ग्य]मार्गणगणाधारानने‍कान्गुणा-
नच्छिन्नाननिशं दधद्विधुकलासंस्पर्धमानद्युतीन्।
[सू]नुच्छिन्नधनुर्गुणं विजयिनोऽप्याजौ विजित्यो[र्जि]तं
जातोऽस्मादभिमन्युरन्यनृपतीनामान्यमानस्तृणम् ॥

---

१. त्रैलोक्यनिर्यद्यशाश्चासौ पाण्डुरेव श्रिया राज्यलक्ष्म्या युतत्वाद्युवराजः तस्य सूनुः, त्रैलोक्यनिर्यद्यशसा पाण्डुश्रीयुक्तस्य युवराजनाम्नोऽपत्यम्. २. असमद्युतो भीमसेनस्य, भीमायाः सेनाया वानुगः.

यस्यास्त्य[द्भुत]वाहवाहनमहाशस्त्रप्रयोगादिषु
प्रावीण्यं प्रविकत्थितं पृथुमतिश्रीभोजपृथ्वीभुजा।
च्छत्रालोकनमात्रजातभयतो दृप्तारिमत्तप्रद-
स्यास्य स्याद्गुणवर्णने त्रिभुव[ने] को लब्धवर्णः प्रभुः॥
तुरगखरखुराग्रोत्खात[धात्री]समुत्थं
स्थगयदहिमरश्मेर्मण्डलं यत्प्रयाणे।
प्रचुरतररजोन्याशेषतेजस्वितेजो
हृतिमचिरत एवा[शं]सतीवानिवारम्॥ १२॥
शरदमृतमयूखप्रेङ्खदंशुप्रकाश-
प्रसरदमितकीर्तिव्याप्तदिक्चक्रवालः।
अजनि विजयपालः श्रीमतोऽस्मान्महीशः
शमितसकलधात्रीमण्डलक्लेशलेशः॥
भयं यच्छत्रूणां त्रिदशतरुणीवीक्षितरणे
क्रमेणाशेषाणां व्यतरदसदप्यात्मनि सदा।
सतोऽप्यंश(?)त्रादादव[नि]वलयस्याधिकमतो
बुधानामाश्चर्यं व्यतनुत नरेन्द्रो हृदि च यः॥
तस्माद्विक्र[म]कारिविक्रमभरप्रारम्भनिर्भेदित-
प्रोत्तुङ्गाखिलवैरिवारणघटोद्यन्मां[स]कुम्भस्थलः।
श्रीमान्विक्रमसिंहभूपतिरभूदन्वर्थनामा समं
सर्वाशाप्रसरद्विभासुरयशःस्फारस्फुरत्केसरः॥
बालस्यापि विलोक्य यस्य परिघाकारं भुजं दक्षिणं
क्षीणाशेषपराश्रयस्थितिधिया वीरश्रिया संश्रितम्।
सर्वाङ्गेष्ववगूहनाग्रहमहंकारादहंपूर्विका-
राज्यश्रीरकृताधिगस्य विमुखी सर्वान्यपुंवर्गतः॥
अत्यन्तो दृप्तविद्विट्तिमिरभरभिदि च्छादितानी[ति] तारा-
चक्रे विष्वक्प्रकाशं सकलजगदमन्दावकाशं दधाने।

निष्पर्यायं दिगास्यप्रसरदुरुक[राका]न्तचात्रीपरेन्द्रे
यस्मिन्राजांशुमालिन्यहह सति वृथैवैष कोऽन्योंऽशुमाली ॥

यद्दिग्जये वरतुरङ्गखुराग्रसङ्ग-
क्षुण्णावनीवलयजन्यरजोभिसर्पत्।
विद्वेषिणां पुरवरेषु तिरोहितान्य-
वस्तूत्करं प्रलयकालमिवादिदेश ॥

तस्य क्षितीश्वरवरस्य पुरं समस्ति
विस्तीर्णशोभमभितोऽपि चडोभसंज्ञम्।
प्राप्तेप्सितक्रयसमग्रदिगागताङ्गि-
व्यावर्ण्यमानविपणिव्यवहारसारम् ॥

आसीज्ज्ञायसपूर्विनिर्गतवणिग्वंशाम्बरामीशुमान्
जाम्बूकः प्रक[टाक्षता]र्थनिकरः श्रेष्ठी प्रभाधिष्ठितः।
सम्यग्दृष्टिरभीष्टजैन[च]रणद्वंद्वार्चने यो ददौ
पात्रौघाय चतु[र्विधं] त्रिविबुधो दानं युतः श्रद्धया ॥

श्रीमज्जिने[श्वर]पदाम्बुरुहद्विरेफो
विस्फारकीर्ति[ध]वलीकृतदिग्विभागः।
पुत्रोऽस्य वैभवपदं जयदेवनामा
सीमायमानचरितोऽजनि सज्जनानाम् ॥

रूपेण शीलेन कुलेन सर्वस्त्रीणां गुणैरप्यपरैः शिरःसु।
पदं दधानास्य बभूव भार्या यशोमतीति प्रथिता पृथिव्याम् ॥

तस्यामजीजनदसावृषिदाहडाख्यौ
पुत्रौ पवित्रवसुराजितचारुमूर्ती।
प्राच्यामिवार्कशशिनौ समयः समस्त-
संपत्प्रसाधकजनव्यवहारहेतू ॥

प्रोन्माद्यत्सकलारिकुञ्जरशिरोनिर्दारणोद्यद्यशो-
मुक्ताभूषितभूरभूरपिभिया(?)न्नोन्मार्गगामी च यः।

सोऽद्याह्निकमसिंहभूपतिरतिप्रीतो यकाभ्यां युग-
श्रेष्ठः श्रेष्ठिपदं पुरेऽत्र परमे प्राकारसौधापणे ॥
आसीद्विशुद्धतरबोधचरित्रदृष्टि-
निःशेषसूरिनतमस्तकधारि[ता]ज्ञः ।
श्रीलाटवागटगणोन्नतरोहणाद्रि-
माणिक्यभूतचरितो गुरुदेवसेनः ॥
सिद्धान्तो द्विविधोऽप्यबाधितधिया येन प्रमाणध्वनि-
ग्रन्थेषु प्रभवः श्रियामवगतो हस्तस्थमुक्तोपमः ।
जातः श्रीकुलभूषणोऽखिलविपद्वासोगणग्रामणीः
सम्यग्दर्शनशुद्धबोधचरणालंकारधारी ततः ॥
रत्नत्रयाभरणधारणजातशोभ-
स्तस्मादजायत स दुर्लभसेनसूरिः ।
सर्वं श्रुतं समधिगम्य सहैव सम्य-
गात्मस्वरूपनिरतोऽभवदिद्धधीर्यः ॥
आस्थानाधिपतौ वु(बु)धा[दवि]गुणे श्रीभोजदेवे नृपे
सभ्येष्वम्बरसेनपण्डितशिरोरत्नादिषूद्यन्मदान् ।
योऽनेकाञ्शतशो व्यजेष्ट पटुताभीष्टोद्यमो वादिनः
शास्त्राम्भोनिधिपारगोऽभवदतः श्रीशान्तिषेणो गुरुः ॥
गुरुचरणसरोजाराधनावाप्तपुण्य-
प्रभवदमलवु(बु)द्धिः शुद्धरत्नत्रयोऽस्मात् ।
अजनि विजयकीर्तिः सूक्तरत्नावकीर्णां
जलधिभुवमिवैतां यः प्रशस्तिं व्यधत्त ॥
तस्मादवाप्य परमागमसारभूतं
धर्मोपदेशमधिकाधिगतप्रबोधाः ।
लक्ष्म्याश्च बन्धुसुहृदां च समागमस्य
मत्वायुषश्च वपुषश्च विनश्वरत्वम् ॥

१. निखिलदिगम्बरगणे ग्रामणीः.

प्रारब्धाधर्मकान्तारविदाहः साधुदाहडः ।
सद्विवेकश्च कूकेकः सूर्पटः सुकृते पटुः ॥
तथा देवधरः शुद्धः धर्मकर्मधुरंधरः ।
च[न्द्रा]लिखितनाकश्च महीचन्द्रः शुभार्जनात् ॥
गुणिनः क्षणनाशिश्रीकलादानविचक्षणाः ।
अन्येऽपि श्रावकाः केचिदकृते धनपावकाः ॥
किंच लक्ष्मणसंज्ञोऽभू.....हदेवस्य मातुलः ।
गोष्ठिको जिनभक्तश्च सर्वशास्त्रविचक्षणः ॥
शृङ्गाग्रोल्लिखिताम्बरं वरसुधासान्द्रद्रवापाण्डुरं
सार्थं श्रीजिनमन्दिरं त्रिजगदानन्दप्रदं सुन्दरम् ।
संभूयेदमकारयन्गुरुशिरःसंचारिकेत्वंव(म्ब)र-
प्रान्तेनोच्छलतेव वायुविहतेर्व्योमादिश[त्पश्य]ताम् ॥

अथैतस्य जिनेश्वरमन्दिरस्य निष्पादनपूजनसंस्काराय कालान्तरस्फुटितत्रुटितप्रतीकारार्थं च महाराजाधिराजश्रीविक्रमसिंहः स्वपुण्यरासे(शे)रप्रतिहतप्रसरं परमोपचयं चेतसि [नि]धाय गोणीं प्रति विंशोपकं गोधूमगोणीचतुष्टयवापयोग्यक्षेत्रं च महा[चक्र]ग्रामभूमौ रजकद्रहपूर्वदिग्भागवाटिकां वापीसमन्वितां प्रदीपमुनिजनशरीराभ्यञ्जनार्थं करघटिकाद्वयं च दत्तवान् । तच्चाचन्द्रार्कं महाराजाधिराजश्रीविक्रमसिंहोपरोधेन

'व(ब)हुभिर्वसुधा भुक्ता राजभिः सगरादिभिः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥'

इति स्मृतिवचनान्निजमपि श्रेयः प्रयोजनं मन्यमानैः सकलैरपि भाविभिर्भूमिपालैः प्रतिपालनीयमिति

लिलेखोदयराजो यां प्रशस्तिं शुद्धधीरिमाम् ।
उत्कीर्णवाञ्छिलाकूटस्तील्हणस्तां सदक्षराम् ॥

संवत् ११४५ भाद्रपदसुदि ३ सोमदिने मङ्गलं महाश्रीः ॥

(एपिग्राफिआ इण्डिका—२।२३७-२४०)

# (१२१)

## सुप्रसिद्धमथुरान्तर्गतकेशववप्रोपलब्धविष्णुमन्दिर-प्रशस्तिः।

ॐ गणपतये नमः॥

दिश्यात्स वः कैरवकु[न्दलाभः श्रे]यांसि दन्तो द्विरदाननस्य।
विजित्य विघ्नानिव ········शङ्के मुखे समाधातुमुपाहितो यः॥
शौरेः कज्जलकान्तिरस्त्वसिलता भूत्यै चिरं वः करा-
त्कालिंदीव समुद्गता सरभसं या स्वर्धुनीस्पर्धया।
यत्रान्तर्जलमानुषीव कमला डिण्डीरपिण्डोपमः
कम्बुर्बिम्बितमम्बरं कमलिनीकिंजल्कपुञ्जायते॥
स वोऽवतु ज[नार्दन]ः सकलदैत्यदर्पार्दनो
महानरकमर्दनः प्रचुरचौरसंतर्दनः।
समस्तभुवनाकरः सकलचक्रभूषाकरो
धृतामरमहाभरस्तृणवदुद्धृतक्ष्माधरः॥
इति प्रथममेव।
शाखासंततिसंनिरुद्धसकलप्रोद्दामदिग्मण्डलः
श्लाघ्यः पान्थसमाश्रयो द्विजकुलैः संसेव्यमानोऽधिकम्।
क्षोणीमण्डलमण्डनं बहुतरप्रख्यातपर्वक्रमः
श्रीमानस्ति समुन्नतः क्षितितले राजन्यवंशो महान्॥
सौजन्यामृतवारिधिर्गुरुगुणग्रामप्रकामावधिः
श्रीमान्धर्मनिधिर्नयैकनिपुणक्षुण्णाध्वचक्रप्रधिः।
तत्राभूत्कलिकालकल्मषमषीप्रक्षालनैकश्रमो
मान्यः क्षत्रियवर्गमौलितिलकः श्रीसिंहराजाह्वयः॥

---

१. इयं प्रशस्तिः 1150 A. D. समयोत्कीर्णा Dr. A. Führer महाशयेन केशवसंज्ञकमथुरास्थमृत्कूटत उपलभ्य प्रेषिता Dr. G. Bühler, Ph. D., LL. D., C. I. E. महाशयेन शोधयित्वा प्रकाशिता.

दानेन लक्ष्मीर्विनयेन विद्या भावेन भक्तिः क्षमया च शक्तिः।
सत्येन सूक्तिः सुकृतेन मूर्तिरलंकृतालंकृतिना च येन ॥

तस्याभूत्तनयो नयोन्नतमतिः श्रीतेजराजाह्वयः
सद्धर्मैकरुचिः शुचिर्गुरुगुणग्राही विवेकाकरः।
यश्चित्रं पुरुषोत्तमोऽपि विदितो धत्ते न वैकुण्ठता-
मैश्वर्येऽप्यभुजंगमो न तरलो यो नायकोऽपि स्फुटम् ॥

तस्मात्सूनुरजायतोज्ज्वलतरप्रख्यातकीर्त्युच्चयः
श्रीमानासिक इत्युदारमहिमा देवद्विजार्चारतः।
विद्वद्वाञ्छितपूर्तिकल्पविटपी न्यायैकनिष्ठः परं
..........रोमणिर्विमलधीर्धीरः सतां संमतः ॥

शंभुः शैलसुतामिव श्रियमिव श्रीशार्ङ्गपाणिः प्रभुः
पौलो[मीमिव] वृत्रहाम्बुधिरिव स्रोतस्विनीं जाह्नवीम्।
शीतांशुः किल रोहिणीमिव मुनिर्मान्यामिवारुन्धतीं
स श्रीमान्हरिकण्ठजामुदवहत्सद्भक्तिभ[रान]ताम् ॥

तस्यां तेन सुतो जज्ञे जज्जः सज्जनभूषणम्।
रामो दशरथेनेव कौ[स]ल्यायामुदारधीः ॥

कुम्भैरम्भः कलयितुमलं वा[रि]धेः कस्य शक्तिः
को वा गङ्गापुलिनसिकतास्ताः परिच्छेत्तुमीशः।
नक्षत्राली दिवि गणयितुं कोऽङ्गुलीभिः समर्थः
तस्य स्तोतुं सकलमथवा कः प्रगल्भो गुणौघम् ॥

चन्द्रः कथंचित्समवाप्य वृद्धिं पक्षं किलैकं विमलं करोति।
जज्जः पुनर्भूतलपार्व[णेन्दुः] द्वावेव पक्षौ विमलौ विधत्ते ॥

सङ्गः साधुभिरेव कोपशमने शक्तिश्च धर्मे मति-
र्दानेऽभ्यासविधिः परोपकृतये कार्ये गुरूणां नतिः।
[भक्तिः] श्रीपुरुषोत्तमाङ्घ्रियुगले गोष्ठी समं पण्डितै-
र्जज्जस्यासिकसंभवस्य सुमतेः किं किं न लोकोत्तरम् ॥

काय: परोपकृतिभिः सुकृतो[च्चयेन
बु]द्धिर्मुरारिचरणस्मरणेन चेतः।
लक्ष्मीरपि प्रणयिवाञ्छितपूरणेन
सत्येन वागपि च येन कृता कृतार्था ॥
श्रीमान्त्रिस्सिकनामधेयविदितो राजन्यवंशोद्भत-
स्तस्यासावुपयेमिवान्दुहितरं धर्माभिधानां सतीम्।
शीलाचारविभूषणां शुभगुणां भर्तृव्रतां संमतां
तस्यां पुत्रचतुष्टयं समभवद्धर्मोपपन्नं ततः ॥
तस्यानुजो गुणनिधिर्गुणिनां वरिष्ठः
ख्यातः सुरद्विजगुरूचितभक्तियुक्तः।
गाम्भीर्यसत्यनयदानविवेकबुद्धिः
श्रीआसिकात्मजसुनिर्मलपज्जनामा ॥
अवन्तराजतनयां भार्यामुदवहत्सतीम्।
तस्यां स जनयामास·················· ॥
संसारं हरिभक्तिसारमखिलं विज्ञाय गोष्ठीजनैः
सार्धं धर्मधुरां चिराय वहता जज्जेन निर्मापितम्।
विष्णोर्हर्म्यमनल्पशिल्परचनावैचित्र्यपात्रं वह-
त्स्वर्गङ्गानिललोलितध्वजपटं शुभ्राभमभ्रंलिहम् ॥
सौवःसैन्धवमन्धकान्तकजटाजूटाटवीनाटक-
क्रीडादुर्ललितस्थितिस्थिरतरं यावत्पवित्रं पयः।
सध्रीची सुचिरं फणीश्वरफणारत्नाङ्कुराणां क्षि[ति-
र्यावत्त]वदिहास्तु मन्दिरमिदं लक्ष्मीपतेः शाश्वतम् ॥

अत्र गोष्ठीकृतां नामानि—

मुञ्जत्तकात्मजधर्म्मोह रामस्तिलहस्य नन्दनः।
पेइचित्तक··················णो वस्सिकात्मजः ॥
मङ्कपुत्रो नारदश्च जासिको माहवाङ्गजः।
ढोलसूनुर्वसन्तश्च कलस्यात्मजचन्तुकः ॥

सोभरात्मा महीपालः..................नः।
फुल्लोरी सडसंभूतो देधरो माधवात्मजः॥
सोढलो रायपालस्य सेल्हणो राजिकोद्भवः।
एते गोष्ठीं समागम्य पुत्रपौत्रादि...........काः॥
अथातो लिख्यते वृत्तिर्देवदेवस्य चक्रिणः।
संप्रदत्ता नरेन्द्रेण पुरवासिजनेन च॥
द्वे गृहे वीथयः षट् च वाटिका देवहेतवे।
गोणीप्रसृतिरन्नस्य मानोन्मानरसादिका॥
यन्त्ले यन्त्ले पली.........चा.........पुष्पमालिकात्।
मापकाच्च चतुर्थोऽशो यः कश्चिन्मापको भवेत्॥
यः कश्चिद्धरते वृत्तिं न ददाति च मानवः।
स गच्छेन्नरकं घोरं यावदाभूतसंप्लवम्॥
अस्याः प्रशस्तेः कर्तारौ बुधौ पालकुलद्धरौ।
क्षन्तव्यं सर्वविबुधैर्न्यूनान्यूनं विचारतः॥

संवत् १२०७ कार्तिकपौर्णमास्यां महाराजाधिराज..................जयपालदेवविजयराज्ये उत्कीर्णा सोमलसूत्र[धारे]ण॥

(एपिग्राफिआ इण्डिका—२।२७६-२७९)

## (१२२)

## श्रीमहाराजाधिराजश्रीकर्णदेवानां शासनपत्रम्।

ॐ नमः शिवाय॥

निर्गुणं व्यापकं नित्यं शिवं परमकारणम्।
भावग्राह्यं परं ज्योतिस्तस्मै सद्ब्रह्मणे नमः॥

---

१. इदं शासनपत्रं श्रीकर्णमहाराजेन वेणीनदीतीरे स्वपितृश्राद्धकरणसमये दत्तग्रामस्य लिखितं श्रीवाराणस्यां प्राचीनदुर्गान्तर्गतप्राचीनकूपतो निःसृतम्. सा नदी चाधुना जबलपुरतो दक्षिणस्यां दिशि ४० मीलप्रमिते नागपुरतः पूर्वस्यां दिशि ३० मीलप्रमिते देशे वहति. शासनान्तलिखितसमयश्चेदिराजधान्या वर्तते इति हेतोः २४९ योगेन ईश संवत् १०४२ भवति—इति Professor F. Kielhorn, Ph. D., C. I. E. महाशयाः.

यद्वेधा स्थितमव्ययं परमपि जो(ज्यो)तिश्चिदंशुप्रभं
सूर्याख्यस्य च भास्वरप्रभृतयो यस्य स्फुरन्त्यूर्मयः।
सर्वज्ञान[म]यो बभूव भगवांस्तस्मान्मनुर्मानसो
यस्मात्सृष्टिरभूदियं गुणवती स्त्रीपुंनिमित्ता ततः॥
देवः **श्रीकार्तवीर्यः** क्षितिपतिरभवद्भूषणं भूतधात्र्या
हेलोत्क्षिप्ताद्रिबिम्ब्यत्तुहिनगिरिसुताश्लेषसंतोषितेशम्।
दोर्दण्डाकाण्डसेतुप्रतिगमितमहापूररेवाप्रवाह-
व्याधौतत्र्यक्षपूजागुरुजनितरुषं **रावणं** यो बबन्ध॥
यस्य भ्रूभङ्गभीता दद(ध)ति नृपतयः क्लिष्टमावे(रे) प्रतिप(ष्ठां)
आ कैलासात्सहेलं हरवृषभसमुत्खातशृङ्गाग्रभित्तेः।
आ च प्राचः समुद्रात्सुरसरिदतुलस्थूलमुक्तावलीका-
दाम्भोधेर्दक्षिणाच्च स्फुरदतुलमणेः सेतुसीमन्तभाजः॥
तद्वंशप्रभवा नरेन्द्रपतयः ख्याताः क्षितौ **हैहया**-
स्तेषामन्वयभूषणं रिपुमनोविन्यस्ततापानलः।
धर्मध्यानधनानुसंधितसुखः शश्वत्सतां सौक्ष(ख्य)कृ-
त्प्रेयान्सर्वगुणाङ्कितप्रभुतया श्रीमानभूत्**कोकलः**॥
सम्यक्शास्त्रविचारणा प्रतिदिनं धर्माय योगाय च
इष्टापूर्तपरोपकारकृतये यस्यार्थसक्ता मतिः।
आनृण्याधिगमाय दाननिरतिः सद्वंशपुष्टेस्तथा
ज्ञानाभ्यासवशान्मुमुक्षुपदवीमन्ते च यः प्राप्तवान्॥
**भोजे वल्लभराजे श्रीहर्षे चित्रकूटभूपाले।**
**शंकरगणे** च राजनि यस्यासीदभयदः पाणिः॥
शचि(ची)मिवेन्द्रः कमलामुपेन्द्रो नगेन्द्रकन्यामिव चन्द्रमौलिः।
चन्देलवंशप्रभवां सुशीलां **नट्टाख्यदेवीं** स तु पर्यणैषीत्॥
उद्दामदर्पद्विषतो जयन्तं कंदर्पमापीनघनस्तनीनाम्।
अजीजनत्स स्थितये जनस्य तस्यां महाशक्तिधरं कुमारम्॥

नाम्ना प्रसिद्धो भुवनत्रयेऽपि प्रसिद्धपूर्वो धवलः स राजा।
वोढुं धुरं यो गुरुहारहा....योऽन्यान्नृपेन्द्रान्करदीचकार॥
एकैकं ददता भुजंगमनिशं स्वं जीवितं रक्षता
भक्ष्यार्थं गरुडाय नागपतिना न्यक्कार उन्मीलितः।
चारित्राय ददौ जलं सुरपतिर्गच्छन्नहल्यामृतौ
वन्द्यायां भुवनत्रयेऽप्ययमभूदौचित्यवृत्तेः पदम्॥

किं वापरेण—

होहिन्ति एत्थ वंसे पुरिसा एहइयगारवमहग्घा।
इअ हाविऊण जेणं पालीण परिग्गहो गहिओ॥
[भविष्यन्ति अत्र वंशे पुरुषा अत्यधिकगौरवमहार्घाः।
इति ज्ञात्वा येन दिशां परिग्रहो गृहीतः॥]

तत्सूनुः ख्यातकर्मा दिगिभकरनिभाजानुबाहुर्महात्मा
भूमेर्भर्ता बभूव क्षतरिपुनृपतिर्बालहर्षः सुजन्मा।
यं सद्वृत्तानुरागानुकृतकृतयुगाचारमाश्रित्य जात-
स्त्यक्तान्योन्योपमर्दस्थिरवसतिरपास्तारिवर्गस्त्रिवर्गः॥

धन्योऽत्र दाशरथिरेव रिपुर्दशास्यो
यस्याभवत्किमपरं समरोत्सवाय।
भ्रूभङ्गभग्नसकलद्विषतो धिगस्मा-
नात्मानमाहवरसादिति यो मुमोच॥

सत्यव्रतैकनिरतस्य युधिष्ठिरस्य
तस्यानुजः प्रथितबाहुबलो बभूव।
दुर्योधनारिबलवीरवधैकधन्वी
पार्थोऽपरः कलियुगे युवराजदेवः॥

भूभारक्षमदक्षश्रुतिप्रणयिनीमालम्बमानस्तनुं
कुर्वाणः समरेऽपि नाकपथगानागच्छतो विद्विषः।
विख्यातां भुवि भूरिमार्गगमनामुच्चैर्दधद्वाहिनीं
यः साक्षात्परमेश्वरः समभवत्सम्यक्शिवाराधनात्॥

तस्मादभूल्लक्ष्मणराजदेवः पुण्यैर्जनानां जनितव्यवस्थः ।
अवाप्य यं धर्ममिव क्षितीशं चिराय लेभे जनता सुखानि ॥
यः सत्यस्य निधिः श्रियां च सरणिः साम्ना च धाम्ना च यो
यो दाता च दयालुरेव च पदं कीर्तेश्च नीतेश्च यः ।
तस्यासीत्परमेष दूषणकणः कारुण्यपुण्यात्मनः
पात्रापात्रविवेचनं न यदभूत्सर्वस्वदानेष्वपि ॥
श्रीशंकरगणदेवस्ततोऽभवत्सकलभुवनतलतिलकः ।
शासति वसुधां यस्मिन्पलायितं क्वापि कलिनापि ॥
असौ निस्त्रिंशता यत्र वक्रत्वं पलितागमे ।
रथचक्रेषु चारित्त्वं वायौ स्वच्छन्दचारिता ॥
तस्यानुजोऽभूद्युवराजदेवः पतिः क्षितेः क्षत्रकुलप्रसूतिः ।
यस्यासिधाराजलधौतमूर्तेश्चिरं स्थिरासीच्चपलापि लक्ष्मीः ॥
अर्थिसार्थावधिस्त्यागः सेसं(शौर्यं) शूरजयावधिः ।
यशसां धर्मराशेश्च नावधिर्यस्य भूपतेः ॥
श्रीमांस्ततोऽजायत जातकीर्तेः काकल्लदेवो वसुधैकनाथः ।
यन्मण्डलाग्रो रिपुमण्डलानि पुरो दधातीति यथार्थशब्दः ॥
नम्रं कार्मुकवत्कृतं नियमितं तूणीरवत्पृष्ठतः
काष्ठासु क्षणमात्रदृष्टविहितभ्रान्तं च दोर्दण्डवत् ।
कृत्वा साधु परिच्छेदेन रहितं सम्यक्करे स्थापितं
शत्रूणामखिलं कुलं नरपतिश्रेष्ठेन येनासिवत् ॥
काकल्ल[ख्य]नृपादपास्तसकलक्षोणीविप·········
क्षीरक्षालितहारगौरगुणभूर्गाङ्गेयदेवोऽभवत् ।
यस्याजायत केवलं रणमुखे कौक्षेयकोऽग्रेसर-
स्तत्रैव प्रतिबिम्बितं पुनरभूदालाव········ ॥
अगुनेज्लोजलोलेति(?) क्षा(ख्या)तं यदिह दुर्यशः ।
लक्ष्म्या तदधुना धौतं दिव्यमादाय तद्वपुः ॥

ख्यातः सत्यतया स धर्मतनयस्त्यागेन वैरोचनिः
शौर्येणेन्द्रसुतो न चैतदभवत्स[त्यं] गता(मतं) [चे]तसि।
एकस्मिंस्त्रितयं कलौ समधिकं गाङ्गेयदेवे नृपे
दृष्ट्वा निश्चितमेव तैरवितथं पूर्वे यथोक्ता नृपाः॥
तस्यात्मजः कर्ण इवावतीर्णः कर्णः पृथिव्यां प्रथितप्रभावः।
यस्याभिषेकश्रवणाद्विषद्भिर्नेष्टं प्रहृष्टं द्विजमित्रवर्गैः॥
यत्कीर्तिलतया दूरं प्रसरन्त्या दिने दिने।
ब्रह्माण्डमण्डपाभोगः स्वल्पतामुपनीयते॥
स्वयं समुत्सृजन्नर्थानर्थिसार्थेष्वचिन्तितान्।
कोऽप्येष भूषणं भूमेर्जङ्गमः कल्पपादपः॥
शक्तित्रयैकनिलयस्य गुणाकरस्य
धर्मात्मनः स्तुतिपदं किमिहास्ति किंचित्।
आशास्यते परमिदं कृतिभिः सदैव
राजन्वती वसुमती भवतैव भूयात्॥

तदेवं गुणगणालंकृतशरीरः ····गसमावासितश्रीमद्विजयकटकात्परमभट्टारकमहाराजाधिराजपरमेश्वरश्रीवामदेवपादानुध्यात(तृ)परमभट्टारकमहाराजाधिराजपरमेश्वरपरममाहेश्वरत्रिकलिङ्गाधिपतिश्रीमत्कर्णदेवः कुशली महादेवीं महाराजपुत्रं महामन्त्रिणो महामात्या महासंधिविग्रहिका महाधर्माधिकरणिका महाक्षपटलिका महाकरणिका महाप्रतीहारो महासामन्तो महाप्रमातारो महाश्वसाधनिको महाभाण्डागारिको महाध्यक्ष एतानन्यांश्च कीर्तिताकीर्तितांश्च यथार्हं मानयति बोधयति समाज्ञापयति—विदितमस्तु भवताम्— यथा [हपाथा]कासि[भूम्य]न्त[र्ग]त[सु]सिग्रामः साम्रमधूकः सगर्तस्थलजलोषरः सर्वाकरखनिप्रभृतिसमुत्पत्तिसमेतश्चतुराघाटसीमापर्यन्तः वेसालग्रामविनिर्गताय कोसि(कौशि)कगोत्राय ओदलदेवरातविश्वामित्रत्रिप्रवराय वाजसनेयशाखाय महप्रनप्त्रे वा[म]ननप्त्रे नारायणपुत्राय पण्डितश्रीविश्वरूपाय इहैव पितुः श्रीमद्गाङ्गेयदेवस्य संवत्सरे(र)श्राद्धे फाल्गुनबहु-

लपक्षद्वितीयायां शनैश्चरवासरे वेण्यां स्नात्वा भगवन्तं देवदेवं त्रिलोचन-मशनसंभारप्रकल्पितपञ्चोपचारप्रपञ्चेन परया भक्त्या समभ्यर्च्यासमश्रद्धया श्राद्धं विधायोभयभोगेन(दकसर्गेण) शास[न]त्वेन संप्रदत्तः। अतः श्रीमत्कर्णदेवपादा[:] सुसीग्रामनिवासिनः समस्तजनपदान्समादिशन्ति—विदितमस्तु भवताम्—यथा ग्रामोऽयमस्माभिः शासनत्वेन प्रदत्त इति मत्वा भागभोगकरहिरण्यदण्डादायकरोत्पत्तिप्रभृतिसमस्तराजप्रत्यादाया अस्योपनेतव्या इति तदपचिकीर्षया मध्ये वातेनापि न गन्तव्यमिति अभ्यर्थना—

सर्वानेतान्भाविनो राजपुत्रान्भूयो भूयो याचते रामभद्रः।
सामान्योऽयं धर्मसेतुर्नृपाणां काले काले पालनीयो भवद्भिः॥

बहुभिर्वसुधा भुक्ता राजभिः सगरादिभिः।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम्॥

अस्मिन्वंशे द्वि[तीयोऽ]पि यश्चान्यो नृपतिर्भवेत्।
तस्यापि हस्तलग्नोऽहं शासनं न व्यतिक्रमेत्॥

यानीह दत्तानि पुरा नरेन्द्रैर्दानानि धर्मार्थयशस्कराणि।
निर्माल्यवान्तप्रतिमानि तानि को नाम साधुः पुनराददीत॥

अश्वमेधसहस्रेण राजसूयशतेन च।
गवां कोटिप्रदानेन भूमिहर्ता न शुध्यति॥

सुवर्णमेकं गामेकां भूमेरप्येकमङ्गुलम्।
हरन्नरकमाप्नोति यावदाहूतसंप्लवम्॥

संवत् ७९३ फाल्गुनवदि ९ सोमे॥

(एपिग्राफिआ इण्डिका—२।३०५-३१०)

## (१२३)

## श्रीगङ्गाधरकारितकासारप्रशस्तिः[1]।

ओं नमः सरस्वत्यै ॥

एकत्रोन्नतगात्रगौरवभरान्नासे तथा नम्रता-
मन्यत्र श्रियमुद्वहत्यतिलघुं तुङ्गे भुजङ्गेश्वरे ।
वक्षःसंमुखसंभृतस्तनतटीसङ्गोपसर्पत्सुखं
निद्रा·········द्·····द्धातु दयितामाश्लिष्य विश्वंभरः ॥

देवो जीयात्रिलोकीमणिरयमरुणो यन्निवासेन पुण्यः
शाकद्वीपः स दुग्धाम्बुनिधिवलयितो यत्र विप्रे मगाख्या ।
वंशस्तत्र द्विजानां भ्रमिलिखिततनोर्भास्वतः स्वाङ्ग·········
शाम्बो यानानिनाय स्वयमिह महितास्ते जगत्यां जयन्ति ॥

तेषां यः प्रथमः समस्तनिगमज्ञानात्मविद्यापदं
बुद्ध्या व्यापृत एव नित्ययजनव्यापारपारीणया ।
भारद्वाजमुनिर्बभूव भुवनोद्धाराभिपाती तपः
·········यस्य मुखे मगद्विजमहावंशावतंसोपमः ॥

गोत्रं च तस्य शतशाखमभूदभूत-
पूर्वैस्तपोभिरथ सुप्रसरैर्यशोभिः ।
यत्रापरे परमतत्त्वविदोऽनवद्य-
विद्यावदातमतयः पतयो द्विजानाम् ॥

कालेना·········विलुप्तविलसद्विद्याधने धन्विनां
वीराणां धुरि चक्रपाणिरभवद्दामोदरस्यात्मजः ।
यो वाल्मीकिरिवावतारितगिराधारः स विश्वस्थि[ते]-
र्वंशस्या·········चतुर्मुख इव व्यासो गुणिग्रामणीः ॥

---

१. इयं च प्रशस्तिर्गयापरिगणान्तर्गतगोविन्दपुरे नरसिंहमालिनो गृहत आनीय Sir A. Cunningham महाशयेन प्रेषिता Dr. Fleet महाशयेन मम पार्श्वे प्रेषिता इति Professor F. Kielhorn, Ph. D., C. I. E., महाशया वदन्ति

अतिस्थिरा पृथु[तरा य]त्कीर्तिगरिमास्पदम् ।
दिक्चक्रं यदि नारूढा तत्क्रमत्यन्यथा कथम् ॥
जातौ वासवकेशवाविव सुतौ तस्मात्प्रसन्नामरौ
मारीचादिव कश्यपादुपचितां धर्तुं कुले सत्क्रियाम् ।
ज्यायांस्तत्र मनोरथो दशरथस्तस्यानुजन्मा [ययो]-
र्विद्याचारशुचित्वशीलविलसत्कीर्त्या पवित्रं जगत् ॥
मुख्यत्वेन सतां यशोभिरखिलोद्गीतैः स्वकर्णश्रुतैः
सन्मिश्रोपगमेन तैरतिभृतैर्भोगैरयत्नोपगैः ।
भ्रात्रोरत्र ययोर्नरेन्द्रनिहितैः सप्रेमभिः प्रश्रयैः
श्यामानि द्विषदाननानि विदधे शुभ्रोऽप्यदभ्रो गुणः ॥
तौ भ्रातरावतितरां सहजोदितेन
प्रेम्णा परस्परमनोहरणाभिरामौ ।
सौहार्दहृद्यचरितेषु ययोरधीरः
कालोऽपि न स्खलितमाप कलिः कदाचित् ॥
आनीतौ निजराज्यमुज्ज्वलयितुं यत्नात्प्रतीतात्मना
संवासाय नरेश्वरेण शिबिरं श्रीवर्णमानेन तौ ।
तस्याज्ञामवलम्ब्य तत्कुलमिदं ताभ्यामपि प्रापितं
कांचित्कोटिमनुत्तरां गुणभुवः कीर्तेर्विभूतेरपि ॥
आ सिन्धोर्गणनीयगौरवगुणेनैकेन सेव्येऽनयो-
स्तस्मिन्मानपतेर्महीयसि गृहे प्रापि प्रतीहारता ।
अन्येनापि पुनर्मह····कधुरा व्यस्तेति विस्तारिणा-
वेतौ सत्त्वनयैर्बभूवतुरिह प्रज्ञैकविज्ञानिकौ ॥
गत्वा श्रीपुरुषोत्तमं····ययोहृत्तः प्रतिष्ठास्पदं
पारावारतटे पटीयसि लसच्चन्द्रग्रहानेहसि ।
सर्वस्वं वितितार तर्पितपितृस्तोमः करोल्लासितै-
स्तोयैर्यः पिहितस्य पर्वणि विधोः साहाय्यमाप क्षणम् ॥

सातत्यान्नित्यकृत्याहुतिभिरपचितो चन्द्रमौलेस्त्रिकालं
न्यस्ताभिर्यस्य शैवागममहितमहामन्त्रपूतान्तरस्य ।
एनः स्वेनोज्जगार त्रिजगति विदितादाश्रया[श]त्वदोषा-
दिद्धं धूमच्छलेनोज्ज्वलरुचिरचिरान्निहुतं होमवह्निः ॥
श्वेतार्धे तं श्रयति [पितृभी]त्यात्मनो [निष्प्रभार्धे]
धत्तेऽनन्तप्रमि[तिरमि]तां शक्तिमुन्मुक्ततर्कम् ।
यस्यैश्वर्यं प्रथयति विभोः कर्तुरित्यद्भुतश्री-
र्भ्रान्ति लोकस्थितिषु भजते भूयसीं धर्मकीर्तिः ॥
यस्य श्रीमगधेश्वरो नयवशान्नीतिप्रयोगाखिल-
प्राग्भारानुभवैरचुम्बितमतिर्व्यासाभिधानं व्यधात् ।
राजास्थानसरःसरोरुहमिति स्वैरं पुरः क्ष्माभृतां
गीतो **नूतनकालिदास** इति यः कालेषु वैतालिकैः ॥
यः सन्मन्त्रिषु चातुरीपरिचयैर्वाचस्पतिः प्रस्तुत-
प्रज्ञासर्गविरिञ्चिरुच्चचरितैरौचित्यचिन्तामणिः ।
सद्भावप्रभवो गभीरिमगृहं रत्नत्रयीतात्त्विको
भाषासु प्रतिभाप्रभुः कविकलासंदर्भगर्भेश्वरः ॥
स्मेरापारपरोपकारपरमः प्रेमोपचारोत्तर-
व्याहारैर्जनतानुरागरचनाचातुर्यचर्यागुरुः ।
धौरेयः सुधियां सुधानिधिकलामौलेः सदाराधन-
ध्याने जन्म निजं निनाय सुजनः स्वान्तेन शान्तेन यः ॥
पत्नी तस्य मनोरथस्य कृतिनश्चारित्र्यमुद्रापदं
धौडीदेशनरेशशुद्धसचिवश्रीदेवशर्मात्मजा ।
मू[र्ता] स[त्य]मरुन्धतीव जगतां वन्द्या सतीनां धुरि ।
श्रीमच्छंकर [आ]वि[रं]कुर[यि]तुं सत्पुण्यबीजान्यभूत् ॥
नापत्यं चिरमापतुर्यदुचितं तेनैव तौ दम्पती
संपत्तावपि नूनमन्वभवतां संतापमन्तस्ततः ।

मामाराधयतं सुधेयमरतिर्भावी सुतस्तेन वां
गत्वेति स्वयमादिदेश गिरिशः स्वप्ने समीपं ययोः ॥
सुप्रीतयोर्भगवतो मम नामधेय-
माधेयमस्य पुनरित्यनुशासनेन ।
स्वाराधितस्मरहरस्वरमानुरूपो
रूपानुमेयसुनयस्तनयोऽजनिष्ट ॥
गङ्गाधराख्यः स ततो जितात्मा यः शैशवाद्विश्वजनीनवृत्तः ।
विवर्धमानः परलोकभीत्या सदात्मनीनं नयमाततान ॥
अभवदनुजो महीधर इति पुत्रौ श्रीमनोरथादुदितौ ।
आशीर्वराभिनन्दौ हरिहरपुरुषोत्तमौ दशरथात्तु ॥
सत्कल्पप्रवणाः श्रुतिप्रणयिनः शिक्षाभिरुद्भासिताः
सज्ज्योतिर्गतयो निरुक्तविशदाश्छन्दोविधौ साधवः ।
ख्याता व्याकरणक्रमेण विदुषामत्युच्चधीशीलना-
द्वेदाङ्गप्रतिमाः षडेव भुवने ते बिभ्रति भ्रातरः ॥
तदन्तरे माननरेन्द्रचन्द्रमाः स रुद्रमानोऽजनि येन भूभुजा ।
स्वमेदिनीमण्डलमादिकोलवद्बलादमित्राम्बुनिधेः समुद्धृतम् ॥
पाणि[र्दानचणः प्रभौघ]लह[री] वक्रं च यस्य स्वयं
मर्यादास्थितिमान्स एव जगतां जीवातवश्चेत्कृताः ।
तर्कि कल्पलताद्यहीन्द्रकमठौ सा चित्रभानुद्वयी
पद्मेन्द्र(न्दू) निधयोऽम्भसामिति विधेर्धिक्प्रक्रियागौरवम् ॥
सूक्ष्मं दिक्करिदन्तकोटिमटितुं क्रान्तौ गिरीणां लघु
व्याप्तुं व्योम पृथु स्थिताविह दिशि प्रोत्तं वशिभ्रान्तिषु ।

---

१. इदं विशेषणवाचकं प्रतीयते, तथापि वक्ष्यमाणश्लोके 'षडेव भ्रातरः' इत्युक्ति-संवादेनोभयोर्नामत्वेन व्याख्येयम्. Dr. F. Kielhorn, Ph. D., C. I. E., महाशयास्तु "All these six men, Manoratha and Das'aratha and their four sons" इति वदन्ति.

क्षीराब्धीन्दुसुधादिषु प्रभवति ब्रह्माण्डगर्भाद्बहि-
र्नियात्यस्ति यथेत्थ(च्छ)मीश्वरगुणैरित्यद्भुतं यद्यशः ॥

युद्धे बद्धोत्सवरिपुभटश्रेणि⋯⋯ः सदा यो
बन्धुः शुद्धो विपदि विसरत्कार्यनिर्यासिसीमा ।
श्रेयान्सभ्यः सदसि विशदे विश्वविश्वासपात्रं
धातुं मित्रं हृदयमितरत्तस्य गङ्गाधरोऽभूत् ॥

आचाराभरणः सुभाषितचणः सन्नीतिरत्नापणः
प्रागल्भीरमणः प्रशान्तकरणः कारुण्यपारायणः ।
यः सौजन्यनिधिः स्थितावनुपधिः सख्यस्य मुख्यो विधि-
र्धीरत्वेऽनवधिर्विधूतवितथव्याधिर्धियां शेवधिः ॥

गौडराजसुहृदो जयपाणेराधिकारिकपदोपपदस्य ।
आत्मजामुदवहत्सुभगायाः पेशलां स किल पासलदेवीम् ॥

आक्रान्तो न वृषः कदापि गतये यस्मिन्नहीनाङ्गना
रौद्री नाद्रियते स्थितिर्न गणितास्ता गोत्रभित्संकथाः ।
अन्योन्यास्यविलासवञ्चितदृशोरेकं वपुर्बिभ्रतो-
स्तत्प्रायः शिवयोरपीदमनयोर्दाम्पत्यमत्यादृतम् ॥

संतोषार्जवधैर्यसंयमदमानुक्रोशशान्तिक्षमा-
मैत्रीसत्यसमाधिमग्नमनसो नारायणैकात्मनः ।
दम्भद्रोहविमोहलोभममतामात्सर्यमायामद-
द्वेषेर्ष्यादिनिसूदनस्य चरिते यस्यात्र साक्षी जनः ॥

तेनात्र दुःशकमसीम सहस्रकृत्वः
कृत्यं स्वभर्तुरुचितोन्नतये समाप्य ।
आबाल्ययौवनमसुप्रतिरोधि बन्धु-
लोकस्य चेतसि चमत्कृतिराचितैव ॥

यस्याद्वैतशते स्वयं विरचिते किंचित्कवित्वश्रमः
स ब्रह्मोपनिषत्कथास्वधिगमः शुद्धो विरुद्धोऽथवा ।

भाव्यः सूरिभिरेव चित्रकवितायासस्तुतो दुष्करे
भारत्याः कुरुतेऽपरान्निजगुणप्रस्तावनां केन सः ॥
धा""वर्तवशाद्विस्त्वरतरुप्रासादसद्मादिक-
व्यक्ताकारकदम्बमम्बरमनु स्वेनोद्भवत्यभ्रियम् ।
स्थित्वा तत्क्षणतो विपन्नमपुनर्भावाघथेदं तथा
मत्वैव त्रिजगन्ति येन जनितः सत्कर्मधर्मादरः ॥
पुण्योत्पत्तिनिमित्तमत्र निजयोः पित्रोः पवित्रात्मना
कीर्त्या तेन तयोश्चिरं रचयता शुभ्रातपत्रं जगत् ।
कासारोऽयमकारि पारदरसच्छायामृतामम्भसां
यस्मिन्नूर्मिमिषाद्यशस्तदमलं मूर्तं नरीनृत्यते ॥
स्वकीर्त्या सरसस्तस्य प्रतिष्ठासमयोत्सवे ।
शुभ्राम्बरपरीधानं जगत्तेनात्र कारितम् ॥
आकाशः पवनः कृशानुरुदकं धात्रीति लोकत्रयो
मूर्त्या ब्रह्म विवर्तमानमयते यावद्विचित्रां गतिम् ।
नेत्रश्रोत्रमनःप्रसादसदने तावत्सतामादरा-
दुन्निद्रां मुदमान्तरेषु कुरुतां कीर्तिप्रशस्ती इमे ॥
क्व शक्तिर्व्युत्पत्तिव्यतिकरविरोधेन सुलभाः
कवीनां पन्थानस्तदिह ननु केषामनुगमः ।
स्वपूर्ते त्वेतस्मिन्सुजनजनितोऽनुग्रहगुणः
प्रशस्तौ प्राशस्त्यं वितरति स गङ्गाधरगिराम् ॥
नन्देषुव्योमेन्दु(१०५९)समे शकाब्दे रुद्रात्मजश्चोद्धरणस्य नप्ता ।
इमां शिलाशिल्पिवरः प्रशस्तिं स शूलपाणिः स्वयमुच्चखान ॥

शाक १०५९ ॥

(एपिग्राफिआ इण्डिका—२।३३३-३३८)

# कीर्तिकौमुदी ।

श्रिये सन्तु सतामेते चिरं चातुर्भुजा भुजाः ।
यामिका इव धर्मस्य चत्वारः स्फुरदायुधाः ॥ १ ॥
कुर्वन्गिरिभुवि क्रीडां वृष्टोन्नतपयोधरः ।
उल्लसच्चन्द्रकः प्रीतिं नीलकण्ठः करोतु वः ॥ २ ॥
जटासीमन्तकान्तं वः श्रियेस्तु शिवयोर्वपुः ।
तातेत्यम्बेति वा हूतं गुहेन प्रतिवक्ति यत् ॥ ३ ॥
भूयान्मुदे तदेकं वः शिवकेशवयोर्वपुः ।
करोति प्रणतिं यस्य भीतः प्रीतश्च मन्मथः ॥ ४ ॥
सारस्वतमयं वन्दे तमोपहमहं महः ।
अपि सूक्ष्मपदार्थानां साक्षात्कारं करोति यत् ॥ ५ ॥
सरस्वतीं सदा वन्दे यदुपास्तिसमुच्छ्रिताः ।
काव्यानि कुसुमानीव सुवते कविपादपाः ॥ ६ ॥
धन्यास्ते कवयो येषां सूक्तिसौरभवासिता ।
कृतत्रिजगदाह्लादं कीर्तिर्भ्रमति भूभुजाम् ॥ ७ ॥
जयन्ति कवयः केपि सूक्तैर्मन्त्रैरिव द्रुतम् ।
तांस्तांश्चिद्रूपनिक्तेषु रसानावेशयन्ति ये ॥ ८ ॥
मधुना लसदुत्कर्षां कविषट्पदपद्मिनीम् ।
रामायणकवेस्तस्य हृद्यां वन्दे सरस्वतीम् ॥ ९ ॥
स्तुमस्तमेव वाल्मीकिं यत्प्रसादात्प्रशस्यते ।
लोकैर्दाशरथं वृत्तमपि श्रवणदुःखकृत् ॥ १० ॥

स नमस्यः कथं न स्यात्सतां सत्यवतीसुतः ।
सुपर्वौपचितं चक्रे यः स्वर्गमिव भारतम् ॥ ११ ॥
कालिदासः कविर्जातः श्रीरामचरितस्य यत् ।
स एष शर्करायोगः पयसः समपद्यत ॥ १२ ॥ प्र
विरक्तश्चेदुरुक्तिभ्यो निर्वृतिं वाथ वाञ्छसि ।
वयस्य कथ्यते तथ्यं माघसेवां कुरुष्व तत् ॥ १३ ॥
जनितार्जुनतेजस्कं तमीश्वरमुपाश्रिता ।
राकेव भारवेर्भाति कृतिः कुवलयप्रिया ॥ १४ ॥
युक्तं कादम्बरीं श्रुत्वा कवयो मौनमाश्रिताः ।
बाणध्वनावनध्यायो भवतीति स्मृतिर्यतः ॥ १५ ॥
वचनं धनपालस्य चन्दनं मलयस्य च ।
सरसं हृदि विन्यस्य कोऽभून्नाम न निर्वृतः ॥ १६ ॥
बिल्हणस्य कवेः प्रामप्रसादेव सरस्वती ।
नीयते जातु कालुष्यं दुर्जनैर्न घनैरपि[1] ॥ १७ ॥
सदा हृदि वहेम श्रीहेमसूरेः सरस्वतीम् ।
सुवृत्त्या शब्दरत्नानि ताम्रपर्णी जिता यया ॥ १८ ॥
स्तुमः सुमनसां श्रेष्ठं नीलकण्ठमहर्निशम् ।
दर्पकोपचितं यस्य सर्वज्ञस्य न मानसम् ॥ १९ ॥
श्रीप्रह्लादनदेवोऽभूद्गितयेन प्रसिद्धिमान् ।
पुत्रत्वेन सरस्वत्याः पतित्वेन जयश्रियः ॥ २० ॥
श्रीभोजमुञ्जदुःखार्तां रम्यां वर्तयता कथाम् ।
प्रह्लादनेन साह्लादा पुनश्चक्रे सरस्वती ॥ २१ ॥

[1] C notes marginally the reading न वर्षासु घनैरपि.

कवीन्द्रश्च मुनीन्द्रश्च नरचन्द्रो जयत्ययम् ।
प्रशस्तिर्यस्य काव्येषु संक्रान्ता हृदयाद्विव[2] ॥ २२ ॥
मुनेर्विजयसिंहस्य[3] सुधामधुरया गिरा ।
भारतीमञ्जुमञ्जीरस्वरोपि परुषीकृतः ॥ २३ ॥
सुभटेन पदन्यासः स कोपि समितौ कृतः ।
येनाधुनापि धीराणां रोमाञ्चो नापचीयते ॥ २४ ॥
स्ववाक्पाकेन यो वाचां पाकं शास्त्यपरान्कवीन् ।
स्वयं हरिहरः सोभूत्कवीनां पाकशासनः ॥ २५ ॥
न माघः श्लाघ्यते कैश्चिन्नाभिनन्दोभिनन्द्यते ।
निष्कलः कालिदासोपि यशोवीरस्य संनिधौ ॥ २६ ॥
प्रकाश्यते सदा साक्षाद्यशोवीरेण मन्त्रिणा ।
मुखे दन्तद्युता ब्राह्मी करे श्रीः स्वर्णमुद्रया ॥ २७ ॥
अर्जितास्ते गुणास्तेन चाहमानेन्द्रमन्त्रिणा[4] ।
विधेरन्धेश्च नन्दिन्यो यैरनेन नियन्त्रिते ॥ २८ ॥
वस्तुपालयशोवीरौ सत्यं वाग्देवतासुतौ ।
एको दानस्वभावोभूदुभयोरन्यथा कथम् ॥ २९ ॥
हृदापदः परित्यक्ता निर्व्याला मलयद्रुमाः ।
अमालिन्यकृतो दीपाः श्रीपात्रं सन्तु साधवः ॥ ३० ॥
साधूनां लुब्धता काचिदचिन्त्यैव तथा हि ये ।
परेषामेव गृह्णन्ति गुणान्भूरिगुणा अपि ॥ ३१ ॥
रमयन्ति न कं नाम सन्तश्छायाद्रुमा इव ।
पुष्यन्ति स्मितपुष्पं ये सूचितोच्चैःफलोदयम् ॥ ३२ ॥

---

[2] हृदयामिव A, B, C. [3] विजयसेनस्य C.
[4] वाहमाने° A, चापमाने° B, C. C marginally notes वाहमानेन्द्रभर्तृणा.

अमृतैर्मानसं मन्ये संपूर्णं सततं सताम् ।
स्यन्देनेव[5] तदीयेन वाचो मुञ्चन्ति नार्द्रताम् ॥ ३३ ॥
अश्रुप्रवर्तकैर्धूमैरिव किं तैरसाधुभिः ।
रसवत्यां कवेरुक्तौ मालिन्यं जनयन्ति ये ॥ ३४ ॥
वृश्चिकानां भुजंगानां दुर्जनानां च वेधसा ।
विभज्य नियतं न्यस्तं विषं पुच्छे मुखे हृदि ॥ ३५ ॥
अस्मिन्कलौ खलोत्सृष्टदुष्टवाग्बाणदारुणे ।
कथं जीवेज्जगत्तत्र स्युः संनाहाः सज्जना यदि ॥ ३६ ॥
निदानं नात्र पश्यामि यदुपेत्यापि दुर्जनाः ।
आक्रोशन्ति भृशं साधूनध्वगानिव कुक्कुराः ॥ ३७ ॥
दोषज्ञैस्तेन राज्ञेव सहसाघनरासभा ।
त्याज्यावकरभूमीव सहसा घनरासभा[6] ॥ ३८ ॥
दुर्जनैस्तर्ज्यमानस्य साधोरधिकमेधते ।
भस्मभिर्मृज्यमानस्य मुकुरस्येव चारुता ॥ ३९ ॥
आस्तां तावत्कृतक्रोधः सममोदोपि[7] दुर्जनः ।
कष्टाय जायते दृष्टो रतवानिव वायसः ॥ ४० ॥
दुर्जनानां द्विजिह्वत्वख्यातिरेषा मृषैव यत्[8] ।
विश्वोपतापिनां तेषामुचिता सप्तजिह्वता ॥ ४१ ॥
अस्मिन्नसमयारण्ये खलवेतालसंकुले ।
चरतः सज्जनालापाः[9] शिखाबन्धीभवन्तु मे ॥ ४२ ॥
सोऽस्ति कश्चन यो दृष्टोप्यशुद्धानां विशुद्धये ।
तेपि तिष्ठन्ति ये दृष्टाः शुद्धानामप्यशुद्धये ॥ ४३ ॥

---

[5] स्यन्देनैव A, B. [6] °सभाः A, B, C. [7] संममोदो° A, B.
[8] यद् A. [9] °लापा A, B.

कुलमुज्ज्वलमाकारं चारुमाचारमुत्तमम् ।
दानं संमानसंपन्नमुन्नतिं[10] नमिताहिताम् ॥ ४४ ॥
प्रशमाङ्गिरसाचक्षां दयां भग्नभयोदयाम् ।
श्लोकं भूषितभूर्लोकं मन्त्रितां न्याययन्त्रिताम् ॥ ४५ ॥
विलोक्य वस्तुपालस्य भक्तिं चात्मनि निर्भराम् ।
श्रीसोमेश्वरदेवेन तत्स्वरूपं निरूप्यते ॥ ४६ ॥ त्रिभिः कुलकम् ॥
मन्त्रीशगुणमाणिक्यश्रेणिलाभमहोत्सवे ।
श्रीसोमेश्वरदेवस्य गातुमुत्ताम्यतीव गीः ॥ ४७ ॥
अस्ति हस्तिमदक्लेदविराजद्गोपुरं पुरम् ।
अणहिल्लपुरं नाम धाम श्रेयः श्रियामिह ॥ ४८ ॥
कृतहारानुकारेण प्राकारेण चकास्ति यत् ।
सुकृतेन वृतीभूय[11] त्रायमाणं कलेरिव ॥ ४९ ॥
अनेकानोकहच्छन्ना प्रत्यासन्ना वनावलिः ।
यत्रोन्नतस्य वप्रस्य च्छायेव प्रतिभासते ॥ ५० ॥
चन्द्रशालासु बालानां खेलन्तीनां निशामुखे ।
यत्र वक्त्रश्रिया भाति शतचन्द्रं नभस्तलम् ॥ ५१ ॥
कुत्रापि श्रुतिनिर्घोषैः क्वचिन्मङ्गलगीतिभिः ।
बन्दिकोलाहलैः क्वापि यत्सदा मुखरं पुरम् ॥ ५२ ॥
धौतेव सुधया यत्र तुषारेणेव भूषिता ।
रचिता रजतेनैव राजते सौधपद्धतिः ॥ ५३ ॥
दत्तचित्तप्रसादेषु प्रासादेषु सदा वसन् ।
यत्र शम्भुर्न कैलासविलासमभिलष्यति ॥ ५४ ॥

---

[10] सन्मान C.  [11] व्रतीभूय C.

यस्मिन्होमानलोद्भूतधूमधोरणिरुद्यता ।
विभाति भानुकन्येव स्वर्गङ्गासंगमोन्मुखी ॥ ५५ ॥
यत्र सौधांशुविध्वस्तसमस्ततिमिरे पुरे ।
न स्वैरिणीसपक्षस्य पक्षस्य भवति क्षणः ॥ ५६ ॥
लङ्का शङ्कावती चम्पा सकम्पा विदिशा कृशा ।
काशिर्नाशितसंपत्तिर्मिथिला शिथिलादरा ॥ ५७ ॥
त्रिपुरी विपरीतश्रीर्मथुरा मन्थराकृतिः ।
धाराप्यभून्निराधारा यत्र जैत्रगुणे सति ॥ ५८॥ युग्मम् ॥
पुरान्तराणि निर्जित्य जेतुं पौरन्दरं पुरम् ।
पत्त्रालम्बं करोतीव यत्प्रासादध्वजांशुकैः[12] ॥ ५९ ॥
यमुनेव मधूपघ्नं साकेतं सरयूरिव ।
गजाह्वयं न गङ्गेव सेवते यत्सरस्वती ॥ ६० ॥
भान्ति देवालया यस्मिन्हिमालयसमश्रियः ।
भूतलं व्याप्य भूतानां कीर्तिकूटा इवोन्नताः ॥ ६१ ॥
जातशैत्यश्चलच्चैत्यपताकापवनैः क्षणम् ।
अरुणस्तरुणेनापि यत्र पूष्णा न पीड्यते ॥ ६२ ॥
यत्र नारीमनश्चौरान्पौरान्सौराज्यराजिते ।
निगृह्णन्निषुभिः पौष्पैर्वैराज्यं कुरुते स्मरः ॥ ६३ ॥
कौरवेश्वरसैन्यस्य यत्पौरस्त्रीजनस्य च ।
वल्गद्गाङ्गेयकर्णस्य[13] न पश्याम्यहमन्तरम् ॥ ६४ ॥
यस्य राजपथे पांशुः सिक्तः कुम्भिमदाम्बुभिः ।
ऊर्ध्वमभ्युद्धतोप्येति[14] न रङ्गद्भिस्तुरंगमैः ॥ ६५ ॥

---

[12] प्रसाद° A, B. [13] वलगाङ्गेय° A, B.
[14] ऊर्ध्वमभ्युद्गतो° A; ऊर्ध्वमभ्युद्गतो—परंगन्द्रि° B.

गृहीतभूरिदण्डानां विडम्बितमहीभुजाम् ।
यत्रत्यानां नरेन्द्राणां प्रासादानां च नान्तरम् ॥ ६६ ॥

भाति यत्र कपोलान्तःसंक्रान्तेन्दुर्वधूजनः ।
राजमुद्राङ्कितः कोशः कन्दर्पनृपतेरिव ॥ ६७ ॥

यत्र यत्र प्रसर्पन्ति सलीलं यन्मृगीदृशः ।
दासीव दृष्टिरन्वेति तत्र तत्र विलासिनाम् ॥ ६८ ॥

वीक्षिता वलितग्रीवं तन्वीभिर्यत्र केपि यत् ।
मन्ये व्यावर्तिताङ्गेन तेनङ्गेनापि ताडिताः ॥ ६९ ॥

रूपेणाप्रतिमाः कान्ता यत्र धात्रा कृताः किल ।
तथापि प्रतिमास्तासां संजाता रत्नभित्तिषु ॥ ७० ॥

स्नात्वा सरसि सौरभ्यं लीलोद्यानादुपाहरन्[15] ।
तमीसमीरणः स्वैरं यत्र कामीव सेवते ॥ ७१ ॥

यस्मिन्सरो हरोपेन्द्रप्रासादैः परितश्चितम् ।
अमुक्तमौक्तिकं भूमेर्भाल्येकमिव कुण्डलम् ॥ ७२ ॥

आभाति यस्य गम्भीरं सरः स्मेरैः सरोरुहैः ।
खेलन्तीनां सुखं तोयदेवतानां मुखैरिव ॥ ७३ ॥

यस्यान्तर्गिरिशागारदीपिकाः प्रतिबिम्बिताः ।
शोभन्ते निशि पातालव्यालमौलिमणिश्रियः ॥ ७४ ॥

यस्योच्चैः सरसस्तीरे राजते रजतोज्ज्वलः ।
कीर्तिस्तम्भो नभोगङ्गाप्रवाहोवतरन्निव ॥ ७५ ॥

हरप्रासादसंदोहमनोहरमिदं[16] सरः ।
राजते नगरं तच्च राजहंसैरलंकृतम् ॥ ७६ ॥

---

[15] °दुपाहरत् A, C; °दुपाहरेत् B.   [16] हरप्रसाद° B, C.

सशङ्खचक्रप्रथितः प्रभूतावतारशाली कमलाभिरामः ।
स एष कासारशिरोवतंसः कंसप्रहर्तुः प्रतिमां बिभर्ति ॥ ७७ ॥
न मानसे मेद्यति मानसं मे पम्पा न संपादयति प्रमोदम् ।
अच्छोदमच्छोदकमप्यसारं सरोवरे राजति सिद्धभर्तुः ॥ ७८ ॥
प्रतितटघटितोर्मिघातजातप्रसृमरफेनकदम्बकच्छलेन[17] ।
हरिहरहसितद्युतिं स्वकीर्तिं दिशि दिशि कन्दलयत्ययं तडागः ॥७९॥
अलघुलहरिलिप्तव्योमभागे तडागे
तरलतुहिनपिण्डापाण्डुडिण्डीरदम्भात् ।
तरुणतरणितापव्यापदापन्नमुद्धे-
रिह विहरति ताराचक्रवालं विशालम् ॥ ८० ॥
एकत्र स्फुटदब्जराजिरजसा बभ्रूकृतः सुभ्रुवां
प्रभ्रश्यत्कुचकुम्भकुङ्कुमरसैरन्यत्र रक्तीकृतः ।
अन्यत्र स्मितनीलनीरजदलच्छायेन नीलीकृतः
श्रेयः सिन्धुरवर्गकम्बलधुरं धत्ते सरःशेखरः ॥ ८१ ॥

॥ इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये नगरवर्णनो नाम प्रथमः सर्गः ॥

---

[17] प्रसृमरफेन A, B.

## ॥ नरेन्द्रवंशवर्णनम् ॥

---

अथ चौलुक्यभूपालः पालयामास तत्पुरम् ।
जितराजसमाजः[1] श्रीमूलराज इति श्रुतः ॥ १ ॥
आवर्जिता जितारातेर्गुणैर्बाणरिपोरिव ।
गूर्जरेश्वरराज्यश्रीर्यस्य जज्ञे स्वयंवरा ॥ २ ॥
लाटेश्वरस्य सेनान्यमसामान्यपराक्रमः ।
दुर्वारं बारपं हत्वा हास्तिकं यः समग्रहीत् ॥ ३ ॥
सपत्त्राकृतशत्रूणां संपराये स्वपत्त्रिणाम् ।
महेच्छकच्छभूपालं[2] लक्षं लक्षीचकार यः ॥ ४ ॥
दानोपहतदारिद्र्यं[3] शौर्यनिर्जितदुर्जनम् ।
कीर्तिस्थगितकाकुत्स्थं[4] यो राज्यमकरोच्चिरम् ॥ ५ ॥
तस्मिन्नथ कथाशेषे निःशेषितनिजद्विषि ।
राजा चामुण्डराजोऽभून्महीमण्डलमण्डनम् ॥ ६ ॥
विरोधिवनिताश्रित्तापाध्यापनपण्डिताः[5] ।
यदीयाः कटकारम्भाः[6] कृतजम्भारिभीतयः ॥ ७ ॥
पाणिपङ्कजवर्तिन्या स्फुरत्कोशविलासया ।
यस्यासिभ्रमरश्रेण्या भिन्ना वंशाः क्षमाभृताम् ॥ ८ ॥
लोकत्रयोल्लसत्कीर्तिर्महीपतिमतल्लिका ।
राजा वल्लभराजाख्यस्ततस्तत्तनुभूरभूत् ॥ ९ ॥
संभूतकम्पसंपत्तेर्यदातङ्केन केनचित् ।
जगाल मालवेशस्य करवालः करादपि ॥ १० ॥

---

[1] समाज्ञ A, B. [2] °महेच्छः C. [3] शनोपहत° C.
[4] काकुत्स्थं B. [5] °मण्डिताः A. [6] कटकारम्भा A, B.

उपरुन्धन्विरुद्धानां पुरीं पुरुषपौरुषः ।
जगत्कम्पन इत्येष विशेषज्ञैरुदीरितः ॥ ११ ॥
बभूव भूपतिस्तस्यावरजो विरजस्तमाः ।
श्रीमान्दुर्लभराजाख्यः सुदुर्लभयशाः परैः ॥ १२ ॥
कालेन करवालेन भोगिनेवाभिरक्षितम् ।
निधानमिव यद्राज्यमनाहार्यं परैरभूत् ॥ १३ ॥
सर्वथानुपभोग्येषु यस्य सौभाग्यभासिनः ।
न करः परदारेषु द्विजसारेषु चापतत् ॥ १४ ॥
तस्य भ्रातृसुतः श्रीमान्भीमाख्यः पृथिवीपतिः ।
विष्टपत्रितयाभीष्टप्रवृत्तिप्रतिभूरभूत् ॥ १५ ॥
मण्डलाग्रेण यः शौर्यशालिना विस्मृतास्मितम् ।
चकार भोजमम्भोजमिव पीयूषदीधितिः ॥ १६ ॥
एकधारापतिर्यस्य द्विधारेणासिना जितः ।
किं चित्रं यदसौ जेतुं शतधारमपि क्षमः ॥ १७ ॥
असौ गुणीति मत्वेव भोजः कण्ठमुपेयुषा ।
धनुषा गुणिना यस्य नश्यन्नश्वात्र पातितः ॥ १८ ॥
सुपर्णकेतनाभ्यर्णं तत्र क्षत्रपतौ गते ।
धात्रीं धात्रीप्रपौत्रीं[7] च श्रीकर्णः सार्णवां दधे ॥ १९ ॥
गुरुणा विक्रमेणायं बभूव पितृसंनिभः ।
आकारेण तु रम्येण भूपोभूदात्मभूसदृक् ॥ २० ॥
विना कर्णेन तेन स्त्रीनेत्राणां न रतिः क्वचित् ।
इतीव जज्ञिरे तेषामनुकर्णं प्रवृत्तयः ॥ २१ ॥

[7] धात्रीं धात्रीव तत्पुत्रः श्री॰ A. C suggests धात्रीं पौत्रीव तत्पुत्रः.

तत्कर्णार्जुनयोर्वैरं पूर्वं कर्णः स्मरन्निव ।
अर्जुनं गमयामास यशो देशान्तराणि यः ॥ २२ ॥

अभिरामगुणग्रामो रामो दशरथादिव ।
सूनुः श्रीजयसिंहोऽस्माज्जायते स्म जगज्जयी ॥ २३ ॥

शिशुनापि शुनासीरवीरवृत्तिमतीयुषा ।
रुषा भुजिष्यतां नीताः पिशुना येन भूभुजः ॥ २४ ॥

अपारपौरुषोद्गारं खङ्गारं गुरुमत्सरः ।
सौराष्ट्रं पिष्टवानाजौ करिणं केसरीव यः ॥ २५ ॥

असंख्यहरिसैन्येन भक्षिमानेकभूभृता ।
बद्धः सिन्धुपतिर्येन वैदेहीदयितेन वा ॥ २६ ॥

अमर्षणं मनः कुर्वन्विपक्षोर्वीभृदुन्नतौ ।
अगस्त्य इव यस्तूर्णमर्णोराजमशोषयत् ॥ २७ ॥

गृहीता दुहिता तूर्णमर्णोराजस्य विष्णुना ।
दत्तानेन पुनस्तस्मै भेदोऽभूदुभयोरयम् ॥ २८ ॥

द्विषां शीर्षाणि लूनानि[a] दृष्ट्वा तत्पादयोः पुरः ।
चक्रे शाकंभरीशोऽपि शङ्कितः प्रणतं शिरः ॥ २९ ॥

मालवस्वामिनः प्रौढलक्ष्मीपरिवृढः स्वयम् ।
समित्यपरमारो यः परमारानमारयत् ॥ ३० ॥

क्षिप्त्वा धारापतिं राजशुकवत्काष्ठपञ्जरे ।
यः काष्ठापञ्जरे कीर्तिराजहंसीं न्यवीविशत् ॥ ३१ ॥

एकैव जगृहे धारा नगरी नरवर्मणः ।
दत्ता येनाश्रुधारास्तु तद्वधूनां सहस्रधा ॥ ३२ ॥

---

[a] लूनाति A, B.

धाराध्वंसप्रसङ्गेन यस्य सांनिध्यशङ्कितः[9] ।
प्राघूर्णकमिषाद्दण्डं महोबकपतिर्ददौ ॥ ३३[10] ॥ 2ाग D

सुधेव वसुधा लब्धुं वाञ्छिता येन विद्विषा ।
यस्योल्लसदसिर्बाहू राहुरके तमाहवे ॥ ३४ ॥

जनेन मेने यः स्वामी कुमार इव शक्तिमान् ।
ताम्रचूडध्वजः सोभूत्किंतु केकिध्वजः परः ॥ ३५ ॥

येन विश्वैकवीरेण न स राजा जितो न यः ।
काष्ठा कापि न सा यस्य यशोभिः शोभिता न या ॥ ३६ ॥

गणेशस्येव यस्याग्रपुष्करस्य नृपस्थितेः ।
आज्यसारः करस्थोभूद्गौडो मोदकवन्नृपः ॥ ३७ ॥

श्मशाने यातुधानेन्द्रं बद्ध्वा बर्बरकाभिधम् ।
सिद्धराजेति राजेन्दुर्यो जज्ञे राजराजिषु ॥ ३८ ॥

रजोभिः समरोद्भूतैर्यत्पुरा मलिनीकृतम् ।
तत्पश्चात्कीर्तिकल्लोलैर्येन क्षालितमम्बरम् ॥ ३९ ॥

महीमण्डलमार्तण्डे तत्र लोकान्तरं गते ।
श्रीमान्कुमारपालोथ राजा रञ्जितवान्प्रजाः ॥ ४० ॥

पृथुप्रभृतिभिः पूर्वैर्गच्छद्भिः पार्थिवैर्दिवम् ।
स्वकीयगुणरत्नानां यत्र न्यास इवार्पितः ॥ ४१ ॥

---

[9] यस्य सान्निध्यशङ्कितः A, B.

[10] [ महोबकपुराधीशाज्ञितान्मदनवर्मणः ।
कोटीः षण्णवतीर्हैमीं यस्तन्मानानिवाददे ] ॥

This verse does not occur in A. In B it stands on the margin. Its authority is doubtful. B reads मदनवर्मणः and हैमीं. C also gives it marginally; neither of the MSS. numbers it, the verse following it being marked 34 by both. 9th occurs in D also

न केवलं महीपालाः सायकैः समराङ्गणे ।
गुणैर्लोकम्पृणैर्येन निर्जिताः पूर्वजा अपि ॥ ४२ ॥
वीतरागरतेर्यस्य मृतवित्तानि मुञ्चतः ।
देवस्येव नृदेवस्य युक्ताभूदमृतार्थिता ॥ ४३ ॥
करवालजलैः स्नातां वीराणामेव योग्रहीत् ।
धौतां बाष्पाम्बुधाराभिर्निर्वीराणां न तु श्रियम् ॥ ४४ ॥
शूराणां संमुखान्येव पदानि समरे ददौ ।
यः पुनस्तत्कलत्रेषु मुखं चक्रे पराङ्मुखम् ॥ ४५ ॥
हृदिप्रविष्टयद्बाणक्लिष्टेनाघूर्णितं शिरः ।
जाङ्गलक्षोणिपालेन व्याचक्षाणैः परैरपि ॥ ४६ ॥
चूडारत्नप्रभाक्रान्तं नम्रं गर्वादकुर्वतः ।
कणशः कुङ्कुणेशस्य[11] यश्चकार शरैः शिरः ॥ ४७ ॥
राणाङ्कपालबल्लालमल्लिकार्जुनयोर्मृधे ।
गृहीतौ येन मूर्धानौ स्तनाविव जयश्रियः ॥ ४८ ॥
दक्षिणक्षितिपं जित्वा यो जग्राह द्विपद्वयम् ।
तद्यशोभिः करिष्यामो विश्वं नश्यद्द्विपद्वयम् ॥ ४९ ॥
विहारं कुर्वता वैरिवनिताकुचमण्डलम् ।
महीमण्डलमुद्दण्डविहारं येन निर्ममे ॥ ५० ॥
पादलग्नैर्महीपालैः पशुभिश्च तृणाननैः ।
यः प्रार्थित इवात्यर्थमहिंसाव्रतमग्रहीत् ॥ ५१ ॥
भूपालो जयपालोभूत्कल्पद्रुमसमस्ततः ।
चक्रे वसुंधरा येन काञ्चनैरनकिञ्चना ॥ ५२ ॥

---

[11] कुङ्कुमेशस्य A, B, C.

दण्डे मण्डपिका हैमी सह मत्तैर्मतंगजैः ।
दत्त्वा पादं गले येन जाङ्गलेशादगृह्यत ॥ ५३ ॥
जामदग्न्य इवोद्दामधामभर्त्सितभास्करः ।
क्षत्रासृक्क्षालितां धात्रीं श्रोत्रियत्राचकार[12] यः ॥ ५४ ॥
दानानि ददतो नित्यं नित्यं दण्डयतो नृपान् ।
नित्यमुद्वहतो नारीर्यस्यासीत्त्रिगणः समः ॥ ५५ ॥
धृतपार्थिवनेपथ्ये निष्क्रान्तेऽत्र शतक्रतौ ।
जयन्ताभिनयं चक्रे मूलराजस्तदङ्गजः ॥ ५६ ॥
चापलादिव बालेन रिङ्खता समराङ्गणे ।
तुरुष्काधिपतेर्येन विप्रकीर्णा वरूथिनी[13] ॥ ५७ ॥
यच्छिन्नम्लेच्छकङ्कालस्थलमुच्चैर्विलोकयन् ।
पितुः प्रालेयशैलस्य न स्मरत्यर्बुदाचलः ॥ ५८ ॥
द्रुतमुन्मूलिते तत्र धात्रा कल्पद्रुमाङ्कुरे ।
उज्जगामानुजन्मास्य श्रीभीम इति भूपतिः ॥ ५९ ॥
भीमसेनेन भीमोयं भूपतिर्न कदाचन ।
बकापकारिणा[14] तुल्यो राजहंसदमक्षमः ॥ ६० ॥
मन्त्रिभिर्माण्डलीकैश्च[15] बलवद्भिः शनैः शनैः ।
बालस्य भूमिपालस्य तस्य राज्यं व्यभज्यत ॥ ६१ ॥
अथ तत्रैव चौलुक्यवंशे शाखान्तरोद्गतः ।
अर्णोराजः स राजर्षिस्तत्सामर्पत[16] विप्लवम् ॥ ६२ ॥
धवलस्य सुतेनापि तेन कृष्णानुकारिणा ।
राष्ट्रं निष्कण्टकीकर्तुमारेभे सुभटेन तत् ॥ ६३ ॥

---

12 श्रोत्रियसांच° A. 13 विरूथिनी C. 14 बकापहारिणा A, B.
15 मंडलीकैश्च A, B. 16 तमर्पयत् A, B, C.

विस्फुरत्तीव्रहेतीनां दधानामिव सर्वतः ।
दुष्टानां व्यधितानिष्टं यत्कृपाणपयोधरः ॥ ६४ ॥
विचिन्वता रुचिं हैमीं द्विषद्वेगदायिना ।
व्याप्तं यस्य प्रतापेन यशसा च जगत्त्रयम् ॥ ६५ ॥
आ संभवादुदूढस्य निर्व्यूढस्य च संगरे ।
प्राणैरुद्यापनं चक्रे निजशौर्यव्रतस्य यः ॥ ६६ ॥
तत्पुत्रः प्रसरत्कीर्तिपताकाचुम्बिताम्बरः ।
श्रीलावण्यप्रसादोऽस्ति प्रासादः शौर्यसंपदः ॥ ६७ ॥
आकाशमिव चन्द्रेण वारीन्द्रेणेव[17] काननम् ।
रम्यं तथानतिक्रम्यं कुलं येन बभूव तत् ॥ ६८ ॥
जघ्ने येनासिदण्डेन गाढं नडुलनायकः ।
निर्घातेनैव तेनामी कम्पन्तेऽद्यापि भूभृतः ॥ ६९ ॥
न चौरास्तत्र सौराज्ये दौरात्म्यं कुर्वते क्वचित् ।
स्वयमेष पुनः कीर्तिं हरति प्रतिभूभुजाम् ॥ ७० ॥
तेजस्तदिह दान्तारिदशमस्तकलङ्कयोः ।
बभूव भुजयोर्यस्य रामलक्ष्मणयोरिव ॥ ७१ ॥
पुण्डरीकं दधत्येकं राजहंसाननेकशः ।
आकृष्टारियशःफेना प्रतस्थे तस्य वाहिनी ॥ ७२ ॥
समन्ततोऽपि सामन्तगोष्ठ्यैर्निष्ठुरोक्तिभिः ।
नासीन्नृपतिनागस्य यस्य लीलागतिक्षतिः ॥ ७३ ॥
पुरो मन्दरवद्वीक्ष्य यं निष्कम्पतया स्थितम् ।
विनिवृत्तमुपेत्यापि धाराधीशपयोधिना ॥ ७४ ॥

---

17 मृगेन्द्रेणेव C.

दक्षिणः क्षोणिपालोपि घनसैन्योल्पविक्रमः ।
येन तद्विपरीतेन परित्यजति विग्रहम् ॥ ७५ ॥
श्रीवीरधवलस्तस्य सूनुर्वीरशिरोमणिः ।
युद्धे जयश्रियं धन्वज्यारावैराजुहाव सः ॥ ७६ ॥
आत्मानमात्मजे तस्मिन्नशेषगुणभूषणम् ।
स पिता दर्पणप्राये संक्रान्तमिव पश्यति ॥ ७७ ॥
बाहुभ्यामिव विक्रान्तो दन्ताभ्यामिव कुञ्जरः ।
अधृष्यः पितृपुत्राभ्यां वंशस्ताभ्यां बभूव सः ॥ ७८ ॥
कृतविश्वमुदानेन दानेन प्रतिवासरम् ।
सुतेन जनता तेन तातेन च समृध्यते ॥ ७९ ॥
अप्यरातिशराघातजातव्रणनतोन्नते ।
वीरलक्ष्मीश्चिरं यस्य वासं[18] वक्षसि वाञ्छति ॥ ८० ॥
वीरः समरकासारे शिरोभिः सह वैरिणाम् ।
करीव पुण्डरीकाणि कन्दयुक्तानि योग्रहीत् ॥ ८१ ॥
अरातिराजन्यशराभिघातैः प्रघातभूमौ पतितोत्थितो यः ।
गभीरवीरेन्द्रबलाम्बुराशेर्लब्धेर्गाधं पुनरुन्ममज्ज ॥ ८२ ॥
अथैकदाकन्दलितप्रतापसंतापिताशेषविपक्षपक्षः ।
निशावसाने स निशान्तबुद्धिः प्राबुध्यत श्रीलवणप्रसादः ॥ ८३ ॥
प्रबुद्धमात्रोपि कुमारपुत्रमाकारयामास नृपावतंसः ।
पुरोधसे तत्किल रात्रिदृष्टं शिष्टाय तस्मै विनिवेदयिष्यन् ॥ ८४ ॥
समेत्य सोमेश्वरदेवनामा नमस्यते स्वस्ति निगद्य चास्मै ।
प्रसन्नमूर्तेः पुरतः स तस्य[19] दृष्टासरौ विष्टरमाससाद ॥ ८५ ॥

---

[18] वस्तुं C. [19] पुरतः सुतस्य ; A.

पुरस्कृतस्यास्य पुरः पुरारिप्रसादलब्धं लवणप्रसादः ।
वीरेण तेनानुगतः सुतेन तं स्वप्नमित्थं कथयांबभूव ॥ ८६ ॥
जानेथ विद्याधरसुन्दरीभिर्दरीगृहद्वारविहारिणीभिः ।
शृङ्गारितं शृङ्गमहं महाद्रेरारूढवानूढवृषध्वजस्य[20] ॥ ८७ ॥
कृतासनं तन्मणिवेदिकायां जायाङ्कितामर्धतनुं दधानम् ।
प्रसन्नवक्त्राब्जमहं सिताब्जैर्जगत्पतिं पूजयितुं प्रवृत्तः ॥ ८८ ॥
विसृज्य पूजामथ मन्मथारेः समाधिमुद्रां विदधामि यावत् ।
तावत्पुनः कामपि वामनेत्रां राकामिवाकारवतीमपश्यम् ॥ ८९ ॥
श्वेतांशुतुल्यं वदनं वहन्तीं श्वेतांशुकां श्वेतविलेपनां ताम् ।
श्वेतां कराग्रे दधतीं च मालामालोक्य बालामतिविस्मितोऽस्मि ॥ ९० ॥
कस्यासि कासि त्वमिहासि कस्मादिति ब्रुवे यावदुपागतां ताम् ।
तावत्तयैवाभिहितोऽस्मि कान्तदन्तद्युता दत्तसितातपत्रः ॥ ९१ ॥
हे वीर वैरिध्वजिनीगजेन्द्रगण्डस्थलीमण्डनखण्डनचण्ड ।
प्रत्यर्थिसार्थेन कदर्थ्यमानां जानीहि मां गूर्जरराजलक्ष्मीम् ॥ ९२ ॥
दिवं गतास्ते बत गूर्जरेन्द्रास्ते कुञ्जरेन्द्राश्च हताः सपत्नैः ।
येषां क्षमाभृद्दलनक्षमेषु भुजेषु दन्तेषु च मे निवासः ॥ ९३ ॥
यो वर्तते संप्रति चक्रवर्तिपदेत्र[21] बालः स बलान्यरीणाम् ।
क्षमः समग्राणि न निग्रहीतुं दीपस्तमांसीव तटस्थितानि ॥ ९४ ॥
ये मन्त्रिणो येत्र च मण्डलीकास्तेषु क्रमो नास्ति पराक्रमोस्ति ।
प्रतिक्रिया कास्तु[22] ततोस्ति येषां कामो मयि स्वामिपरिग्रहेपि ॥ ९५ ॥
आस्ते सहस्त्रः स पुमान्न कोपि यो मामिमामुद्धरते निमग्नाम् ।
ग्रहीतुमेते हि सतां विभूतिं शतं वितन्वन्ति नराः कराणाम्[23] ॥ ९६ ॥

[20] °मूढनृष° B.
[21] वर्ती A, B, C.
[22] कास्ति A, B.
[23] वितत्वंति नराकराणां A, B, C.

सौवस्तिको नास्ति स आमशर्मा वर्माथितं येन सुधर्मणा मे ।
गतः स मुञ्जालसुतश्च[24] मन्त्रैर्यः क्षत्त्रसर्पानकरोद्विदर्पान् ।। ९७ ।।

न राष्ट्रकूटान्वयकैटभारिः[25] प्रतापमल्लोस्ति मृधैकमल्लः ।
गन्धोपि मत्तारिमतङ्गजानां गन्धद्विपेनेव न येन सेहे ।। ९८ ।।

विना जगद्देवमिमामवस्थां[26] नीता निजैरेव परैरिवाहम् ।
यत्र स्थिते वेत्रिणि शङ्कितैर्न द्विष्टैः प्रविष्टं पुरि गूर्जराणाम् ।। ९९ ।।

अवाप्तवेदाम्बुधिरोधसा च पुरोधसा तेन कुमारनाम्ना ।
विनाद्य चैत्यक्षिति[27]पाललक्ष्मीं को मे करिष्यत्यपरः सपत्नीम् ।। १०० ।।

या मूलराजान्वयजातराजतेजोभिरासीद्विरजस्तमस्का ।
निशागमे सांप्रतमुद्वसायां[28] तस्यां न दीपोपि नरेन्द्रपुर्याम् ।। १०१ ।।

निरन्तरं संचरतां गजानां या डिण्डिमैरुद्भमरा[29] ध्वनद्भिः ।
एकाकिनी रात्रिषु गूर्जराणां साफूत्करोतीव शिवारुतैः पूः[30] ।। १०२ ।।

क्रीडावतीनां नगराङ्गनानां वक्त्रैः सदा यत्र सरोजसत्ता ।
सरस्तदश्रूणि किरत्यनाथं वातात्तपाथःकणकैतवेन ।। १०३ ।।

मुण्डेव खण्डितनिरन्तरवृक्षखण्डा
निष्कुण्डलेव दलितोज्ज्वलवृत्तवप्रा ।
दूरादपास्तविषया विधवेव दैन्य-
मभ्येति गूर्जरधराधिपराजधानी ।। १०४ ।।

तस्मात्स्वचक्रपरचक्रहतावशेषां
निःशेषिताखिलसपत्न समुद्धरस्व ।
यस्मादमानवचरित्रपवित्रितेन
संभावनात्र भवता भुवनेर्जितासौ ।। १०५ ।।

---

[24] मुञ्जालसुत° C. [25] °कुदा°. [26] जगद्देनि°. [27] चैत्य° C.
[28] उद्वसस्यां A. [29] संभ्रमरा. [30] पुः B.

एकेन केशिरिपुणा विधृतं यदुच्चै-
भीरेण भङ्गुरमिवासुरभूपतीनाम् ।
तद्वीर वीर^धवलेन सुतेन भूयः
संभूय भूवलयमुद्धर संप्रति त्वम् ॥ १०६ ॥
व्याहृत्य कृत्यमिति सा सहसा च कण्ठ-
पीठे निवेश्य विशदामिह पुष्पमालाम् ।
कुत्रापि तत्र^भवती सह निद्रया मे
याताथ यूयमिह जल्पत नः किमेतत् ॥ १०७ ॥
इत्थं वदन्नथ हरिप्रतिहस्तकोसौ
सौवस्तिकेन जगदे जगदेकवीरः ।
स्वर्गोयमर्थमकदर्थतया ददानो
व्याख्यानमिच्छति भवानिव नैव देव ॥ १०८ ॥
राजन्यधन्यतममन्यमहं न मन्ये
मस्तारिवीरभुजवैभवतो भवत्तः[51] ।
या न स्पृशत्युपनतानपरान्कदापि
यस्त्वामुपेन्द्रमिव सा वृणुते स्वयं श्रीः ॥ १०९ ॥
युष्मादृशामसदृशान्वयसंभवानां
न श्लाघ्यते जगति केन कुलार्गलासौ[52] ।
अग्रेसरी भवति दुश्चरितप्रवृत्तौ
या संगरव्यतिकरापसृतौ तु पश्चात् ॥ ११० ॥
उद्गच्छतस्तव रवेरिव संपराये
छायेव संमुखमुपैति न शत्रुसेना ।

[51] °भवन्तः A, B, C. [52] C has got the text changed to कुलागसासौ.

दीपाङ्कुरा इव दशान्तमुपेयिवांस-[35]
स्तेजो निजं मुकुलयन्ति च मण्डलीकाः ॥ १११ ॥

आनीतवानसि गुणैर्गुरुभिः स्वकीये-
र्बद्ध्वा नृपश्रियमिमां सुभटोपभोग्याम् ।
सन्मन्त्रिभिस्तदनुरञ्ज्य मञ्जुमूर्ते
व्यावर्तते न हि यथा त्वदवस्थितासौ ॥ ११२ ॥

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किं तु
संस्कारमत्र मणिकारगणः करोति ॥ ११३ ॥

पित्रा विचित्ररचितानुकृताच्युतेन
तेनाथ वीरधवलो बलवान्नियुक्तः ।
युक्तश्च भूभरसमुद्धरणे विधात्रा
चिन्तां चकार सचिवेषु शुचिक्रियेषु ॥ ११४ ॥

अथ दशरथकल्पस्त्यक्ततल्पः प्रभाते
स च नृपतिरपत्यं तच्च रामोपमेयम् ।
स च परिचरणीयो गूर्जराणां विशिष्ट-
प्रतिकृतिरुदतिष्ठत्कर्म साध्यं विधातुम् ॥ ११५ ॥

इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये नरेन्द्रवंशवर्णनो नाम द्वितीयः सर्गः ॥ २ ॥

---

[35] दिशान्त॰ A, B, C.

# मन्त्रिस्थापना ।

रसालंकरणे तस्मिन्नालवालानुकारिणि ।
प्रांशुः प्राग्वाटवंशोभूत्पुरे गूर्जरभूभुजाम् ॥ १ ॥
त्वचिसाराः परे वंशाः सदा पत्राणि बिभ्रति ।
क्रियासारश्च वंशोयं धत्ते पात्रपरंपराम् ॥ २ ॥
नररत्नैर्यदुत्पन्नैरुद्भूताद्भुतकान्तिभिः ।
विभूषिता विशेषेण जगतीव सरस्वती ॥ ३ ॥
मन्त्रिमण्डलमार्तण्डश्चण्डपः प्रथमः पुमान् ।
कुले तस्मिन्नुदेतिस्म तमसामवसानकृत् ॥ ४ ॥
चाणक्यादिव चातुर्यं गिरमाङ्गिरसादिव ।
अम्भोधेरिव गाम्भीर्यं यः शुभंकामहोमहीत् ॥ ५ ॥
न च्छिद्रं क्षुद्रमप्यत्र मन्त्रिरत्ने न्यवेशयत्[1] ।
धात्रा केन प्रकारेण सोनुस्यूतगुणः कृतः ॥ ६ ॥
मानी नामन्यत श्लाघ्यां यः श्रियं सरसीरुहाम्[2] ।
यैर्मनागपि न म्लानमिनपादावधीरितैः ॥ ७ ॥
तद्भूश्चण्डप्रसादोभूद्भूरिडिण्डीरपाण्डुभिः ।
यशोभिः ककुभां येन चक्रे श्रीखण्डमण्डनम् ॥ ८ ॥
कदाचिदपि न त्यक्तः पाणिपद्मगृहीतया ।
गेहिन्येव वदान्योयं नृपव्यापारमुद्रया ॥ ९ ॥
मृदुर्वाणी मतिस्तीक्ष्णा साधुः श्रीः कीर्तिरित्वरी ।
वीतरागं मनो यस्य स्फीतरागं करद्वयम् ॥ १० ॥

---

[1] निवेशितम् C. [2] सरसि° A, B. C had originally the same reading, but it is changed into मानिनामन्यत: श्लाघ्यां यः श्रियं सरसि रुहाम्.

यः पराभूतकर्पूरैः कीर्तिपूरैर्निरन्तरम् ।
चिरं विरचयामास राकामाकालिकीमिह ॥ ११ ॥
सोमः समुन्नतस्तस्मादुज्जगाम मनोरमः ।
सवित्री जातमात्रेण येन द्यौरिव दिद्युते ॥ १२ ॥
अपूर्वः कोपि सोमोयं कलङ्कविकलाकृतिः ।
न हि मारपुरस्कारं चक्रे भार्वं च नो भवे ॥ १३ ॥
निदधे गुणरत्नानां यत्र कोशः स्वयंभुवा ।
तत्र श्रीसिद्धराजोपि रत्नकोशं न्यवीविशत् ॥ १४ ॥
स्वं मेने येन सोमेन पूर्णेनाभ्यर्णवर्तिना ।
गृहीतानन्तभोगः श्रीसमिद्धेधि[a]कमीश्वरात् ॥ १५ ॥
सावित्रं बिभ्रता तेजः सीतां च सहचारिणीम् ।
काकुत्स्थेनेव येनापि नदीनातिक्रमः कृतः ॥ १६ ॥
अमेयमहिमा श्रीमानश्वराजस्ततोभवत् ।
येन दानार्द्रहस्तेन हस्तिराजोप्यजीयत ॥ १७ ॥
तस्मान्निरन्तरत्यागस्थगिताश्रितदुःस्थितेः ।
निजैरिवेन्द्रियैर्लब्धा कामना न मनागपि ॥ १८ ॥
आनीतं न्यायतो वित्तं व्यासितं धर्मकर्मसु ।
यशस्तु जगति स्तुत्यं केवलं यस्य तिष्ठति ॥ १९ ॥
प्राकृतां रेणुकाबाधां[b] स्मरन्ननुशयादिव ।
मातुर्विशेषतश्चक्रे भक्तिं यः पुरुषोत्तमः ॥ २० ॥
जनन्या जठरे मासानध्युवास दशैव यः
हृदयाम्भोरुहे तस्य यावज्जीवमियं पुनः ॥ २१ ॥

---

[a] श्रीसमिद्धः सोधि° A ; °समिद्धेधि° B, C.
[b] प्राकृता...बाधा A, B, C.

सततं सचिवश्रेणिमाणिक्यस्याङ्कसङ्गिनी ।
कान्ता कुमारदेवीति तस्य कान्तिरिवाभवत् ॥ २२ ॥
स्वाभाविकेन शौर्येण मान्याः सुमनसामपि ।
प्रवाहा[5] इव जाह्नव्यास्तया सूताः सुतास्त्रयः ॥ २३ ॥
मुख्यः श्रीमल्लदेवाख्यो वस्तुपालाह्वयस्ततः ।
तेजःपालाभिधः पश्चात्त्रयी भाति त्रयीव सा ॥ २४ ॥
पुरुषाणामिमास्तेषां परेषामिव मूर्तयः ।
त्रिधा विभिद्यमाना अप्येकैव परमार्थतः ॥ २५ ॥
स्वयं शुद्धेषु यत्तेषु गुरुणा शौचशिक्षणम् ।
घनसारपरागेण मार्जनं मौक्तिकेषु तत् ॥ २६ ॥
यल्लब्धं[6] मल्लदेवेन यशः शुभ्रं विभाव्य तत् ।
शिष्टैर्न विष्टपे दृष्टं कैरवं कैरवश्रिया ॥ २७ ॥
इयती मल्लदेवस्य कौस्तुभेन विभिन्नता ।
जिनो हृदि यदेतस्य जिनस्य स्वपरः सदा ॥ २८ ॥
वस्तुत्वं वस्तुपालस्य सैव वेत्ति सरस्वती ।
तदीयवदनाम्भोजे या वसत्यनुवासरम् ॥ २९ ॥
स्थितं पुरुषयोर्मध्ये पूर्वजानुजयोस्तयोः ।
मन्यते मध्यमं यः स्वमुत्तमं तं जनः पुनः ॥ ३० ॥
किमस्तु वस्तुपालस्य मन्त्रीन्दोः साम्यमिन्दुना ।
यद्दत्ते वसुधामेष सुधामेवापरः पुनः ॥ ३१ ॥
वृद्धिं न्यग्रोधशाखीव स प्राप्नोति यथा यथा ।
क्ष्मालंकरणः केषां नाश्रयः स्यात्तथा तथा ॥ ३२ ॥

---

[5] प्रवाह B, A, C.    [6] तल्ल° A, B, C.

षड्भिरेव गुणैर्येन कापि कीर्तिपटी कृता ।
वसुंधरा धराम्भोधिसहिता पिहिता यया ॥ ३३ ॥

मन्ये मनसि साधूनां यो वसत्यनुवासरम् ।
यदनुक्तोपि जानीते विधत्ते च तदीप्सितम् ॥ ३४ ॥

अहंकरोति नात्मानं स्वंकरोति न सद्गुरून् ।
यः पुनः प्रधनारम्भे हुंकरोति विरोधिनः ॥ ३५ ॥

दयिता ललितादेवी यस्य सर्वाङ्गहारिणी ।
अर्धाङ्गहारिणीं[7] पत्युः पार्वतीं हसतीव या ॥ ३६ ॥

तस्मादमात्यजीमूतात्पुक्षेत्रेऽस्मिन्सुताङ्कुरः ।
जयसिंहाह्वयः सोयं बालोपि फलितः सताम् ॥ ३७ ॥

पूर्वे सर्वेऽपि तार्यन्ते निस्तार्यन्ते तथार्थिनः ।
एतेन यस्य पोतेन प्रतार्यन्ते न तु प्रजाः ॥ ३८ ॥

तेजःपालः पुनस्तेषु सोदरेषु लघुः किल ।
निजप्रभुप्रसादेन गुरुणापि न लङ्घ्यते ॥ ३९ ॥

छन्दःशास्त्रे श्रुतास्माभिर्लघुतापि क्वचिद्गुरोः ।
तस्मिन्बन्धुजने दृष्टा गुरुतास्य लघोरपि ॥ ४० ॥

अश्वराजात्मजावेतो नामत्यावमृतौषधैः ।
संप्रति प्रतिकुर्वाते सर्वमप्यातुरं जगत् ॥ ४१ ॥

अमी सुमनसस्तेन स्पर्धन्तामुद्धताः कथम् ।
सोपि सद्बुद्धिना येन जितः सुमनसां गुरुः ॥ ४२ ॥

अपूर्वं तस्य वैदुष्यं यद्दिक्पालैः स्वभूभुजा ।
समानैर्दशभिः सार्धं मेने संध्यक्षराणि यत् ॥ ४३ ॥

---

[7] हारिणी ... पार्वती B, C.

शुभे स्वभावमालोके लोकेस्मिन्नेकमेव तम् ।
यदुक्तं[8] तत्करोत्येव यत्कृतं तन्न वक्ति यः ॥ ४४ ॥
उपकृत्ये कृती पुंसां चित्ते तेषां न केवलम् ।
अपि यः स्तुतिलज्ञायां[9] सचिवो दुर्गतस्पृहः ॥ ४५ ॥
उपकर्ता सतामन्यैरुपकारयिता च यः ।
हरते हि मरुत्तापं हारयत्यपि वारिदैः ॥ ४६ ॥
वात्ययेवोन्नतिं नीतः श्रिया तृणसमः पुमान् ।
क्षमां त्यजति न त्वेष शिखरीवोदयन्नपि ॥ ४७ ॥
अपूर्वं मन्त्रिमाणिक्यं चाण्क्यामिह[10] मन्महे ।
वसुधावलये येन सदानन्दोदयः कृतः ॥ ४८ ॥
यद्यप्यनुपमा नाम प्रेयसी तस्य मन्त्रिणः ।
मूर्त्या तथापि मन्येहमेनां मेनाङ्गजामिव ॥ ४९ ॥
लावण्यसिंहनामानं सा लावण्यवतंसिनम् ।
तनयं जनयामास विनयावर्जितप्रजम् ॥ ५० ॥
भूमिभर्तुरथ कर्तुमिच्छतस्तस्य सत्पुरुषसंग्रहं[11] श्रिये ।
एकदा हृदयमागताविमौ दीप्तशीतकिरणाविवाम्बरम् ॥ ५१ ॥
तद्गुणान्निपुणया मनीषिणामग्रणीर्धिषणया विमृश्य सः ।
आजुहाव च समागतौ च तौ कार्यसिद्धिरविलम्बिनी सताम् ॥५२॥
तत्र तौ ददृशतुः शतक्रतुप्रायमायतभुजं महीभुजम् ।
सानुजं च सचिवं स दृष्टवानर्थजुष्टमिव धर्ममग्रतः ॥ ५३ ॥
तावुपायनमुपायपण्डितौ[12] मण्डितौजसिकपङ्क्तेः पुरः ।
उद्गुणय्य चरणद्वयं मुदा तस्य वीरतरणेः प्रणेमतुः ॥ ५४ ॥

---

[8] तदुक्तं B, A, C. [9] स्तुतिलज्जायां B. [10] चाणिक्य B, A, C.
[11] सत्पुरुष° B, A. [12] °मुपायमण्डितौ B.

तेन तेनतनयानुकारिणा कर्तुमात्मकरणाधिकारिणौ ।
सप्रसादवदनेन सादरं सोदरौ समुपवेशिताविमौ ॥ ५५ ॥
तस्य निर्दलितभूरिभूभृतः स्वःपतिप्रतिकृतेः[13] कृतासनौ ।
अश्वराजतनुजौ रराजतुस्तौ सुरासुरगुरूपमौ पुरः ॥ ५६ ॥
एतयोर्विनयनम्रमस्तकन्यस्तसंपुटितपाणिपद्मयोः ।
निर्ममे समदशत्रुदन्तिनामङ्कुशः स कुशलानुयोजनम् ॥ ५७ ॥
नीलनीरदरवानुवादिना नादयन्नथ दिशः स्वरेण सः ।
तौ पुनश्चरितचातकव्रतौ वक्तुमारभत मारसंनिभः ॥ ५८ ॥
आकृतिर्गुणसमृद्धिशंसिनी नम्रता कुलविशुद्धिसूचिका ।
वाक्क्रमः कथितशास्त्रसंक्रमः संयमश्च युवयोर्वयोधिकः ॥ ५९ ॥
श्लाघ्यतां कुलमुपैति पैतृकं स्यान्मनोरथतरुः फलेग्रहिः ।
उन्नमन्ति यशसा सह श्रियः स्वामिनां च पुरुषैर्भवादृशैः ॥ ६० ॥
यौवनेपि मदनान्न विक्रिया नो धनेपि विनयव्यतिक्रमः ।
दुर्जनेपि न मनागनार्जवं केन वामिति नवाकृतिः कृता ॥ ६१ ॥
आवयोस्तु पितृपुत्रयोर्मनानाहितः[14] क्षितिभरः पुरद्रुहा ।
तद्युवां सचिवपुंगवावयं योक्तुमत्र युगपत्समुत्सहे ॥ ६२ ॥
विद्युदञ्चलचलाचलश्रियं संनिवेश्य सचिवेषु साधुषु ।
संप्रहारभरसंभृतश्रमाः शेरते सुखममी क्षमाभुजः ॥ ६३ ॥
येन केन च सुधर्मकर्मणा भूतलेत्र सुलभा विभूतयः ॥
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम् ॥ ६४ ॥
मत्पितुर्भुजयुगेन संयुगादाहृता[15] जितयुगश्रिया श्रियम् ।
अक्षरक्षणविचक्षणौ युवां नित्यमेधयतमिद्धया धिया ॥ ६५ ॥

---

13 °प्रतिकृते B.
14 °नाहतः B, A, C.
15 °त्पाहृता A, B, C.

इत्युदीर्य भुजवीर्यशालिना[16] मुद्रिता[17] दशनचन्द्रिकामुना ।
वस्तुपालवदनारविन्दतः स्यन्दते स्म मधु वाङ्मयं ततः ॥ ६६ ॥
देव सेवकजनः स गण्यते पुण्यवत्सु गुणवत्सु चाग्रणीः ।
यः प्रसन्नवदनाम्बुजन्मना स्वामिना मधुरमेवमुच्यते ॥ ६७ ॥
सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः ।
तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति ॥ ६८ ॥
जायते जलदवृन्दवृष्टिभिः शाखिनां सफलता शनैः शनैः ।
तुष्यतां[18] क्षितिभृतां तु दृष्टिभिस्तत्क्षणादपि नृणां फलोदयः ॥ ६९ ॥
नास्ति तीर्थमिह पार्थिवात्परं यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं संपदेति च समीहिता सताम् ॥ ७० ॥
जीवनाय मनुजन्मनामिह श्राम्यतामथ कदापि स प्रभुः ।
त्वादृशो भवति भाग्ययोगतो वेत्ति यः सदसतां यदन्तरम् ॥ ७१ ॥
किं तु विज्ञपयितास्मि किंचन स्वामिना तदवधार्यतां हृदा ।
न्यायनिष्ठुरतरा गिरः सतां श्रोतुमप्यधिकृतिस्तवैव यत् ॥ ७२ ॥
सा गता शुभमयी युगत्रयी देव[19] संप्रति युगं कलिः[20] पुनः ।
सेवकेषु न कृतं कृतज्ञता नापि भूपतिषु यत्र दृश्यते ॥ ७३ ॥
ते राजानः स्वर्गताश्चक्रिरे यैर्वीरैर्वीर क्ष्मापतीनां प्रबन्धाः ।
तेऽपि प्राप्तास्तत्र सन्मन्त्रिणो ये श्लोकांस्तेषां शोधयन्तिस्म शुद्धाः ॥ ७४ ॥
दृष्टिर्नष्टा भूपतीनां तमोभिस्ते लोभान्धान्सांप्रतं कुर्वतेमे ।
६ यैर्नीयन्ते वर्त्मना तेन यत्र भ्रश्यन्त्याशु व्याकुलास्तेऽपि तेऽपि ॥ ७५ ॥
न सर्वथा कश्चन लोभवर्जितः करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः परत्र बाधा न तथात्र वाच्यता ॥ ७६ ॥

---

[16] 'शालिनि C. [17] मुद्रता B, A, C. [18] पुष्यतां B.
[19] दैव C. [20] कलिं A, B, C.

पुरस्कृत्य न्यायं खलजनमनादृत्य सहजा-
नरीन्निर्जित्य श्रीपतिचरितमाश्रित्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत्सैष शिरसा
धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते ॥ ७७ ॥

सचिववचनमेतच्चेतसा सोत्सवेन
क्षितितलतिलकोयं कृत्स्नमाकर्ण्य सम्यक् ।
अकृत कनकमुद्राकान्तिकिञ्जल्कसान्द्रं
करसरसिजयुग्मं मन्त्रियुग्मस्य तस्य ॥ ७८ ॥

अवनिपतिरनेन भूरिधाम्ना सचिवयुगेन चिराद्विराजमानः ।
पतगपतिरिवारिनागनाशं जनयति पक्षयुगेन संयुगे सः ॥ ७९ ॥

इति गूर्जरेश्वरपुरोहितसोमेश्वरदेवविरचिते[91] कीर्तिकौमुदीनाम्नि महाकाव्ये मन्त्रिस्थापनो नाम तृतीयः सर्गः ॥ ३ ॥

---

## दूतसमागमनम् ।

श्रीवीरस्य धरोद्धारधुरीणस्योपधारणम् ।
चक्रतुः सचिवावेतौ पादौ सुरगिरेरिव ॥ १ ॥
ताभ्यां कल्याणरूपिभ्यां मन्त्रिभ्यामधिकाधिकम् ।
नृपाखण्डलराज्यश्रीः कुण्डलाभ्यामिव व्यधात् ॥ २ ॥
न्यायं[1] निवेशयन्नुर्व्यां निर्व्याजः स्वजनः सताम् ।
स्तम्भतीर्थं जगाम श्रीवस्तुपालो विलोकितुम् ॥ ३ ॥

---

[91] इति श्रीसोमे° C. [1] न्यायंति B; °शयन्नु° B, A.

स्तम्भतीर्थे[1] मनस्तीर्थप्रभाव इव...
केषाममोघनोदोषमीप्सितानि ददौ च यः ॥ ४ ॥
तमन्यमिव सभीकं समुद्रमवलोकयन् ।
ईर्ष्ययेव पयोभङ्गैर्भूभङ्गं विदधेम्बुधिः ॥ ५ ॥
कोप्यपूर्वः समुद्रोयमपापः पृथिवीतले ।
यस्मात्प्रसरति स्वादुरसपूरा सरस्वती ॥ ६ ॥
प्रविवेश पुरे तत्र स पश्चान्मान्त्रिसत्तमः ।
तस्यागमे तु पौराणां प्रमोदः प्रथमं हृदि ॥ ७ ॥
हट्टे हट्टे पटोत्तम्भस्तोरणं च गृहे गृहे ।
पुरुषे पुरुषे प्रीतिः संप्राप्ते तत्र मन्त्रिणि ॥ ८ ॥
धान्यैर्धन्यमिव क्षेत्रं फलैरिव घनं वनम् ।
सरः पूर्णमिवार्णोभिस्तेनाभूच्चारु तत्पुरम् ॥ ९ ॥
क्रूरैर्ग्रहैरिवाक्रम्य मुक्तमन्यैर्नियोगिभिः ।
प्रीणात्स्येव पुरं मन्त्री नक्षत्रमिव चन्द्रमाः ॥ १० ॥
पुरं रोगैरिव ग्रस्तमपरैरधिकारिभिः[3] ।
सद्वैद्य[4] इव तन्त्रज्ञो मन्त्री प्रतिकरोति यः ॥ ११ ॥
केनाप्यन्येन या चक्रे सतां पीडाधिकारिणा । °णां E
वार्यते वस्तुपालेन सा संप्रत्यधिकारिणा[5] ॥ १२ ॥
प्रत्यावृत्तिः[6] कृतस्येव कलेरिव गलग्रहः ।
बलेः पुनरिवोत्थानं स मेने सुमनःशतैः ॥ १३ ॥

---

[1] All the three copies have the first line incomplete and the second incorrect as given above. C suggests शाम्भवः to fill up the blank in the first. [3] °मपारै° B, A, C. [4] सद्वैद्यइव C.
[5] °स्यधिकारिणी B. [6] °वृत्तिक° B, A °वृत्तिकृ° C.

निशासु नीचसंभोगसंभूतधनकामना ।
सत्यत्र मन्त्रिमाणिक्ये गाणिक्येनापि तत्यजे ॥ १४ ॥
सर्वत्रोच्छ्वसितं सद्भिः खलानां म्लानमाननैः ।
निराकृतदुराचारं व्यापारं तत्र तन्वते ॥ १५ ॥
सांयान्त्रिकजनो येन कुर्वाणो हरणं नृणाम् ।
निषिद्धस्तदभूदेष धर्मोदाहरणं भुवि ॥ १६ ॥
स्पृष्टास्पृष्टनिषेधाय विधायावधिवेदिकाम् ।
पुरे[7]स्मिन्वारितस्तेन तक्रविक्रयविभ्रमः ॥ १७ ॥
धात्रा स्थानेषु भग्नेषु ताम्यतामाश्रयः[8] सताम् ।
सद्वंशः सद्गुणश्चायं पटावास इवाभवत् ॥ १८ ॥
स्वामिना सत्प्रसादेन पाणिर्यद्यपि मुद्रितः ।
तथाप्युन्मुद्रितस्तस्य वित्तविश्राणनक्षणे ॥ १९ ॥
स्निग्धैः संभाषणैरेव यस्य द्रविणवर्षिणः ।
अर्थिनामुपशाम्यन्ति दौस्थ्यनिश्वासवायवः ॥ २० ॥
स्थानभ्रष्टस्य यः साधोराधारः सारवत्तया[9] ।
जटाजूटः सुरस्रोतः[10]प्रवाहस्येव शाम्भवः ॥ २१ ॥
लोकेस्मिन्नवमन्वाने जाने वैराग्यमागताः ।
सरस्वत्यास्पदं तीर्थमिव यं शिश्रियुर्गुणाः ॥ २२ ॥
महतां विद्यमानानां[11] वित्तेनोपकरोति यः ।
स्वर्गतानां जरत्पूर्तकीर्तनोद्धरणेन तु[12] ॥ २३ ॥

---

[7] पुरेत° B. [8] ताम्यताश्र° B. [9] °स्मारव° B.
[10] सराश्रोतः B सुरःस्रोतः A °श्रोत C. [11] वर्तमानानां C.
[12] B reads the first line thus: स्वर्गतानां जरत्कीर्तिपूर्तेनोद्धरणे ननु; but it is corrected in the same thus: स्वर्गतानां जरत्पूर्वकीर्तनोद्धरणे प्रभुः; स्वर्गतानां जरत्कीर्ति कीर्तनोद्धरणेन तु C.

प्रासादास्तेन देवानामुद्धृताः कारिताश्च ये ।
नवत्वमेव विख्यातमसंख्येष्वपि तेष्वभूत्[14] ॥ २४ ॥
यन्न्यूनं यत्र यन्नष्टं यस्तत्र तदचीकरत् ।
उत्पत्तिरुत्तमानां हि रिक्तपूरणहेतवे ॥ २५ ॥
८ अकल्पयदनेकानि[15] देवेभ्यः काननानि यः ।
हरनेत्राग्नितापस्य यत्र न स्मरति स्मरः ॥ २६ ॥
रम्भासंभावितैर्यस्य वनैर्वृषनिषेवितैः ।
मनोज्ञसुमनोवर्गैः स्वर्गसौन्दर्यमाददे ॥ २७ ॥
संगृहीतानि हारीतशुकचित्रशिखण्डिभिः ।
धर्मशास्त्रसधर्माणि यस्योद्यानानि रेजिरे ॥ २८ ॥
दर्शयन्सुमनोभावं श्रीमत्तामतुलामयम् ।
काननानां स्वबन्धूनां स्वबन्धूनामिवाकरोत् ॥ २९ ॥
सरांसि राजहंसालीशालीन्ययमचीखनत् ।
तेनैव तुल्यता येषां स्यादस्ताब्धतया तया[16] ॥ ३० ॥
आददानाः पयःपूरं यत्कासारेषु कासराः ।
विराजन्तेतरां पारावारेष्विव पयोधराः ॥ ३१ ॥
अकारयदयं [17]वापीरपापी यः क्रियारतः ।
सुधाया अपि माधुर्यं यज्जलैर्गलहस्तितम् ॥ ३२ ॥
ताः प्रपाः कारितास्तेन यदीयं पिबतां पयः ।
तृप्यन्त्यास्यानि पान्थानां न रूपं पश्यतां दृशः ॥ ३३ ॥
भवार्णवतरी[18] ब्रह्मपुरी येनात्र निर्ममे ।
यस्यां गायन्ति[19] सामानि नरा नार्यस्तु तद्यशः ॥ ३४ ॥

---

[13] प्रसादाः B. [14] °ष्वभूत् C. [15] °दनल्पानि C.
[16] B and C give as a revised reading, स्वहस्ताद्येतया तयाः.
[17] वापिरपापीकि° A, C. [18] भवार्णवरी° A. [19] गायति B, A.

स्फुटं वेष्टयता शुभ्रैः कीर्तिकूटैः पटैरिव ।
दशापि[20] माहिता येन दिशः श्वेताम्बरव्रतम् ॥ ३५ ॥
येन पौषधशालास्ताः कारितास्तारितात्मना ।
मध्ये श्वेताम्बरैर्यासां विशुद्धिः सुधया बहिः ॥ ३६ ॥
यस्य पौषधशालासु यतयः संवसन्ति ते ।
सदा येषामदाराणामात्मभूः संभवः कुतः ॥ ३७ ॥
ज्ञानाख्यं यस्य तच्चक्षुर्वाचा देवी ददे मुदा ।
नित्यं येनैष धर्मस्य गतिं सूक्ष्मामपीक्षते[21] ॥ ३८ ॥
अयं जगति मध्यस्थः स्पष्टं सृष्टिकृता कृतः ।
धर्माध्वानस्तदेतस्य स्थिताः सर्वेपि तावति ॥ ३९ ॥
नानर्च भक्तिमान्नेमौ नेमौ शंकरकेशवौ ।
जैनोपि यः सवेदानां दानाम्भः कुरुते करे ॥ ४० ॥ Print E
लभन्ते लोभतः पापाः शापानन्ये नियोगिनः ।
अधिकारमाधिकारममात्यः पात्यसौ पुनः ॥ ४१ ॥
अथ गूर्जरराजराज्यलक्ष्मीं रमणीयां चरचक्षुषा निरीक्ष्य ।
पृतनां द्रुतमादिदेश दूतीमिव तत्संग्रहणाय दक्षिणेन्द्रः ॥ ४२ ॥
श्रुतसिङ्घनसैन्यसिंहनादप्रसरा गूर्जरराजराजधानी ।
हरिणीव हरिन्मुखावलोकं चकितान्तःकरणा[22] मुहुश्चकार ॥ ४३ ॥
गृहमारभते न कोपि कर्तुं कुरुते कोपि न संग्रहं कणानाम् ।
स्थिरतां क्वचनापि नैति चेतः परचक्रागमशङ्कया प्रजानाम् ॥ ४४ ॥
अवधीरितधान्यसंचयानां बहुमानः शकटेषु मानवानाम् ।
विपदामुदये हि दुर्निवारे शरणं चक्रभृदेव देहभाजाम् ॥ ४५ ॥

---

[20] दयापि B. [21] °पीक्ष्यते B, A, C. [22] °करणां C.

समुपैति यथा यथा समीपं रिपुराजध्वजिनी मदात्तदानीम् ।
परतः परतस्तथा तथासौ जनता जातभयोच्छ्रया प्रयाति ॥ ४६ ॥

तदवेत्य जवेन यादवेन्दोर्बलमागच्छदतुच्छवीरगर्वम्[23] ।
भृकुटीकुटिलं चकार कोपादलिकं श्रीलवणप्रसाददेवः ॥ ४७ ॥

उपकण्ठमकुण्ठविक्रमस्य स्फुरदुस्रप्रसरा हिरण्मयी स्रक् ।
शुशुभेस्य चुलुक्यभूपलक्ष्म्या भयवत्या[24] निहितेव बाहुवल्ली ॥ ४८ ॥

परिपन्थिवरूथिनीं[25] प्रभूतां स नृपस्तुच्छपरिच्छदोप्यगच्छत् ।
बलिनाप्यरिणा रणप्रवृत्तौ सुभटानां हि पदानि संमुखानि ॥ ४९ ॥

बलवारिधिराजगाम शत्रोरुपतापीतटमुर्वरोपतापी ।
रभसादभिधावतिस्म वीरः स महीतीरमहीनबाहुशक्तिः ॥ ५० ॥

प्रचुरं तदरातिराजचक्रं तदजय्यं न बलं चुलुक्यभर्तुः ।
विमृशन्बहुशोपि संदिहानो न जनो निश्चिनुते गतिं स्थितिं वा[26] ॥ ५१ ॥

रिपुसैन्यनिवेशभूः[27] प्रजानां विदिताभूदनिवेदितापि दूतैः ।
गगनाङ्गणगाहनोल्बणैस्तज्ज्वलितग्रामसमूहधूमकूटैः ॥ ५२ ॥

भृगुकच्छमहीमहीनसस्यां चरतस्तानचिरेण वृष्णिवर्गान् ।
न बहूनपि दुर्जयानजय्यः समरेमन्यत वीरकेसरी सः ॥ ५३ ॥

प्रसरत्यथ मत्सरप्रबन्धे श्रुतमेकेन रणोल्बणं कृपाणम् ।
अपरेण सुतं करेण वीरं सहसा संयति यान्तमेष दध्रे ॥ ५४ ॥

क्षितिपान्तरविग्रहप्रसक्तौ पितृपुत्रावथ विग्रहीतुमेतौ ।
विदितावसरैश्चिराच्चतुर्भिर्मरुभूपैः सहसोपचक्रमाते ॥ ५५ ॥

---

[23] °वीरवर्गम् B. [24] °भूपलक्ष्मीनय° B, A ; भूपलक्ष्मीम° C ; but C notes the reading °लक्ष्मीन marginally. [25] °विरूथिनी C. [26] B has the fourth foot without the words न जनो. [27] °निवेशिभूः B, A.

उभयोरनयोश्चतुर्भिरेभिर्विगृहीतिर्विहिताथ सापि पृष्ठे ।
इयतैव बुधैर्विबोधनीयं सुभटत्वं मृधमूर्ध्नि यस्य यावत् ॥ ५६ ॥
अथ गोध्रहलाटदेशनाथौ मरुनाथैर्निभृतं निबद्धसंधी ।
विधुरे परिहृत्य तत्र मित्रत्रितयं युत्कटकावुपेयतुस्तान् ॥ ५७ ॥
असतोरबलं तयोः सतोर्वा सबलं स्वं मनुतेस्म नैष वीरः ।
जलधिर्विगतैरुपागतैः स्यान्नहि मिथोऽध्रजलैः क्षयी चयी वा ॥५८॥
पुरतो यदि सिङ्घनस्य सैन्यं यदि पृष्ठे मरुभूभुजश्च तौ च ।
न बभूव तयोरचिन्त्यशक्त्योर्मुखरागस्य विपर्ययस्तथापि ॥ ५९ ॥
पुरतः[27] सरतो यदुप्रवीराननुगच्छन्समरे करीव[28] मत्तः ।
व्यथितः प्रतिपार्थिवैः स पश्चात्सपदि व्याववृते नृपः सकोपः ॥ ६० ॥
जगति ज्वलिताखिलप्रदेशः प्रचुरीभूतमलिम्लुचप्रचारः[29] ।
स परस्परविग्रहो ग्रहाणामिव तेषामभवन्नरेश्वराणाम् ॥ ६१ ॥
अवलोक्य चुलुक्यपार्थिवौ तौ विपरीतैर्बहुभिर्नृपैः परीतौ[30] ।
खरशीतकराविवाम्बुवाहैर्जनतेयं मनुतेस्म दुर्दिनं तत् ॥ ६२ ॥
वलितेऽपि चुलुक्यपार्थिवेस्मिन्न कृतं तैर्यदुभिः पुरः प्रयाणम् ।
हरिणैरनुगम्यते न मार्गो हरिणा तत्क्षणमाश्रितोज्झितोपि[31] ॥ ६३ ॥
हरितं परिहृत्य चन्दनाद्रेरथ गन्तुं हिमभूभृतः प्रवृत्तः ।
अभवल्लवणप्रसादशूरः प्रसरत्तीव्रतरप्रतापरौद्रः ॥ ६४ ॥
सहजा इति येषु बन्धुबुद्धिः प्रथमाभूदथ तान्विकारकर्तॄन् ।
६ षडपि द्विषतो विमृश्य जेतुं नृपवीरः स पुनश्चकार योगम् ॥ ६५ ॥
प्रसृतेथ महीभृतां विरोधे क्षयसिन्धाविव सिन्धुराजसूनुः ।
प्रणिधिं प्रजिघाय मन्त्रिणेस्मै तृणवद्विश्वमपि स्मयेन पश्यन् ॥ ६६ ॥

---

[27] गच्छन् B, A ; कवीव B.
[29] प्रचरी° B, A.
[30] परीतौ; B, A.
[31] °क्षणमातोज्झितोपि B.

कुलुकोञ्चनभूपतेरमात्यं भयकालेपि निराकुलं तमेत्य ।
प्रणिधिः प्रणिपत्य च प्रवीणो विनयच्छन्नमदामुवाच वाचम् ॥६७॥
सुभटैरपरैर्विमुक्तमलं समरोर्वीषु य एक एव धत्ते ।
अथवा भुवने निराश्रयाणां शरणं किं नु तथाविधैर्विनास्तु ॥ ६८ ॥
दलितेपि दले स्थितः समित्यां यदुभिर्यो बहुभिर्धृतः कथंचित् ।
हृदयेषु गुणार्जितेषु तेषामपरेषामपि विभ्रमं जगाम ॥ ६९ ॥
विधृतेपि सुतेन तत्सवित्रा नु सपत्राकृतमानसा तथाभूत् ।
समरेपि भयंकरेपि वक्कुः[32] समसत्त्वेन नयेन लज्जितासौ ॥ ७० ॥
अवलोकितमात्र एव गुर्भेर्यदुसिंहेन विमोच्य सिङ्कनेन ।
निदधे भुजपञ्जरे स्वयं यः क्व लभन्ते गुणिनो हि न प्रतिष्ठाम् ॥ ७१ ॥
विधुरेपि न मुञ्चते निजं यः कुलधर्मं च कुलान्वयप्रदीपः ।
स यदाह मदाननेन शङ्कुः शृणु तन्मन्त्रिमणे[33] [वचः] स्वपथ्यम् ॥७२॥
विषमेपि कथं स सत्यमार्गे स्खलतु श्रीलवणप्रसादपुत्रः ।
प्रददाति पदे पदे प्रबुद्धः सचिवो यस्य भवान्करावलम्बम् ॥ ७३ ॥
निपुणोसि गुणेषु षट्सु जाने पुनरेषा तव धीरता कुतस्त्या ।
व्यसने समुपस्थितेपि भर्तुर्यदशङ्कः कुरुषेधिकारमेकः ॥ ७४ ॥
अपि[34] वेत्ति भवानपीदृशं यत्पितृभुक्तिर्मम पत्तनं यदेतत् ।
स्वधनग्रहणार्थमागतोहं समयज्ञोसि तदर्प्यतामिदं मे ॥ ७५ ॥
यदि संप्रतिपत्तिरस्ति चित्ते नगरस्यास्य नियोगवासना च ।
प्रणम द्रुतमेत्य तत्प्रसन्ने मयि दूरे न तवाधिकारमुद्रा ॥ ७६ ॥
अपरोपि विधास्यतेधिकारी नगरे कश्चन पैतृके मयास्मिन् ।
भजसे यदि मां ततः स्थिरैव त्वयि मुद्रास्तु गुणाः प्रियाः प्रभूणाम् ॥७७॥

[32] वक्कः A, C. [33] °मणेस्वपथ्यम् A, B, C. [34] अथि B.

अथ चेतसि किंचिदन्यथा ते स्थितमास्ते तदपि प्रियंकरं नः ।
यदसाध्यविरोधसाधनाय प्रतिभूरस्ति ममैष खड्गदण्डः ॥ ७८ ॥
अवलेपमलीकमाश्रितो यः प्रभुमभ्यर्थिन[35]मन्यथा करोति ।
कुपितेन स तेन दण्ड्यमानः सह जीवेन ददाति वित्तजातम् ॥ ७९ ॥
अथ स व्यथितोपि तद्वचोभिर्न विकारं प्रकटीचकार मन्त्री ।
मलिनत्वमुपैति वातनुन्नैर्न रजोभिः सुरवाहिनीप्रवाहः ॥ ८० ॥
जगदे जगदेकबन्धुनैवं सचिवेनापि सरद्वचाः स चारः ।
भवताभिहितं यदात्मभर्त्तुश्चरितं तन्न चमत्करोति कस्य ॥ ८१ ॥
तरणेरिव सिन्धुराजसूनोर्महसा दुःप्रसहेन शुष्कदेहम् ।
दहतिस्म सुखेन लक्ष्मदेवद्रुममुच्चैरपि यादवेन्द्रदावः ॥ ८२ ॥
समरैकरतेरमुष्य सत्त्व[36]स्तुतिकोलाहलकाहलानिनादैः ।
श्रुतिमार्गमुपैति मर्त्यलोके सुभटानामभिधायिनां परेषाम् ॥ ८३ ॥
विपरीतमतित्वमस्य मन्ये यदसावर्थयते [पुनः] पुरं तत् ।
हयसैन्यसहायतोपि सिंहान्नृपसिंहेन विगृह्य यद्गृहीतम् ॥ ८४ ॥
बहुभिः सह योद्धुमक्षमं मे मनुते स्वामिनमेष तन्मृषैव ।
ननु निश्चयनिश्चलस्य पुंसस्त्रिदशा यान्ति सहायतां[37] क्रियासु ॥ ८५ ॥
बकपाटकचेष्टितं न दृष्टं न च सिद्धेश्वरसंनिधानयुद्धम् ।
किमनेन मनस्विनो यदस्य क्षितिमाकाङ्क्षति लीलयैव लब्धुम् । ८६ ॥
तनयः पितृरिक्थमर्हतीति व्यवहारः पुरुषान्तरेषु युक्तः ।
परसंपदपेक्षिणां नृपाणां स कृपाणेन कृतः पुनः प्रमाणम् ॥ ८७ ॥
तदुपेहि पतिं स्वमेवमस्मद्वचसा ब्रूहि च देव वेत्सि सर्वम् ।
अवलेपममुं विमुञ्च नो चेदयमस्मि त्वमितो[38] विचार्य कुर्याः ॥ ८८ ॥

---

[35] °मल्पार्थि° A, C.
[36] सत्वं B, A.
[37] सहाता B ; सहायता A, C.
[38] त्वमतो C.

श्रुत्वा वचः सचिवचक्रशतक्रतोस्त-
    द्भूयोऽप्यभाषत रुषा परुषाक्षरं सः ।
आः किं ब्रवीषि मदमन्दमतिस्त्वमेवं
    देवस्य तस्य नियतं न हि वेदितासि ॥ ८९ ॥

कुर्वाणस्त्वयि शस्त्रधारणमसावस्मत्पतिर्लज्जते
    येनैकेन रणाङ्गणेऽवगणितः सेनाघनः सिङ्घनः ।
तत्ते चेतसि चेद्विचारकणिका काप्यस्ति[39] तन्मुच्यताम्
    मानोऽयं नयवेदिनाथ भवता वर्मेदमामुच्यताम् ॥ ९० ॥

अथ सचिवमवद्यमाहवाय प्रवणमतिं मतिमानयं विदित्वा ।
पवन[40] इव वनोन्मुखं कृशानुं विभुमभिषेणनवाञ्छमभ्यगच्छत् ॥ ९१ ॥

इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये दूतसमागमनोनाम चतुर्थः सर्गः ॥ ४ ॥

---

## युद्धवर्णनम् ।

कथितारिविचारेण चारेण प्रेरितस्ततः ।
सिन्धुराजात्मजः सिन्धुर्वायुनेवोदजृम्भत ॥ १ ॥

कुपितः करवालेन सिन्धुराजाङ्गभूर्बभौ ।
कल्पान्तविप्लुतः शम्भुः कृतान्तेनेव संगतः ॥ २ ॥

भृकुटीघटना भाले तस्य भाति स्म[1] भीषणा ।
त्र्यक्षचक्षुर्यया जिग्ये युगान्तोद्भ्रान्तपावकम् ॥ ३ ॥

---

[39] कोऽप्यस्ति C.    [40] यवनइववनोन्मुखं B; यवन इव वनोन्मुखं A, C.
[1] भातिस्सभिषणा A; [2]स्सभीषणा B, C.

दधा स्मितमुखः शङ्खः शङ्खपाणिसमच्छविः ।
नोभवत्प्रीतये कस्य सितविद्युदिवाम्बुदः ॥ ४ ॥

स प्रतस्थे हयोदस्तैः[2] परागपटलैर्घनैः ।
प्रावृषं राजहंसानामकाले कल्पयन्निव ॥ ५ ॥

केतुपत्रमयच्छत्रच्छन्ना[3] तस्य पताकिनी ।
जङ्गमोद्यानलेखेव दोःस्थिताया जयश्रियः ॥ ६ ॥

झटित्यागत्य साटोपो वटकूपसरस्तटे ।
व्याचष्ट पटहोद्घोषैर्द्विषामेष स्वमागतम् ॥ ७ ॥

निस्वाननिस्वना [ना] नस्य स्वकर्णाभ्यर्णमागतान् ।
उदग्रभृकुटीभङ्गा मन्त्री प्रत्युदगादिव ॥ ८ ॥

मन्त्री यद्यपि गाम्भीर्याद्भावं नाविश्चकार तम् ।
तथाप्येष कृतोत्थानैर्व्यक्तीभूतः शिरोरुहैः ॥ ९ ॥

संनद्धसैनिकः शङ्खो भिन्नशृङ्ग इव द्विपः[4] ।
सङ्गरावेशदुर्वारः संचचार शनैः शनैः ॥ १० ॥

स चौलुक्यनृपामात्यः संचरस्यारिसंचये ।
सैन्यमारचयामास[5] त्रासमुक्तेन चेतसा ॥ ११ ॥

चन्दनागरुकर्पूरकस्तूरीकुसुमस्रजः ।
स्वःस्त्रीसंभोगमिच्छद्भिरिव धीरैर्विदध्रिरे ॥ १२ ॥

संनाहः सङ्गरारम्भसंभवत्सत्त्वसंपदः ।
उच्छ्वसत्या[6] अमात्यस्य न मात्यस्य तनौ तदा ॥ १३ ॥

---

[2] हयोत्क्षिप्तैः A ; हयोद्धतैः B, C. [3] केपि... ..च्छन्ना A, C ; °च्छन्ना B.
[4] संनिद्ध A, B ; भिन्नशृङ्ग इवाद्विपः B, C ; भिन्नशृङ्ग इवाद्विपाः A.
[5] °चरयामासशाघ° A. [6] उच्छ्वसात्याममात्यस्य A ; उच्छसात्यामनात्यस्य B,C.

दक्षिणेनाङ्घ्रिणा क्षोणिक्षोदनाजयशंसिनम् ।
आरुरोह जयाद्यमश्वराजाङ्कसंभवः ॥ १४ ॥
श्रीवीरनृपमुद्रां[7] यः सदा धारयते करे ।
वीरशूद्रकमुद्रापि[8] धृता तेन तदा हृदि ॥ १५ ॥
भटा भुवनपालाद्या यद्यप्यग्रे तदाभवन् ।
तथापि स पुरस्तेषां पौरैः शूरतया मतः ॥ १६ ॥
अग्रे शङ्खचमूचक्रं मध्येप्रहरणाक्रणम् ।
पारेरत्नाकरं वीरशिरोरत्नमसौ स्थितः ॥ १७ ॥
समासन्नेपि संग्रामे शौर्योद्भेदं[9] न भाषितैः ।
स चक्रे सचिवोत्तंसः क्रियासारा हि तादृशाः ॥ १८ ॥
स्थितं संख्यमुखे शङ्खस्तं वीक्ष्य विकसन्मुखम् ।
पाणौ रणरसोत्तालः करवालमलालयत् ॥ १९ ॥
स्थितेत्र संमुखे[10] शङ्खः प्रवेष्टुं नाशकत्पुरीम् ।
रोहिणीं रोषरौद्रोपि व्यथादशरथोशनिः ॥ २० ॥
चलन्मन्त्रिबलोत्क्षिप्तः क्षोणीरेणुगणो ननु ।
उद्देष्यतः प्रतापाग्नेर्धूमराशिरिवोत्थितः ॥ २१ ॥
धूलिध्वान्तोदये तस्मिन्मुखोद्योतेन मन्त्रिणः ।
प्रतापः प्रकटीचक्रे श्रीवीरधवलप्रभोः ॥ २२ ॥
प्रभूतमपि तत्सैन्यं क्षोभायाभून्न[11] मन्त्रिणः ।
तेल्पेपि बहवो येषां रणारम्भे स्थितं मनः ॥ २३ ॥
स्थितेन तेन धीरेण कर्तुमद्वैतमात्मनः ।
गोष्ठीक्षमः समित्यां[12] यः स्याद्वादी सचिवो यदि ॥ २४ ॥

---

[7] नृपमुद्राब A, B.
[8] वीरशूरक A.
[9] सौर्योद्रेद A, B.
[10] सन्मुखे A, B, C.
[11] क्षोभयाभून A.
[12] समित्यांसः A.

वाहिन्योस्तत्र संभेदे स कोपि तुमुलोभवत् ।
यस्याग्रे मन्द्रतामेति सामुद्रोपि महाध्वनिः ॥ २५ ॥
अवाञ्चितानि चापानि भ्रुवोर्युग्ममुदञ्चितम् ।
सुभटैः कोपसाटोपैः सेनयोरुभयोरपि ॥ २६ ॥
काण्डानां सहकोदण्डगुणैः संधिरजायत ।
तेषां वीरप्रकाण्डानां विग्रहस्तु परस्परम् ॥ २७ ॥
कर्णे लगद्भिरन्येषामन्येषां जीवितव्ययम् ।
कुर्वाणैर्विदधे बाणैः स्पष्टं दुर्जनचेष्टितम् ॥ २८ ॥
तत्राहवमहातीर्थे विशिखैर्गुणनिर्गतैः ।
भित्त्वा विकर्त्तनं चक्रे परस्मिन्पुरुषे लयः ॥ २९ ॥
विहाय शरधिं वेगाच्चापमापुः शिलीमुखाः ।
निह्नमेतत्सपक्षाणां विधुरे यत्पुरः स्थितिः ॥ ३० ॥
वक्षो विक्षिप्य वैपक्षं पत्त्रिणः परतो गताः ।
न चिरं निर्गुणैर्लभ्या धीराणां ह्यवस्थितिः ॥ ३१ ॥
खड्गिनः खड्गिभिः[13] कुन्तपाणयः कुन्तपाणिभिः ।
योधा योधैर्हयारूढा हयारूढैश्च संगताः ॥ ३२ ॥
मन्त्रीशकरसंसर्गादिव दानार्थमुद्यतः ।
असिरुत्सृष्टवान्कोशं बद्धमुष्टिरपि क्षणात् ॥ ३३ ॥
वीराणां पाणिपादाब्जैः पूजितेवाहवक्षितिः ।
दत्तार्थं [विं] व[14] च दूर्वाभाकेशामिश्रैः शिरःफलैः ॥ ३४ ॥
अहिंसाव्रतभङ्गेन का स्यात्तस्यात्र वाच्यता ।
पुरुषव्रतनिर्वाहो येन तादृकृतस्तदा ॥ ३५ ॥

---

[13] खड्गिनः खड्गिभिः A.  [14] दत्तार्थंव A, B ; दत्तार्थैव C.

अहिंसाभङ्गसंभूतां मन्त्री माष्टुं मनःखिदम् ।
चक्रे दिव्यमिव स्नानं स शूरः शरवृष्टिभिः ॥ ३६ ॥
प्रभुप्रोत्साहनं पृष्ठे मागधोत्तेजनं पुरः ।
विक्रान्तानां विशेषेण जातं विक्रमवृद्धये ॥ ३७ ॥
उद्दिश्यापि द्विषा मुक्तैर्न मन्त्री बिभिदे शरैः ।
अदृष्टः कोपि शिष्टानां बद्धकक्षो हि रक्षणे ॥ ३८ ॥
सुभटासृक्सरित्पूरः पुरस्ताद्दुस्तरो यदि ।
तथापि न विशश्राम मन्त्री शत्रूनभिव्रजन् ॥ ३९ ॥
विभाव्य तमसंभाव्यमवष्टम्भं रणे रिपोः ।
स्वत्रमुत्रसंहार[15]मारब्धं च परैः पुरः ॥ ४० ॥
वीरः संग्रामसिंहोथ संख्ये शङ्खापराह्वयः ।
आविर्भावितवानुच्चैर्निजसंरम्भसौरभम्[16] ॥ ४१ ॥
अपि भ्रूपल्लवोल्लासः परैर्यस्य सुदुःसहः ।
तस्य संग्रामसिंहस्य खड्गोल्लासं सहेत कः ॥ ४२ ॥
तमङ्कुशमिवमायान्तमनपेक्षितजीवितः ।
भटो भुवनपालाख्यः शङ्खं प्रत्यभिजग्मिवान् ॥ ४३ ॥
सखा शङ्खस्य सामन्तः सेनां सीमन्तयन्परैः ।
बलाद्दुलकुलोत्तंसमभ्ययुङ्क्त[17] तमन्तरा ॥ ४४ ॥
शस्त्रैः शस्त्रेषु भग्नेषु तयोरप्रतिमल्लयोः ।
मल्लयोरिव संजज्ञे केशाकेशि भुजाभुजि ॥ ४५ ॥
वियति प्रेक्षमाणाभिरप्सरोभिर्मृधं तयोः ।
बहु मेने स्वकीयानां चक्षुषामनिमेषता ॥ ४६ ॥

---

15 °सञ्चार A, B, C.
16 °भावितभानुचैः A ; संख्यशांख्या° C.
17 कुलोत्तंसः मभ्य° C.

सामन्तमन्तकस्थान्तं स नीत्वा सत्वरं पुनः ।
समं संग्रामसिंहेन संग्रामं कर्तुमभ्यगात् ॥ ४७ ॥
शङ्खेन खड्गपातैस्तैः[18] खण्डं खण्डं कृतं वपुः ।
संख्ये भुवनपालस्य पौरुषं न तु खण्डितम् ॥ ४८ ॥
स वीरो मन्त्रिवीरस्य शङ्खासिच्छिन्नमस्तकः ।
तस्य प्रभुप्रसादस्य प्राणैरुच्छ्रवणोऽभवत्[19] ॥ ४९ ॥
श्रुत्वा भुवनपालस्य निधनं मृधमूर्धनि ।
मन्त्री तेनैव वैरेण रणाय प्रवणोऽधिकम् ॥ ५० ॥
प्रियं विक्रामतां क्रेतुमसुभिः[20] सुलभं यशः ।
धृतासिः प्राविशद्वीरो वीरमः समरापणम्[21] ॥ ५१ ॥
शङ्खपत्तिर्जयन्तश्च मन्त्रिपत्तिश्च वीरमः ।
उभौ शम्भुसुतां[22] यातौ सन्निवादौ जयश्रिये ॥ ५२ ॥
वैरिणामपि वीरेण रणान्तर्व्ययितात्मना ।
वाचि वाचि गदेवेन स्वबाहुस्तुतिराहिता ॥ ५३ ॥
स्थित्वा विपद्यमानेन भग्नेऽपि स्वचमूजने ।
पदे पदे कृतः स्तोमः सोमसिंहेन संगरे ॥ ५४ ॥
स्वामिशत्रुमहत्वापि मृतोऽस्मीति ह्रिया किल ।
विजयेन तथा यातं नेहायातं यथा पुनः[23] ॥ ५५ ॥
(भु)तलक्षेप(बुद्ध्ये)व[24] शङ्खेनदृढमाहतः ।
भटो भुवनसिंहस्तु सपदि त्रिदिवं गतः ॥ ५६ ॥
• प्राणेभ्योऽपि प्रियं शस्त्रं क्षत्त्राणामिति निश्चयः ।
तथाभ्युदयसिंहेन त्यक्तास्ते नोज्झितं तु तत् ॥ ५७ ॥

---

[18] खड्गयातैस्तैः B. [19] °रुच्छ्रावणो° A, C.
[20] क्रेतुमसुभिः A, B, C. [21] समरार्पणम् A. [22] शम्भुसतां A, C.
[23] तथा पुनः A, B. [24] तलक्षेपबुद्ध्येवशङ्खेनदृढमाहतः A, B, C.

स्वखड्गखण्डितैर्वीर[25]शिरोभिर्विषमीकृते ।
पेदे विक्रमसिंहेन क्रोधान्धेन मृधाध्वनि ॥ ५८ ॥
वि म भ्यः कुलसिंहेन दर्शनात् ।
वक्राच वि· स्फुरूंते युद्धे वैकुण्ठबुद्धिना ॥ ५९ ॥
भित्त्वा भल्लीभिरङ्गिभ्यो निर्गताननपङ्क्तिभिः ।
उद्दलञ्शुशुभे तत्र शौर्यद्रुमवृोद्दलः ॥ ६० ॥
पश्यतः सचित्रं हीरं तथैव स्थितमप्यतः ।
शङ्खस्यापि चमत्कारः प्रससार तदा हृदि ॥ ६१ ॥
विकारवर्जितं वीक्ष्य साक्षात्तं पुरुषं परम् ।
प्रबुद्धमिव शङ्खेन विरमत्कोपसंपदा ॥ ६२ ॥
चौलुक्यचन्द्रसचिवेन्द्रमवार्यशक्ति
मत्वा स्थितं स्थगयताथ रजोभिराशाः[26] ।
आकम्पितप्रचुरपत्रनृपाङ्घ्रिपेण
शङ्खेन यानमपसृत्य महाबलेन ॥ ६३ ॥
मन्त्रीश्वरोयमनुभूतभटोपमर्द-
सौवर्णपिण्ड इव सोढहुताशतापः ।
आनन्दकन्दलितबाष्पविलोचनेन
लोकेन पूजितमतीव बभाज तेजः ॥ ६४ ॥
संग्रामसिंहः[27] स महानियोगी योगी यथा योगबलेन कालम् ।
संहर्तुमायान्तमतीत्य चक्रे कुशाग्रबुद्धिः कुशलं पुरस्य ॥ ६५ ॥
संवीक्ष्य वीररसरोपितरोमराजि-
राजिक्षितिं[28] क्षतभटामिषमार्धगृध्राम्[29] ।

[25] वार C; °र्वैषमी° A, B, C. [26] °राशा B, A, C.
[27] संग्रामसिंहस° B, A, C. [28] °राजी B. [29] मर्द्धिगृध्राम् B, C, A.

मन्त्री न्यवर्तत ततः प्रमदोपहूतैः[30]
सूतैः पुरः प्रतिपदोदितदोर्विभूतिः[31] ॥ ६६ ॥
संधाय बन्धुजनताजनितोपरोधा-[32]
द्वीरे[33] विरुद्धहृदयोपि समं नृपस्तैः ।
पुत्रेण तेन सह दुःसहपौरुषेण
स्वार्थी ससाद नगरीं लवणप्रसादः ॥ ६७ ॥
प्रतिनृपतिभिर्भग्नोत्साहैर्निममभिव क्वचित्
स च नरपतिर्वीरस्तीरं जगाम मृधाम्बुधेः ।
दिशि दिशि यशःस्तोमान्सोमान्वयी समचारय-
च्चतुरतुरलीत्राणक्योर्यं[34] प्रियंकरणैर्गुणैः ॥ ६८ ॥

*इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये युद्धवर्णनोनाम पञ्चमः सर्गः ॥ ५ ॥*

---

## पुरप्रमोदवर्णनम् ।

श्रीवस्तुपालेन बलान्निरस्तां तां दुस्तरामापदमाकलय्य ।
महोत्सवानामकृत प्रवृत्तिं वीतोपसर्गः[1] पुरवासिवर्गः ॥ १ ॥
गृहे गृहे धातुरसानुलेपाः समन्ततः स्वस्तिकपङ्क्तिमन्तः ।
विरेजिरे तूर्यरवानुकूलाः[2] कुलाङ्गनामङ्गलगीतयश्च ॥ २ ॥
बभूव देवेषु विशेषपूजा राजन्यमार्गेषु विशेषशोभा ।
विशेषहर्षः पुरपूरुषेषु[3] विशेषवेषश्च वधूजनेषु ॥ ३ ॥
येषां निमेषार्द्धमपि क्षपायामायान्न निद्रा रिपुविद्रवेण[4] ।
स्वस्थीकृतानां सचिवोत्तमेन तेषां च हर्षान्तरितेयमासीत् ॥ ४ ॥

---

30 °प्रमदोपूतैः B. 31 °दीदितहोर्विभूतिः B. 32 °जनितोप° C.
33 हरे B, A, C. 34 चतुरली......यंकारणै° C. 1 वीतोपसर्ग: A.
2 °कूला B, A. 3 परपूरुषेनु A. 4 °रिपूविद्र° B, C, A.

पुरप्रजानां प्रमदामृतेन तेनातिमात्रं शिशिरीकृतानाम् ।
निःशोषिताशेषसरःसमृद्धिर्ग्रीष्मो[5] न भीष्मोप्यभवद्भयाय ॥ ५ ॥
शिरीषपुष्पप्रचयच्छलेन शुचिर्दधानो हृदयं प्रदीपः ।
आषाढवान्बाढमपास्तकामः कर्मन्दिकल्पस्तमुपाजगाम ॥ ६ ॥
अमात्यमालोक्य चुलुक्यभर्तुः कर्तुं स्थितं शास्त्रभृतो निरस्त्रान् ।
मन्ये मनोभूरपि मन्दमन्दं चापक्रियाचापलमाचचार ॥ ७ ॥
दिक्कुण्डली पाटलिपुष्पगन्धसंबन्धसोन्मेषमरुन्मिषेण[6] ।
शान्तोपतापा सचिवेन तेन संतोषतः श्वासमिव व्यमुञ्चत् ॥ ८ ॥
अस्मान्सुखेनोत्तरतु भ्रमन्ती कीर्तिस्तदीयेति कृशास्तटिन्यः ।
बभूवुरासामसदेतदन्तः सा हि क्षमा सागरलङ्घनेपि ॥ ९ ॥
प्रतापिनः पल्लवितप्रतापः शुचिः शुचित्वाधिगतप्रसिद्धेः ।
कविप्रियोसौ प्रथयांचकार निन्दां निदाघस्य जडप्रियस्य ॥ १० ॥
पीयूषबिन्दुप्रसरं[7] स्रवन्ती गुणावलिर्यस्य गलन्तिकेव ।
स्थितोपरिष्टादपि विष्टपस्य प्रीतिं प्रतप्तस्य तदा ददाति ॥ ११ ॥
चतुर्दिगन्ताक्रमणोद्यतस्य नयत्रयं वृद्धिमिनस्य तेजः ।
तेनाभविष्यत्सचिवेन तुल्यः प्रजोपतापं यदि नाकरिष्यत्[8] ॥ १२ ॥
संशोषिताशेषनदे[9] निदाघे मन्त्रीशदृष्टिः कमलाभिरामा ।
तृष्णापहारं न चकार कस्य प्रपेव सन्मार्गमुपागतस्य ॥ १३ ॥
पुण्ड्रेक्षवः क्षीणरसाः सरस्यः[10] शुष्का विशुष्काश्च गवां समूहाः ।
चूतद्रुमो वा सचिवोत्तमो वा तदार्थिसार्थं सफली चकार ॥ १४ ॥

---

[5] समृद्धिमी° A, B.
[6] °पाजंलीपुष्पगन्ध संबधसोनमेघमरुन्मीषेण B °पार्जलि C.
[7] °प्रसरं C.
[8] नाकरिष्यता B, C; °ष्यत A.
[9] सशोषि° B, A.
[10] सरस्य C.

स्वरक्षितस्याथ पुरस्य तस्य वैशेषिकीं वीक्षितुमेष शोभाम् ।
इष्टां नमस्कर्तुमनाश्च देवीं श्रीवस्तुपालः सचिवश्चचाल ॥ १५ ॥
प्रसर्पतः प्रोषितगर्वभावाल्परिच्छदो यद्यपि तस्य तुच्छः ।
स्त्रीभिः कृताः प्रेक्षणकाङ्क्षिणीभिस्ते संकटा राजपथास्तथापि ॥ १६ ॥
तं राजवीथ्यामथ संचरन्तमालोकयन्त्यः पुरलोककान्ताः ।
दातेति पातेति जयी[11] नयीति क्षमीति वाग्मीति भृशं शशंसुः ॥१७॥
मनोरमाकारममात्यमेतमिवोपगन्तुं हृदयानि तासाम् ।
चक्रुः पुरस्तादुपढौकनाय फलद्वयं चारु कुचद्वयेन ॥ १८ ॥
तमन्तिकं यान्तमवेत्य बन्दिशब्दैरथ द्रष्टुमगारगर्भात् ।
द्रुतं प्रयान्ती रसनानिनादैराकारयन्त्यापि सखीरिवान्याः[12] ॥ १९ ॥
जवेन यान्त्यास्तदवेक्षणाय[13] कस्याश्चिदम्भोजनिभेक्षणायाः[14] ।
काञ्ची सखीभिर्विधृता गलन्ती नितम्बतो न स्थिरता तु चित्तात् ॥ २० ॥
तदा तदालोकनलोलदृष्टिः संवृण्वती स्वाङ्गकमंशुकेन ।
हृत्कोटरान्तर्निहितस्फुलिङ्गमनङ्गमन्या प्रकटीचकार ॥ २१ ॥
तेनाङ्गना प्रत्यवलोकितान्या त्रपातिभारेण भृशं नमन्ती ।
रराज कन्दर्पकिरातमुक्तसमापतन्मार्गणवञ्चिनीव ॥ २२ ॥
परा स्मरावेशनिवेशिताभुः प्रयुक्तनेत्राञ्चितवाञ्छनापि[15] ।
सुधानिधानं सचिवप्रधानं नालोकितुं सम्यगलं बभूव ॥ २३ ॥
न पुष्पचापादपरोऽस्ति चापी यस्मादमात्यप्रणयोन्मुखीनाम् ।
न कञ्चुके किं च न वेधचिह्नं[16] भिन्नं मनस्तेन घनस्तनीनाम् ॥ २४ ॥
लज्जावती तं प्रति कापि बाला जालान्तरालेन दृशं मुमोच ।
इषुर्ययाजीयत वप्रमारमार्गागतः[17] कामवमूत्तरस्य ॥ २५ ॥

[11] जयीत्यर्यमिति B, C; जयीर्यीति A. [12] सखीरिवान्या B, A, C. [13] तदवेक्षणेन A. [14] अम्भोजनीभे; B अम्भोजनिभ A. [15] ञ्चितवाञ्छनापि B, C, A [16] कंचनिवेधचिह्न B, C, A. [17] मार्गागतः B, A, C.

तद्दर्शिनीनां हृदि सुन्दरीणां मनोभवक्ष्माधवकेलिसौधे ।
प्रभूतदुर्वारपरिच्छदोपि लेभे प्रवेशं सचिवेन्दुरेकः ॥ २६ ॥
मन्त्रीशमालोक्य सुलोचनानां स्वभावलोलान्यपि लोचनानि[18] ।
नान्यत्र कुत्रापि गतिं वितेनुर्गुणैस्तदीयैरिव बन्दितानि ॥ २७ ॥
श्रीखण्डमत्युत्सुकया कयाचिद्देहैकदेशे निहितं ततोपि ।
घर्माम्भसा मृष्टममात्यदृष्टाविष्टास्तिरल्पापि जडादपैति[19] ॥ २८ ॥
समीपमाजग्मुषि तत्र मन्त्रीमधौ दधाने सुमनःसमृद्धिम् ।
रोमोद्गमो यन्नवमञ्जरिश्रीर्माकन्दमालेव परा व्यराजत् ॥ २९ ॥
उद्दामकामक्षितिपाज्ञयेव क्रियान्तराण्यर्द्धकृतानि मुक्त्वा ।
स्त्रीणां गणः श्रीकरणप्रधानममुं समालोकत सावधानः ॥ ३० ॥
खिन्नाध्वनि श्रोणिभरेण तावदग्रे व्रजन्तं सचिवं विलोक्य ।
कापि प्रयातुं पदमप्यशक्ता सहामुना स्वं प्रजिघाय चेतः ॥ ३१ ॥
मुहुः शुभैः सत्यममात्यशम्भुर्दृष्टः[20] स दृष्ट्या परिपूर्णयेव ।
पुराङ्गनानामनुरागिणीनां नेत्रत्रिभागेन विलोकितो यत्[21] ॥ ३२ ॥
तत्कालमुन्मीलितमीनकेतुज्वरातुराणां पुरसुन्दरीणाम् ।
अदत्त चित्तं न स दान्तचित्तस्तद्धर्मपत्न्याः प्रथमं हि दत्तम्[22] ॥ ३३ ॥
रेमे न रम्येपि वधूजनेत्र नेत्रद्वयं मन्त्रिमतल्लिकायाः ।
न तादृशास्तादृशसंयमेषु प्रलोभनाय प्रभवन्ति भावाः ॥ ३४ ॥
अथाशिषः सैष नतेन मूर्ध्ना गृह्णन्वितीर्णाः कुलबालिकाभिः ।
विभूषितस्तम्भपुरोपशल्यामेकल्लवीरां प्रददर्श देवीम् ॥ ३५ ॥
तां सप्तलोकप्रणतां प्रणन्तुं जगाम दूरे स दुरापकीर्तिः ।
न वेत्ति विद्वानपि संवसन्तीं वाणीस्वरूपेण निजे मुखाब्जे ॥३६॥

---

[18] सुलोचनानी B, A, C. [19] जडादुपैति A.
[20] °ममत्यशम्भुः B, A, C. [21] विलोकितोयम् A.
[22] पत्न्याहि प्रथमं हि दत्तम् B, C; पत्न्या प्रथमं A.

दुग्धेन दध्ना मधुना घृतेन खण्डेन तोयेन च शुद्धमूर्तिम्[23] ।
आनर्च[24] देवीं सचिवः प्रसूनकर्पूरकृष्णागुरुचन्दनाद्यैः ॥ ३७ ॥
चकार देवीवदनारविन्दे स दन्तपङ्क्तिं घनसारखण्डैः ।
हर्षं वहन्तीं हृदि सप्रकर्षं साक्षात्सहास्येव बभौ यया सा ॥ ३८ ॥
नैवेद्यवृन्दैरनवद्यवृत्तैः शिष्टानुकूलश्च दुकूलकूटैः ।
धूपैरयं भूपसभानुरूपः प्रसादयामास दयाश्रयस्ताम्[25] ॥ ३९ ॥
नुत्या च नत्या च विशेषवत्या देवीं समानीय मुदं स मानी ।
श्रीवीरभूपालकृपाणदण्डे स्थितिं ययाचे हृदि च स्वकीये ॥ ४० ॥
अथोष्मणि ग्रीष्मसमुत्थितैतद्देहे समास्कन्दति देहभाजाम् ।
शङ्के समग्रेपि रसः सशङ्कः स्वेदाम्बुदम्भेन बहिर्बभूव ॥ ४१ ॥
चण्डद्युतौ मण्डयति द्युमध्यं मध्यंदिनोद्दीपितदीप्तिदृप्ते[26] ।
समं स मन्त्री गुणिनां गुणेन क्रीडावनं प्राप सनीडवर्ति ॥ ४२ ॥
मन्त्री तदासाद्य वनं ननन्द ग्रीष्मं मही[27] शोषयितुं स्थिते यत् ।
भ्रमद्घटीसंघटितारघट्ट[28]खाट्कारशब्दैः प्रतिगर्जतीव[29] ॥ ४३ ॥
दीर्घैर्निदाघस्य[30] दिनैर्मनोभूरलब्धसिद्धिर्भजति स्म सम्यक् ।
वनस्य तस्यातिघनद्रुमस्य छायातमीं तारकितां प्रसूनैः ॥ ४४ ॥
अमात्यमत्यर्थमपास्तदौस्थ्यं पिकाङ्गनाकूजितकैतवेन[31] ।
उल्लासिमल्लीमुकुला[32]ग्रदन्त्यः सत्यं स्तुवन्तिस्म वनाधिदेव्यः ॥ ४५ ॥
हिमासहो यस्य[33] मयस्तमिश्रहिस्रः सहस्रांशुरिमौ[34] समेतौ ।
मत्वेव ते भीतिखली प्रविष्टे छायाविशिष्टं वनदुर्गमेतत् ॥ ४६ ॥

---

23 शुद्धमूर्ति B, A, C. 24 अनर्च A. 25 दयाश्रयास्ताम् A.
26 नोद्दिपितदासदृप्ते A; नोद्दीपितदासदृप्ते C, B. 27 मही A, B.
28 भ्रमत्घटीसघटीतरारघट्ट A, भ्रमत्घटीसंघटीतरघट्ट B. 29 प्रतिगर्जताव A, B; प्रतिगर्जतावा C. 30 दीर्घै B; दीर्घैनि° A; दिनैर्मनोभू C, B, A.
31 पिकांगनां B, A, C. 32 मल्लमुकुला° A.
33 (?) हिमासहोयं समयस्तमिश्र. 34 °रिमौ B.

लीलावनेऽस्मिन्नवमेघलीलामरन्दबिन्दुप्रकिरं किरन्तः ।
विनापि वर्षासमयेन हर्षं शिखण्डिनां ताण्डवयन्ति वृक्षाः ॥ ४७ ॥

स एव घर्मांशुकरानुषङ्गादङ्गानि पुंसां पवनो दुनोति ।
धिनोति सद्वृक्षवनोपसेवी सङ्गः कुलीनैरत एव युक्तः ॥ ४८ ॥

प्रकल्पितायां क्षितिकल्पवृक्षो द्राक्षालतामण्डपवेदिकायाम् ।
कृतोपवेशः स चकार गोष्ठीमनिष्ठुरोक्तिप्रसरैः[35] कवीन्द्रैः ॥ ४९ ॥

केचित्कुलं भीतिनिराकुलस्य कृतावदानस्य परे च दानम् ।
मान्यत्वमन्ये[36] विनिवृत्तमन्योर्व्याचख्युराख्येयगुणस्य तस्य ॥५०॥

कवीन्द्रशैलेन्द्रविनिर्गतानां सरस्वतीनां प्रसृतान्प्रवाहान् ।
आरुह्य भूमण्डलमासमुद्रमियर्ति मन्त्रीश्वरकीर्तिहंसी ॥ ५१ ॥

कवीश्वराणां पृणति स्म वाणी कर्णद्वयं कर्णसमस्य तस्य ।
सोपि प्रमोदं हृदयेषु तेषामुदारपाणी रचयांचकार ॥ ५२ ॥

दत्ते स्म तेभ्यः सचिवः कविभ्यः प्रभूतमत्यद्भुतकीर्तिरर्थम् ।
आदत्त चिद्रूपतया निगूढमप्यर्थलेशं तु तदीयसूक्तात्[37] ॥ ५३ ॥

मनीषिणां मानसमन्दिरेषु श्रीमानमात्यो निवसन्नजस्रम् ।
तेभ्यः सकृप्तं वितरत्यगण्यहिरण्य[38] विश्राणनकैतवेन ॥ ५४ ॥

तस्मिन्वने सत्कविवक्त्रयन्त्रविनिर्गतेन श्रवणामृतेन ।
संसिच्यमानः सचिवप्रधानमह्नाय मध्याह्नमयं निनाय ॥ ५५ ॥

आशायामशिशिरधाम्नि पश्चिमाया-
मायाते सुकृतवतामपश्चिमोसौ ।
तान्कृत्वा घनकनकैः कवीन्कृतार्था-
नावासं स्वमभिचचाल वस्तुपालः ॥ ५६ ॥

इति गूर्जरेश्वरश्रीसोमेश्वरविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये पुरप्रमोदवर्णनो नाम षष्ठः सर्गः ॥ ६ ॥

---

[35] °गोष्टि° B; °गोष्टि°. A. [36] मान्यत्वमन्यविनि° B, A, C.
[37] सूक्तात् A, B, C. [38] हरिण्य B, A, C.

# चन्द्रोदयवर्णनम् ।

---

अथोदयति निर्दोषसचिवेन्दौ नवे रवेः ।
कोककोकनदानन्दि[1] मन्दिमानमगान्महः ॥ १ ॥
गम्यः सोपि जगच्चक्षुश्चक्षुषां[2] समपद्यत ।
कः कालचलनेनात्र निस्तेजा न हि जायते ॥ २ ॥
लौहित्यं विद्रुमालीषु द्रुमालीपल्लवेषु च ।
अधिकं निदधे ब्रध्नः किरणैः कुङ्कुमारुणैः ॥ ३ ॥
शुशुभे दिक्षु सर्वासु प्रज्वलत्तपनोपलः ।
शिरस्थरविरस्ताद्रिः पञ्चाग्निव्रतवानिव ॥ ४ ॥
वियोगव्यथया वीक्ष्य साक्रन्दां चक्रकामिनीम् ।
प्रम्लाना [3]सह संवासखेदेनेव सरोजिनी ॥ ५ ॥
मित्रेस्तमागते दुःखादब्जैः प्राणाञ्जिहासुभिः ।
शालिग्रामशिलेवालिव्याजादारोपिता हृदि ॥ ६ ॥
न मित्रमन्तरेणापि क्षणमभ्यास वासरः ।
भवत्यव्यभिचार्येव संगतं गतदोषयोः ॥ ७ ॥
प्रतापः प्राप मन्दत्वं वारुणीसेवया रवेः ।
भवेत्प्रभावभङ्गाय महतोपि हि दुःकृतम् ॥ ८ ॥
निश्चला कस्य वान्यस्य भुवने श्रीर्भविष्यति ।
आसीदम्बुविलीनोसौ[4] यदङ्कामपि नायकः ॥ ९ ॥
अपि तादृशमस्ताद्रिर्दिनेशं निरकाशयत् ।
चिरं न ह्याश्रयः क्वापि प्राप्यते दिवसात्यये ॥ १० ॥

---

[1] निदानन्दि B, C. [2] जगच्चक्षुषां स॰ B, C.
[3] सहसंवास॰ B. [4] ॰द्रुम B, A.

कुलायमाकुलाः सर्वे पक्षिणस्तत्क्षणादयुः ।
कस्त्यजत्यथवा[5] पस्त्यं सत्यां सवितुरापदि ॥ ११ ॥

वनान्ताद्वलमानेन कुलेनोन्नमितैर्गवाम् ।
पांशुभिर्मांसलीभूतं कुतोप्याविरभूत्तमः ॥ १२ ॥

समन्ततोपि काष्ठानां प्लुष्टानां चित्रभानुना ।
धूमेनेव तमिस्रेण प्रसस्रे गगनाङ्गणे ॥ १३ ॥

मुक्त्वा निःश्रीकमप्यब्जं मराली न गतान्यतः ।
भ्रमराली त्वगाद्वेगादिदं सदसदन्तरम् ॥ १४ ॥

त्रैलोक्यदीपके देवे लोकान्तरमुपेयुषि ।
तमस्तान्तमभूद्विश्वं कः सुखी महदापदि ॥ १५ ॥

गते भानौ स्थिते ध्वान्ते पद्मिन्या साधु मीलितम् ।
दुरीक्षा महतामापदसतामुन्नतिश्च[6] यत् ॥ १६ ॥

स्थित्वाथ प्रस्थिता[7] संध्या व्रजद्वाजिव्रजाकुला ।
आक्रामतः[8] परं लोकं रवेः पश्चाञ्चमूरिव[9] ॥ १७ ॥

ससंध्यावासरं सूर्यं मत्वा देशान्तरं गतम् ।
जायानुजान्वितं राममिव म्लानमभूज्जगत् ॥ १८ ॥

क्व गतः सविता ध्वान्तमेतदप्यागतं कुतः ।
एवं सविस्मयेव[10] द्यौः स्फारतारमवैक्षत ॥ १९ ॥

दीपिका अपि दीप्यन्तां स्फुरन्तु तिमिराण्यपि ।
तन्नूनं[11] हि सजातीयविजातीयासहं महः ॥ २० ॥

---

[5] कस्त्यजत्यथवा यस्य A, B, C.
[6] महतामोप A, B, C.
[7] प्रम्लिता संघा. A, B, C.
[8] आक्रमिता A.
[9] चमूरिव B.
[10] सविस्मयेत C.
[11] तन्नहिं सजातीय° B, A.

स्रष्टुः सृष्टिर्विचित्रेयं[12] यस्मात्संकेतवर्त्मना।
प्रियानभिसरन्तीनां[13] प्रकाशकमभूत्तमः॥ २१॥
प्रदोषानन्तरं चन्द्रोदयादर्वाग्मृगीदृशाम्।
मुहूर्तमभिसाराय मारमौहूर्तिकोऽब्रवीत्॥ २२॥
सुरतव्रतचर्यायै पर्यङ्कादपि सज्जितात्।
पांशुलानामभूत्पांशुतल्पतीर्थं यथाधिकम्॥ २३॥
नीरन्ध्रेणान्धकारेण रोदसी संपुटीकृते।
अथोद्घाटयितुं कोपि प्रवृत्त इव पूर्वतः॥ २४॥
रचितोपक्रमे राज्ञि चक्रमाक्रमितुं दिशाम्।
प्रभादम्भेन नासीरमाविरासीत्पुरः स्फुरत्[14]॥ २५॥
रोहिणीरमणं वीक्ष्य रागाढागतमन्तिके।
सस्मितेव तदुद्योतदम्भादभवदिन्द्रदिक्॥ २६॥
अथोज्जगाम सामन्तः कुसुमास्त्रमहीपतेः।
शृंगारस्य जयोद्गारबन्दी कुमुदबान्धवः॥ २७॥
आविर्बभूव पूर्वस्मादद्रेश्चन्द्रः शनैः शनैः।
तदीयैस्तटमाणिक्यकिरणैर्चैरिवारुणः[15]॥ २८॥
चकार तारिकारोचिरङ्कुरोत्करकैतवात्।
करस्पर्शेन रागिण्याः सोमो रोमोद्गमं दिवः॥ २९॥
पुंश्चलीनां तपश्छिद्रं समुद्रस्य महोत्सवः।
रससिद्धिरनङ्गस्य दिवमिन्दुरगादगात्॥ ३०॥
मालिन्यं मार्जयामास चन्द्रमास्तिमिरैः कृतम्।
खलैर्दत्तं मृषादोषमिव सत्पुरुषः सताम्॥ ३१॥

---

[12] सृष्टिवि° A, B, C.
[13] प्रियामभि° B, A, C.
[14] °सीत्सुरस्फु° C.
[15] °किरणौघै B, A, C.

व्योमाङ्गणविकीर्णानि तमांसि तुहिनद्युतिः ।
ममार्ज रुचिमार्जन्या कुलटाकुलकण्टकः ॥ ३२ ॥
न मृगाङ्के कलङ्कोऽयं कस्तूरीतिलकाकृतिः ।
निदग्धो नीलकण्ठेन तिष्ठत्येष झषध्वजः ॥ ३३ ॥
दिवि स्वर्वाहिनीहंसैर्दिक्षु दन्तैश्च दन्तिनाम् ।
मेदुराजनि मेदिन्यां कौमुदी कौमुदैर्वनैः ॥ ३४ ॥
कर्णेहत्य चकोरीणां गणः पीत्वा सुधारसम्[16] ।
अजायत मदेनेव गुञ्जापुञ्जारुणेक्षणः ॥ ३५ ॥
मरीचिनिचये सान्द्रे सति सान्द्रे समन्ततः ।
घटितं विष्टपं दन्तसंतत्या दन्तिनामिव[17] ॥ ३६ ॥
शान्तध्वान्तघनस्तोमे कौमुदीशरदागमे ।
हृदि श्यामोऽन्यतः श्वेतश्चकाशे चन्द्रखञ्जनः ॥ ३७ ॥
चन्दनैश्चर्चितेव द्यौर्दिशः काशैरिव श्रिताः[18] ।
क्षीरेण क्षालितेवोर्वी शर्वरीशे विराजति ॥ ३८ ॥
पीयूषपायसैः प्रीतं चकोरद्विजसंचयम् ।
श्रेयोऽर्थी मन्मथस्येव चकार शिशिरद्युतिः ॥ ३९ ॥
संदोहैरिन्दुकान्तानां तदासंभवदम्भसाम् ।
प्रीतये चैत्रमित्रस्य चन्द्रश्चक्रे प्रपा इति ॥ ४० ॥
तरुणे तारकाध्यक्षे वृक्षच्छाया विरेजिरे ।
तमसः खण्ड्यमानस्य प्रतीकाः पतिता इव ॥ ४१ ॥
रमयत्यखिलामुर्वीमचण्डद्युतिमण्डले ।
कन्दर्पनृपते राज्यमेकच्छत्रमिवाभवत् ॥ ४२ ॥

---

[16] सुधासवं B; सुधारसः A, C.
[17] सन्तत्यादन्ति° B.
[18] श्रिता B, A, C.

सान्द्रे चन्द्रातपे तत्र स्फुरद्भिः कैरवाकरैः ।
क्षीरनीरधिडिण्डीरपिण्डानां पाण्डिमा जितः ॥ ४३ ॥
नीलाब्जमधुमत्तालिकुलकोलाहलैरिव ।
मानसे मदिराक्षीणां प्रबुद्धः कुसुमायुधः ॥ ४४ ॥
अनल्पाक्षीभिराकल्पास्तेनिरे तदनन्तरम् ।
विजिगीषोरनङ्गस्य संनाहाः[19] सुभटैरिव ॥ ४५ ॥
ज्योत्स्नाजलनिमग्नायाः कस्याश्चित्कुञ्चितभ्रुवः ।
शरीरे चन्दनं पौरैः[20] सौरभ्यादन्वमीयत ॥ ४६ ॥
सर्वत्र व्यक्तशक्तीनां तुषारद्युतिरोचिषाम् ।
जगाम वामनेत्राणां केशपक्षो विपक्षताम् ॥ ४७ ॥
विधृता विश्ववन्द्येन श्रीशिवेनापि[21] मूर्धनि ।
सा ज्योत्स्ना सुदृशां केशहस्तेन गलहस्तिता ॥ ४८ ॥
लग्नः पादेषु कान्तानां नखान्तं प्रतिमामिषात् ।
याचितुं[22] वक्त्रलावण्यकणिकामिव चन्द्रमाः ॥ ४९ ॥
कबरी कैरवाक्षीणां कबरा केतकीदलैः ।
हसन्तीव व्यभादाभां विलक्षामेणलक्ष्मणः ॥ ५० ॥
यामिन्यामिन्दुशुक्लायां शुक्लवस्त्रावगुण्ठनाः ।
धम्मिल्लोद्भावितं विघ्नं विजघ्नुरभिसारिकाः ॥ ५१ ॥
वधूनां वक्त्रमाविद्धं रत्नकुण्डलकान्तिभिः ।
प्रियेषु सविलम्बेषु रोषारुणमिव व्यभात् ॥ ५२ ॥
ताडपत्रश्रिया न्यस्तनीलाश्मगणवर्णया ।
पुस्तिकेव चकास्ति स्म काचित्कामविपश्चितः ॥ ५३ ॥

---

[19] सुनाहाः B, A, C. [20] चन्दनपौरै and अन्वमीयत B, A.
[21] यशिवेनापि C. [22] याचितु B, A.

कुचौ सुवृत्तौ धृतहारयष्टी[23] सकञ्चुकौ रेजतुरम्बुजास्याः[24] ।
रतेः स्थिताया हृदि रक्षणाय स्मरप्रयुक्ताविव सौविदल्लौ ॥ ९४ ॥
आकल्पिता शोभितकेलिशय्या नियुद्धभूमीव वधूवरस्य ।
तत्रोपधानच्छलतो बभूव निवेशवेदी स्मरपार्थिवस्य ॥ ९५ ॥
एकावली वक्षसि विस्फुरन्ती रराज राजीवविलोचनायाः ।
चेतःशरव्यावधिबोधहेतुर्लेखाखटिन्येव कृता स्मरेण ॥ ९६ ॥
दीपप्रभापिञ्जरितानि रेजुरल्पोदरीणां रतमन्दिराणि ।
आपूर्य चित्तान्यतिरिच्यमानैः प्रियानुरागैरिव पूरितानि ॥ ९७ ॥
कुरङ्गनाभीकृतपत्रभङ्गी[26] कुचद्वयी चारुदृशश्चकाशे ।
सुप्तोत्थितस्य स्मरकुञ्जरस्य मदाम्बुसिक्ता शयनस्थलीव ॥ ९८ ॥
माणिक्यमुक्ताफलकाञ्चनानां काचिन्मरीचिप्रचयार्चिताङ्गी ।
खरांशुशीतांशुहुताशनानां महःसमूहैः पिहितेव रेजे ॥ ९९ ॥
ताम्बूलवस्त्राभरणप्रसूनश्रीखण्डसंस्कारसमाकुलाभिः ।
सुलोचनानां परिचारिकाभिरसूच्यत[27] श्रीतनयोत्सवश्रीः ॥ ६० ॥
नर्म वयश्चित्तमपेतचिन्तमिद्धः[28] सुधांशुर्मधुरा परिस्रुत् ।
सख्योनुकूलाश्च[29] विलासिनीनां खिदे तदा[30] कान्तविलम्ब एव ॥ ६१ ॥
अनिच्छतीनां निजमानभङ्गं संगं प्रियैः सत्वरमिच्छतीनाम् ।
अथेङ्गितज्ञस्य मनस्विनीनां दूतीजनस्यावसरो बभूव ॥ ६२ ॥
विज्ञानपूर्वैः[31] सितरोचिरेषः कृतव्यलीकैः[32] सह कामुकैर्यः[33] ।
लुमे[34] प्रकोपेथ विसर्जनीये संधिं विधत्ते स्म वधूजनस्य ॥ ६३ ॥
विभिन्नयोरह्नि रुषा रजन्यामुदञ्चदुच्चैरनुतापयोश्च ।
स्त्रीपुंसयोः संगमनच्छलेन प्राणप्रदा कापि बभूव भूयः ॥ ६४ ॥

---

[23] धृतहारयष्टिसा° B. [24] °रम्बुजाक्षः A. [25] चिभाव्य° B, A, C
[26] भङ्गिः C. [27] °काभिः सूच्यत B, A. [28] °मपेतचित्त B, A,
[29] सख्योनुकूलाश्च A. [30] खिन्नैतदा B, A. [31] विज्ञा° A.
[32] व्यलिकैः B. [33] कार्मुके° B, A, C. [34] लुप्ते B, A, C.

मानार्गलां[35] कापि विलंघ्य वेश्म गन्तुं प्रवृत्ता[36] दयितस्य यावत्।
तावत्स एव स्वयमाजगाम कामः[37] किमिष्टं न करोति तुष्टः॥ ६५॥
विलासवेश्माङ्गणमागतेषु कृतापराधेष्वपि वल्लभेषु।
मनस्विनीनामथमानमुद्रां भ्रूभङ्गशेषामकरोदनङ्गः॥ ६६॥
निःकाश्य कामः प्रसभं प्रकोपं पुनः प्रवेशं प्रतिषेद्धुमस्य।
अङ्गानि सारङ्गविलोचनानां चक्रे स्फुटं कण्टकवेष्टितानि॥ ६७॥
किं नेत्रमार्गेण मनोज्ञरूपा कर्णाध्वना वा मधुरं नदन्ती।
नासापथेनाथ सपुष्पवासा प्रियस्य चित्ते प्रविवेश काचित्॥ ६८॥
अगस्तिभिः संव्यवहार्यतां[38] गतैरनुश्रयेव द्विजचक्रवर्तिनः।
कान्तैः समं कान्तविलोचनाजनः परिस्रुतं पातुमथोपचक्रमे॥ ६९॥
कन्दर्पकेलिप्रथमप्रयोगसंजातलज्जामुकुलीकृतानि।
तदामदेन प्रकटीबभूवुर्भुमभ्रुवां[39] विभ्रमचेष्टितानि॥ ७०॥
आसाद्य कन्दर्पगुरूपदेशान्मद्यं महानन्दमिवाङ्गनाभिः।
व्यावृत्तवस्त्वन्तरवासनाभिः कृता किरीटेऽपि पतत्युपेक्षा॥ ७१॥
महाकुलानि प्रमदाकुलानि विरेजुरापानगृहाङ्गणेषु।
हृदि [40]प्रविष्टस्मरचित्रपुङ्खदुःखादिवोद्घूर्णितमस्तकानि॥ ७२॥
अधरैरधरीकृतं वधूनां मधुमाधुर्यमतैमि विद्रुमाभैः[41]।
दयितैरत एव तेषु पानप्रतिपत्तिर्विहिता विहाय हालाम्॥ ७३॥
परिजनैः प्रथमं गतमन्तिकादपसृतं वसनैर्जघनादथ।
तदनु यातमथ त्रपया हृदः स्थितमिहात्मभुवैव नतभ्रुवाम्॥ ७४॥
आलिङ्गितायाः सुभगेन गाढमुदूढरम्भादलमार्दवेभ्यः[42]।
स्वेदोदबिन्दुच्छलतोपरस्याः सुस्राव लावण्यमिवाङ्गकेभ्यः॥ ७५॥

---

[35] मानर्गलां B, A, C. [36] मतुप्रवृत्ता B; मंतुप्रवृत्ता A. [37] कामःकमि° B.
[38] °र्यमांगै° B. [39] °बभूवभु° B, A, C. [40] प्रविष्ट: C.
[41] विद्रुमाभि: B, A, C. [42] उदूढु° C.

सकलमपि वपुर्विभिद्यमानं मदनशरैरवलोक्य कामिनीनाम् ।
शरणमिव रदच्छदः प्रपेदे प्रियवदनं यदलं प्रसह्य पातुम् ॥ ७६ ॥
मैरेयपानच्युतचेतनानां तासामसाधारणविभ्रमाणाम्[43] ।
नखाङ्कुशैरप्यनवाप्यसंज्ञो गम्भीरवेदी मदनद्विपोभूत् ॥ ७७ ॥
आह्वातुं कुसुमशरं पुरोनुवाक्या
दोर्वल्लीवलयरवोभवद्वधूनाम्[44] ।
तद्याज्यामणितमभूच्च मोहनाभि-
ष्टोमेस्मिन्मधुमधुराधरोष्ठसोमे ॥ ७८ ॥
निगदितुं विधिनापि न शक्यते सुभटता कुचयोः कुटिलभ्रुवाम् ।
सुरतसंयति यौ प्रियपीडितावपि नतिं न गतौ च्युतकञ्चुकौ ॥ ७९ ॥
उपगतसुरतश्रमः त्रियामासमयविरामममनोरमैर्मरुद्भिः ।
सरसनखपदे हृदि प्रियाणामथ शयितः कुशमध्यमासमाजः[45] ॥ ८० ॥
अवनमदमृतांशुबिम्बमौलिर्गलितवया इव शर्वरी व्यराजत् ।
अभजत ककुभं च जम्भजेतुर्जतुरसरक्त इव प्रभाप्रवाहः ॥ ८१ ॥
यातः शीतरुचिः प्रतीचिजलधौ डिण्डीरपिण्डच्छवि-
र्जृम्भारम्भमनोरमाकमलिनी सुप्तोत्थितेवाभवत् ।
वक्रत्वं च विधिर्विधूय सदयं चक्रेषु चक्रे मनः[46]
सौरेणाजनि कुङ्कुमारुणमिव प्राचीमुखं रोचिषा ॥ ८२ ॥
देवोयं भुवनत्रयैकनयनं प्राप्तः प्रभाणां प्रभुः
कर्ता यः कमलोदयं जगदिदं मोहाम्बुधेरुद्धरन् ।
प्रातस्त्यः समयो वयोविरुतिभिर्व्योमेति वर्द्धापय-
न्नाच्छिच्छेद तदीयमन्धतमसव्याजेन संव्यानकम् ॥ ८३ ॥

इति गूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये चन्द्रोदयवर्णनोनाम सप्तमः सर्गः ॥ ७ ॥

[43] विभ्रमाङ्गी B, A, C. [44] वाक्याहो B. [45] कृशमध्यमा°A. [46] सदयं चक्रे मनः B.

# परमार्थविचारः ।

अथ पाथोजिनीनाथे चुम्बत्याशां बिडौजसः ।
प्रबुद्धं पङ्कजेनेव श्रियः पात्रेण[1] मन्त्रिणा ॥ १ ॥
कोकद्वन्द्वं तदालोक्य संगतं संममाद सः ।
परकष्टे प्रनष्टे[2] हि सतां प्रीतिः प्रचीयते ॥ २ ॥
उन्मादं वीक्ष्य पद्मानां कुमुदानां च मन्दताम् ।
क्षणिकत्वं विभूतीनां चेतसा निश्चिकाय सः ॥ ३ ॥
कदाप्युदयति ध्वान्तं कदाप्यर्कश्च धिग्विधिम् ।
तुल्यं नीचेप्यनीचेपि स तदेति व्यतर्कयत् ॥ ४ ॥
करं चिक्षेप तीक्ष्णांशुर्दुस्तरे तिमिराम्बुधौ ।
प्रदातुमिव मग्नस्य भुवनस्यावलम्बनम् ॥ ५ ॥
विच्छायास्तिमिरे[3] तुच्छे रेजुर्दीपाश्चलच्छिखाः ॥
पङ्कीभूते[4] पयःशेषे स्फुरन्तः शफरा इव ॥ ६ ॥
तीक्ष्णैः सपदि भिन्दानः करास्त्रैस्तिमिरासुरम् ।
रोषेणेवारुणः पूषा प्रादुरासीन्नृसिंहवत् ॥ ७ ॥
अथो (ऊन) जगाम वामत्वं कुमुदेषु प्रदर्शयन् ।
विष्टपव्यवहारैकप्राड्विवाको दिवाकरः ॥ ८ ॥
मलिनीभवदाशान्ते शान्ते ध्वान्तघनोदये ।
अब्जावतंसितं हंसो नभः कासारमासदत् ॥ ९ ॥
न्यासीकृताः[5] परं देशं गच्छता भास्करेण याः ।
स्फुटं स्फटिकभूर्वह्निः[6] प्रतिदत्ते स्म ता विभाः[7] ॥ १० ॥

---

[1] प्रायेण A. [2] विनष्टे C. [3] विछया A; विछाया° B, C.
[4] एकांभूते B, C, A. [5] न्यासाकृता B, C, A. [6] स्फुटिक B, C, A.
[7] तां विभो, B, A, C.

विवृतिर्विश्वसूत्रस्य[8] दृशां निस्तिमिरौषधी ।
इष्टवार्ता[9] च यत्नानां दिद्युते द्युमणिद्युतिः ॥ ११ ॥

चकोरचक्रवालस्य पीतशीतज्वरौषधाः ।
तमश्चक्रमथक्रुध्यच्चण्डरोचिर्मरीचयः ॥ १२ ॥

प्रसारितकरे सूरसिंधुरेन्द्रेनुधावति ।
सुमेरुं परिबभ्राम तमस्तोमः पुरःसरः ॥ १३ ॥

कुर्वाणः किरणाङ्कुरैरवतंसश्रियं[10] दिशाम् ।
नभस्त्रिभागमागच्छदब्जिनीजीवितं विभुः ॥ १४ ॥

विलोललोचनाः प्रातर्मौलिमाल्यानि तत्यजुः ।
लोके हि कारणेनैव गौरवं गुणिनामपि ॥ १५ ॥

हृदि प्रियवियुक्तानां साञ्जना बाष्पबिन्दवः ।
मग्नानां मारबाणानां पुङ्खा इव विरेजिरे ॥ १६ ॥

बभ्राजे भुजगाभासं ग्रासयंस्तिमिरोत्करम्[11] ।
सुवर्णरुचिराकारः सुपर्ण इव[12] भास्करः ॥ १७ ॥

अथ धर्मैकनिष्णातो निस्नातः शुचिभिर्जलैः ।
वस्तुपालस्त्रिकालज्ञो जगत्पूज्यमपूजयत् ॥ १८ ॥

वलक्षेणोत्तरीयेण स बभौ बुद्धिमत्तरः ।
तुरीययुगभीतेन सुकृतेनेव संश्रितः ॥ १९ ॥

मत्सरज्वरसंतप्तं मन्ये मुक्त्वान्यमानसम् ।
आदिनाथः स्थितस्तस्य हृदि सौहार्दशीतले ॥ २० ॥

भाले तस्य विभाति स्म चान्दनी तिलकाकृतिः ।
कृता सुकृतिनां मध्ये रेखा मुख्येव वेधसा ॥ २१ ॥

---

[8] विकृत्ति C. [9] °वार्ता A, C. [10] °रवतमंस° B.
[11] भासयंस्तिमिरोत्करान् B, A, C. [12] सुवर्ण इव B, A.

आलिङ्गितः शमेनेव पृथग्भूतः कलेरिव ।
सद्वृत्तेनेव निर्वृत्तः स तदा शुशुभे भृशम् ॥ २२ ॥
देवेन्द्रं स्तुवतस्तस्य रेजुर्दशनदीधयः ।
तत्कालोन्मीलितानन्दसुधांशुकिरणश्रियः ॥ २३ ॥
दत्त्वा दानानि पात्रेभ्यो नत्वा गुरुजनं च सः ।
सत्त्वाश्रितेन चित्तेन भवं भावितवानिति ॥ २४ ॥
अहो संसारकारान्तर्मायानिगडितात्मनाम् ।
जायते जातु जन्तूनां[13] न कथंचन निर्वृतिः[14] ॥ २५ ॥
मोदमानोन्तरात्मैव साक्षी यत्कर्मशर्मणे ।
तमप्युपेक्षते धर्ममहो मूढमना जनः[15] ॥ २६ ॥
केचिद्गुणाय धावन्ति प्रद्युम्नाय च केचन ।
नोद्युङ्क्ते कोपि धर्माय सर्वाभिप्रेतहेतवे ॥ २७ ॥
यस्मिन्सन्निहिते वह्निविषाद्याः प्रभवन्ति न ।
धर्मादप्यपरस्तस्मात्कः शरण्यः शरीरिणाम् ॥ २८ ॥
धर्मसिद्धौ ध्रुवा सिद्धिर्द्युम्नप्रद्युम्नयोरपि ।
दुग्धोपलम्भे सुलभा[16] संपत्तिर्दधिसर्पिषोः ॥ २९ ॥
दुर्दैर्गर्वे[17] समारोप्य नरं श्रीराशु नश्यति ।
दौस्थ्यदत्तावलम्बोधः स तस्मादवरोहति ॥ ३० ॥
जितं लक्ष्मि त्वया यस्यै जनस्तमपि सेवते ।
धनं निकारपूर्वं यः प्रदत्ते प्रेतनाथवत् ॥ ३१ ॥
धनस्याधर्मलब्धस्य मुग्धोलाभेन तुष्यति ।
सुकृतस्य दुरापस्य न तु हानिमपेक्षते ॥ ३२ ॥

[13] जायजन्मूनां B.
[14] निर्वृतिम् B, C, A.
[15] जना: B, A.
[16] सुलम्भा B.
[17] गर्वे A.

आसाद्यते यया स्वर्गः श्रिया सन्मार्गदत्तया ।
त्यक्त्वा तामप्यधर्मेण मूर्खाः क्रीडन्ति दुष्कृतिः ॥ ३३ ॥
स्वयमुत्पादितां लक्ष्मीं पुत्रीमिव मनीषिणः ।
दत्त्वा पात्राय तद्दानफलमेवोपभुञ्जते ॥ ३४ ॥
पित्राद्यैरुपभुक्ता या पुत्राद्यैरपि भोक्ष्यते[18] ।
कामयन्ते न तां सन्तो ग्रामवेश्यामिव[19] श्रियम् ॥ ३५ ॥
तस्करैर्वा दुरादैर्वा हृतं संसहते धनम् ।
कदर्यो नैव सत्कार्ये कल्पयत्यल्पमप्यदः ॥ ३६ ॥
अन्धा एव धनान्धाः स्युरिति सत्यं तथा हि ये ।
अन्योक्तेनाध्वना गच्छन्त्यन्यहस्तावलम्बिनः ॥ ३७ ॥
धनी धनात्यये जाते दूरं[20] दुःखेन दूयते ।
दीपहस्तः प्रदीपेस्ते तमसा बाध्यतेधिकम् ॥ ३८ ॥
आदावेव विकारं यः प्रदर्शयति देहिनाम् ।
भत्रोच्छेदैकमात्रेभ्यो विभवः स्वाद्यते स किम् ॥ ३९ ॥
न संसारस्य वैरस्यमिदं वेत्ति जडो जनः ।
यत्सुखं स सुखाभासो यद्दुःखं दुःखमेव तत् ॥ ४० ॥
रमयन्ति मनस्तावद्भावाः संसारसंभवाः ।
यावन्न श्रूयते साश्रुलोकफूत्कारकाहलः[21] ॥ ४१ ॥
अहो देहभृतां मोहः प्ररोहति महानयम् ।
यदेते सुखमिच्छन्ति विषयैर्दुःखहेतुभिः ॥ ४२ ॥
छत्रच्छायाच्छलेनामी धात्रा चक्रे निवेशिताः ।
भ्रमन्तोपि स्वमात्मानं मन्यते स्थिरमीश्वराः ॥ ४३ ॥

---

18 °भुक्तायां B, A, C; पित्राद्यै° B, A, C; °रुपभोक्ष्य° B, A.
19 ग्रामवेश्यामिव A. 20 दुरं B, A. 21 फूत्कारकाहला B, C, A.

मदान्धास्ते परं लोकं कथं पश्यन्तु भूभुजः।
तमोमण्डलमध्यस्थाश्छत्रच्छायाच्छलेन ये[22] ॥ ४४ ॥

सुखं विषयसेवेति सक्तास्तत्रैव जन्तवः।
यः प्रमोदस्तु[23] तस्यागात्तदास्वादः कचिद्यदि ॥ ४५ ॥

अवश्यं नश्वरे देहे दुर्दमे च यमे द्विषि।
हास्यं नास्याद्विनिर्याति[24] यत्पुंसामिदमद्भुतम् ॥ ४६ ॥

कालेन सौनिकेनेव[25] नीयमानो जनः पशुः।
क्षिपत्येष धिगासन्ने मुखं[26] विषयशाद्वले ॥ ४७ ॥

कायः कर्मकरोयं[27] न तत्र कार्यातिलालना।
भृतिमात्रोचितो[28] ह्येष प्रपुष्टो विचिकीर्षते ॥ ४८ ॥

प्रयोजकान्यकार्येषु नश्यन्त्याशु महापदि।
दुर्मित्राणीव खान्येव[29] बन्धुबुद्धिरधीमताम् ॥ ४९ ॥

योयं जीवितभूतेषु स्नेहग्रन्थिः सुतादिषु।
विभवावसरे[30] पुंसां व्यक्तः सोपि भविष्यति ॥ ५० ॥

दुःखाग्निर्वा स्मराग्निर्वा क्रोधाग्निर्वा ज्वलन् हृदि।
न हन्त[31] शान्तिमायाति देहिनामविवेकिनाम् ॥ ५१ ॥

अविद्यामेव सेवन्ते हन्त विद्यां व्युदस्य ते[32]।
ते दूत्यामनुरज्यन्ते वरारोहाविहायिनः ॥ ५२ ॥

तटस्थः प्रेक्षते योगी जगदस्मिन्भवार्णवे।
मज्जनोन्मज्जने[33] कुर्वद्दुःकृतैः सुकृतैर्निजैः ॥ ५३ ॥

---

[22] तमे° B, A. °ध्यस्थाछत्र° B, A. [23] प्रमोद तत्सागात् तदास्वादः B.
[24] °द्विनिर्यास्ति B. [25] शौनिके° B, A. [26] शापं B, A.
[27] कमकरोयंत° B, A, C. [28] मात्रोचि° B, A. [29] खान्येषु ?
[30] विभावा° B, A. [31] हन्ति B, A. [32] व्युदस्य ये.
[33] मज्जानोमज्जने कुर्वन् B, A, C.

विषयामिषमुत्सृज्य दण्डमादाय ये स्थिताः।
संसारसारमेयोसौ बिभ्यत्तेभ्यः पलायते ॥ ५४ ॥
सत्यं संसृतिगर्तेयं दुःखैः पूर्णा निरन्तरम्।
यतस्तद्व्यतिरेकेण नान्यत्किंचिदिहाप्यते ॥ ५५ ॥
विधौ विध्यति सङ्क्रोधे वर्म धर्मः शरीरिणाम्।
स एव केवलं तस्मादस्माकं जायतां गतिः ॥ ५६ ॥
सुचिरमिति[34] विचार्य पुण्यचर्यां विदुषि चिकीर्षति तत्र तीर्थयात्राम्।
विदधदथ पयः प्रशान्तपङ्कमृतुरपनृत्तमयूरमण्डलोभूत्[35] ॥ ५७ ॥
भवमवरमिमं विमृश्य सम्यग्गलितरसैर्विषयेषु वारिवाहैः।
मुनिभिरिव निबद्धमौनमुद्रैर्गगनवनं विमलात्मभिश्च भेजे[36] ॥ ५८ ॥
पतिरति तपति स्म वासराणामति शुभति स्म विभावरीभुजङ्गः।
जलमति भजति स्म निर्मलत्वं मधुरमति ध्वनति स्म राजहंसी ॥५९॥
पुलिनपरिसरे[37] सरस्वतीनामजनि समागमनं सुखञ्जनानाम्।
भवति यदवलोकनादनाविष्कृतहसितारिमुखं सुखं जनानाम् ॥६०॥
क्षितिवलयजयोज्जिहानवीरा क्रमविरमज्जलपूरसिन्धुतीरा।
शरदवतरति स्म मत्तहंसा दिशि दिशि कासकदम्बकावतंसा ॥ ६१॥
कुटजविटपिनः प्रसूनशून्यानलिपटलं परिहृत्य सप्तपर्णैः।
सममरमत दन्तिदानगन्धैर्जगति समृद्धमुपैति सर्व एव ॥ ६२ ॥
विगलितजगदापदः[38] पयोदाः परिगलिताम्बुविभूतयो बभूवुः।
अहह न सहते महीयसामभ्युदयमियं नियतिर्धिराय वैरा ॥ ६३ ॥
घनमयसमयात्यये विनिद्रः क्रतुपुरुषो भवतीति तथ्यमेव।
दधतुरपरथा कथं विकाशं दिनपतिरात्रिपती[39] तदीयनेत्रे ॥ ६४ ॥

---

[34] सुचीर° B. [35] °पङ्कात्° B, A. [36] °त्मभिश्चजे B.
[37] °परिसरस्य° B. [38] विगलित°. [39] °पतिस्त° A.

सरसिजसुरभिः सरःसमीरः कमलसमृद्धिसमुद्धता[40] धरित्री ।
कलमपि कलहंसकामिनीनां रसितमथ व्यथयांचकार पान्थान् ॥६५॥
कलयति कलशोद्भवे प्रवेशं मलयनगस्थगिते नभोविभागे ।
जगदगदमभूत्पयश्च पेयं ननु महतामुदयो मुदे न कस्य[41] ॥ ६६ ॥
स्तनितमुपरतं पयोधराणां ध्वनिरजनिष्ट ककुद्मतां विशिष्टः ।
परिहृतमवनीतलं शिलिन्ध्रैर्जलमलमक्रियतारविन्दवृन्दैः ॥ ६७ ॥
गवलकुवलयप्रभैः पयोदैर्वियति वृते व्यथिते व्ययेन[42] यस्य ।
अधिपतिरतिमात्रमुष्णमह्नां[43] तदिव सुसंचितमुत्ससर्ज तेजः ॥६८॥
भासः सेव्याः श्वेतभासः[44] प्रदोषे लोकाह्लादोद्दीपिका दीपकाली ।
दुग्धैर्दिग्धा शर्करा यत्र पथ्यं दिष्ट्या दिष्टः समविष्टः पृथिव्याम्॥६९॥
हंसानां नवनलिनीवनोत्सुकानामालपैरिव मुरजिन्मुमोच निद्राम् ।
जम्भारिस्त्रिभुवनभारमुत्थितेस्मिन्नारोप्य स्वधनुरथोपसंजहार ॥७०॥
स्वच्छं वारि निवारितामरधनुर्व्योम व्यपेताम्भसः
पाथोदाः समदाः सितच्छदवधूराशाः सकाशाः पुरः ।
भाति स्म प्रथयन्नहंप्रथमिकां[45] तेजस्विपूस्तेजितः
श्यामाम्भोधरभस्मनेव शशभृद्दिक्कामिनीदर्पणः[46] ॥ ७१ ॥

इति श्रीगूर्जरेश्वरपुरोहितसोमेश्वरदेवविरचिते कीर्तिकौमुदीनाम्नि महाकाव्ये परमार्थविचारोऽष्टमः सर्गः ॥ ८ ॥

---

[40] समुद्धृता C. [41] कस्याः B, A, C. [42] व्यथितव्ययो न ?
[43] °मुष्णमह्नां A. [44] °भासप्र° B, A, C. [45] °हंप्रथिमा° B, A, C.
[46] शशिभृ° C.

# यात्रासमागमनम् ।

चिकीर्षिता श्रीसचिवेन तीर्थयात्राथ सोयं शरदा समेतः[1] ।
महात्मनामीहितकार्यसिद्धौ विधिर्विधत्ते हि सदानुकूल्यम् ॥ १ ॥
धर्मैकमित्रोपनिबन्धनार्थं[2] तेनार्थिमित्रेण चराः प्रयुक्ताः ।
न केवलं स्वेन कृतार्थितेन परैः कृतार्थैः कृतिनः कृतार्थाः ॥ २ ॥
रथानथानन्दविसंष्ठुलोयं[3] लोकप्रयाणप्रवणांश्चकार ।
उपक्रमे पुण्यकृतां क्रियाणां राभस्यमभ्यस्यति को न साधुः ॥ ३ ॥
पाथेयवन्तः पथि योग्ययुग्याः सोपानहः सोदकभाजनाश्च ।
श्रीवस्तुपालेन समं जनौघाः प्रयाणकाय प्रवणा बभूवुः ॥ ४ ॥
आकारितस्तेन कृतादरेण दूरादपि श्राद्धजनः समेतः ।
ययुस्तदीयानि पुनर्यशांसि दिगन्तरेभ्योपि दिगन्तराणि ॥ ५ ॥
समं समग्रैरपि बन्धुवर्गैर्निसर्गबन्धुर्विबुधव्रजस्य ।
शुभे मुहूर्तेथ शुभैर्निमित्तैर्मन्त्री स्वनाथानुमतः प्रतस्थे ॥ ६ ॥
पुरः प्रशस्तां फलपुष्पहस्तां प्रमोदमानः प्रमदां विलोक्य ।
निरन्तरायां पथि तीर्थयात्रां मन्त्रीश्वरश्चेतसि निश्चिकाय ॥ ७ ॥
स्थितः क्षणं क्षीरतरोरधस्तात्कृतानुवृत्तीन्सुजनान्निवर्त्य ।
खरस्य वामं स्वरमध्वगामी[4] शुश्राव च श्रावकचक्रशक्रः ॥ ८ ॥
अक्षेषु नित्यं कृतनिग्रहोपि जग्राह तांस्तान्नियमानमात्यः ।
स्वभावशुद्धाः सुधियो हि तेषां पावित्र्यलाभाय तथापि लोभः ॥ ९ ॥
रथैस्तुरंगैः करभैर्महोक्षैर्जग्मुस्तदा केपि कथंचनापि ।
मन्त्रीश्वरे धर्मधराधुरीणे तस्मिन्विशश्राम भरस्तु तेषाम् ॥ १० ॥

---

[1] सार्वसंमतः B; सार्वसंमत A, C.
[2] B, A, C have मन्त्रिणार्थं in the first line in addition to the text.
[3] विसंस्थुलां C.
[4] स्वरमध्वगामी B, A.

न वाहनं यस्य स तस्य यानं नासीद्वनं यस्य स तस्य वित्तम् ।
न चीवरं यस्य स तस्य वस्त्रं कल्पद्रुकल्पः प्रददौ पृथिव्याम् ॥११॥
भुङ्क्ते[5] स्म सर्वेष्वपि भुक्तवत्सु शेते स्म सुप्तेषु स यात्रिकेषु ।
प्रबुध्यते स्म प्रथमं तदित्थं संघप्रभुत्वं[6] व्रतमाचचार ॥ १२ ॥
प्रभूतभोज्यानि बहूदकानि सगोरसान्युन्मदमानवानि ।
तस्यातिदुर्गेपि पथिप्रयाणान्युद्यानलीलासदृशान्यभूवन् ॥ १३ ॥
यात्राप्रसङ्गेषु जगाम येषु पुरेषु पौरोच्छ्रिततोरणेषु ।
तेषामधीशैः सविशेषमेष संमान्यमानः सममानयत्तान् ॥ १४ ॥
अभ्यर्थ्यमानः पथिकैरनेकैर्वस्तून्यनेकान्यपि वस्तुपालः ।
तेभ्यः प्रभूतानि पथि प्रयच्छन्नाहंकरोति स्म न कुप्यति स्म ॥१५॥
गीतानि जैनान्युचितानि गातुं जनो जगौ वर्त्मनि मध्यमध्ये ।
प्रमोदपूरोद्गतरोमराजिर्निरन्तरं तस्य पुनर्यशांसि ॥ १६ ॥
अनुक्रमेण प्रसृतास्य साधोः साधोरणिर्यात्रिकधोरणानाम्[7] ।
वैमानिकैर्व्योमनि[8] नाकिलोकैर्भूमानयष्टिप्रतिमा व्यलोकि ॥ १७ ॥
पुरश्च पृष्ठेपि च पार्श्वयोश्च परिस्फुरन्तः खरहेतिहस्ताः ।
यात्राजनं वर्त्मनि तस्य शश्वदश्वाधिरूढाः सुभटा ररक्षुः ॥ १८ ॥
समुद्धृतैर्जीर्णजिनेन्द्रहर्म्यैर्नवैः[9] सरोभिश्च सरोजरम्यैः ।
प्रस्थानमार्गः[10] सचिवस्य सोभूदजानतामप्युपलक्षणीयः[11] ॥ १९ ॥
यावन्ति बिम्बानि जिनेश्वराणां श्वेताम्बराणां च कदम्बकानि ।
मार्गेषु तेषां मुषिताश्रितार्तिः पूजां स निर्वर्त्य ततः प्रतस्थे ॥ २० ॥
स पञ्चषैर्निर्विषयप्रपञ्चप्रयाणकैः प्रीणितभव्यलोकः ।
धराधरं धर्मधुरंधरः श्रीशत्रुंजयं शत्रुजयी जगाम ॥ २१ ॥

---

[5] भुङ्क्तेषु C. [6] सङ्घप्रभुत्वव्रत° C. [7] °रिणी A, B, C.
[8] वैमानिकव्यो° B, A, C. [9] समुद्धृतै° B, C, A. [10] °मार्ग° B.
[11] °लक्षणीयम् B, A, C.

आरुह्य सद्यादपि सुन्दरेस्मिन्नद्मोश्रये कश्मलमुक्तचेताः ।
मन्त्री मिलन्मर्त्यकृतोपमर्दं[12] कपर्दिनं नाम ननाम यक्षम्[13] ॥ २२ ॥

स कर्दमैस्तस्य तनुं कपर्दियक्षस्य यक्षोपपदैर्विलिप्य ।
पुष्पैरनेकैर्विलसद्विवेकस्त्रिलोकपूज्यस्य चकार पूजाम् ॥ २३ ॥

अध्वभ्रमध्वस्तसमस्तपापभारेण भूरेणुभृता जनेन ।
शृङ्गावलिव्याप्तवियन्मुखोपि सोयं सुखेनारुरुहे महीन्द्रः ॥ २४ ॥

तत्रादिनाथस्य नमस्यमूर्तेः[14] स्नानं[15] च पूजां च विधाय मन्त्री ।
पुरः कुरङ्गीनयनाः प्रमोदनृत्यात्मना नृत्यमकारयत्सः[16] ॥ २५ ॥

संश्लिष्टमष्टापदपृष्ठपट्टे तं दृष्टवान्विष्टपवन्दनीयम् ।
अमेयतेजोमयमण्डलस्थं यथा पुमांसं परमं स मन्त्री ॥ २६ ॥

विरच्यमाने सचिवेन तेन पूजाविधौ पूज्यतमस्य तस्य[17] ।
सकुङ्कुमस्नानजलच्छलेन गलन्निवालोक्य[18] ततोङ्गरागम्[19] ॥ २७ ॥

न केवलं केवलिचक्रवर्ती स्वचक्रवर्ती सचिवस्य सोभूत् ।
शुश्रूषयाप्येष[20] विशेषवत्या तत्याज नान्तः करणं यदीयम् ॥२८॥

श्रीनाभिसूनुर्मृगनाभिमुख्यैः पूजोपहारैः प्रचुरैः प्रसन्नः ।
मन्ये स्वभावादपि वीतरागः स स्फीतरागः[21] सचिवे बभूव ॥२९॥

स श्वेतपीतैर्वसनैर्व्यधत्त धाम्नि प्रभोस्तस्य महापताकाम्[22] ।
सरोजराजीरजसानुविद्धो जिग्ये यया सिद्धसरित्प्रवाहः ॥ ३० ॥

धर्माय निर्मापयति स्म तस्मिन्मन्त्री धरित्रीभृति वस्तुपालः ।
श्रीनेमिपार्श्वप्रभुहर्म्ययुग्ममयुग्मनेत्राचलशृङ्गचारु ॥ ३१ ॥

---

[12] °मीलन्म° B, C, A. [13] यक्षाम् A. [14] नमस्य° B. [15] स्नानं B, A, C.
[16] नृत्यौ° B [17] तस्या A. [18] गलन्मि° B. [19] लोक्यत सोङ्गरागः(?)
[20] शुश्रुषया B, C, A. [21] फीतरागः B. [22] महापताकाः B, C, A.

प्रासादसौन्दर्यविलोकनेन[23] संभूतभूयस्तरसंमदानाम् ।
विभान्ति तत्कान्तिकरम्बितानि कृतस्मितानीव दिशां मुखानि ॥३२॥
यदुत्तमाङ्गस्थितशातकुम्भकुम्भध्वजस्फूर्जदभीशुभिन्नाः ।
अल्पेप्यनल्पा अपि वासरान्ते चिराद्विराजन्ति कराः खरांशोः ॥३३॥
कथं न विश्वैककुटुम्बकोसौ यस्त्यक्तभेदं घटयांचकार ।
यन्मण्डपे चण्डपपौत्रपौत्रः स्वपूर्वजानां सुहृदां च मूर्तीः[24] ॥ ३४ ॥
स्वस्यानुजस्यापि च मूर्तियुग्मं तुरङ्गयुग्मस्थमचीकरद्यः ।
मनीषिणां मुख्यतमोपि मन्ये वृषस्थमात्मानमयं न वेत्ति ॥ ३५ ॥
शैलोपकण्ठेयमकुण्ठबुद्धिः सरः सरस्वत्सदृशं चकार ।
उष्णेपि नोष्णानि भवन्ति यस्य वारीणि रीणागध्वजाविताति[25]॥३६॥
त्रिचाणि तत्रैव दिनानि नीत्वा प्रीत्वार्थदानैः सुकृतं यशश्च ।
कथं चिदापृच्छ्य तमीशमाद्यं माद्यन्नसौ रैवतकं जगाम ॥ ३७ ॥
तमुज्जयन्तापरसंज्ञि(ज्ञ)मद्रिमाज्ञाविधेयाखिलसंघलोकः ।
स विश्वमुच्चैरमृतेन सिञ्चन्नुपागमन्नव्य इवाम्बुवाहः ॥ ३८ ॥
तुरंगमाणां चरणाग्रघातैरुद्धूतधूलीपटलच्छलेन ।
तस्य प्रयाणे प्रणयिप्रियस्य नगोनुगच्छन्निव स व्यराजत् ॥ ३९ ॥
नरो न रोगापदमाप कोपि न क्वापि यानव्यसनं बभूव ।
कस्याप्यभूत्तत्सुकृतप्रभावान्न वस्तुनो हानिरहानि तानि ॥ ४० ॥
सुखेन सार्थः पथि यात्रिकाणां सिन्धूरगाधा अपि तास्ततार ।
संसारनामानमपारमब्धिं स तु स्वयं लङ्घयितुं प्रवृत्तः ॥ ४१ ॥
मनागनालोकितदुर्निमित्तः पदे पदे प्राज्यतृणोदकाढ्यः ।
अहिंस्रजीवस्य बभूव तस्य मार्गः सुदुर्गोपि[26] किलानुकूलः ॥ ४२ ॥

---

[23] प्रसाद B, A, C. [24] मूर्ता B, C, A. [25] Evidently the text of the last line is wrong. It appears to have been corrupted from वारीणि रीणाद्युगवीजितानि. [26] सुदुर्गोपि C.

तीर्थैः समग्रैरुपचर्यमाणं[27] सिद्धैरनेकैरुपरुध्यमानम् ।
रत्नैरनन्तैरुपचीयमानं भूतैः प्रभूतैरुपजीव्यमानम्[28] ॥४३॥
शृङ्गैरुदग्रैर्दिवमुल्लिखन्तं दिशः स्पृशन्तं पृथुभिश्च पादैः ।
तलेन धात्रीतलमाप्नुवन्तं हरन्तमन्तःकरणानि कान्त्या॥४४॥
कचिन्नदीः[29] काञ्चनकान्तिजुष्टाः[30] कचिन्नदानुन्मदराजहंसान्[31] ।
कचिद्द्रुमानार्द्रफलप्रवालान्कचिच्च धातून्विविधान्दधानम्[32] ॥४५॥
सिताम्बरं मन्त्रिवरस्तमग्रनिविष्टनिर्विष्टपयोदभङ्ग्या ।
समाधिबन्धादिव[33] निश्चलाङ्गं मुनीन्द्रतुल्यं तमगं ददर्श ॥४६॥ कुलकम्
विकासवद्भिर्व्रततिप्रसूनैरन्तःप्रसुप्तभ्रमरैर्यदीयाः ।
वनाधिदेव्यस्तमितोपयान्तं[34] विलोकयन्ति स्म विलोचनाभैः ॥४७॥
सरांसि राजन्नलिनीवनानि वनानि वेल्लन्नवपल्लवानि ।
मुदं निदाघज्वरितस्य यस्य कुर्वन्ति गन्धर्ववधूजनस्य ॥ ४८ ॥
स्थितस्य यस्योपसमुद्रमभ्रैर्मेघावलीवेष्टितमेखलस्य ।
बभूव नेत्रश्रुतिनेत्रभाजा सतीर्थ्यता मन्थमहीधरेण ॥ ४९ ॥
रत्नप्रदीपेषु गुहागृहेषु तान्ता रतान्तावसरे सुरस्त्रीः ।
रेणुं किरन्तः कुमुदाकराणां तमीसमीराः सुखयन्ति यत्र ॥ ५० ॥
अभ्रंलिहप्रस्थशिरःस्थशुभ्रपयोदसंदोहमिषेण धर्मः ।
कलेः खलस्य प्रसरं विलोक्य निराकुलस्तिष्ठति यत्र दुर्गे ॥ ५१ ॥
उदग्रहस्तैः करिभिर्विमुक्ता मुक्ताफलानां श्रियमाश्रयन्तः ।
अम्भःकणा दिङ्मुखभूषणानि निरन्तरं यत्र तरङ्गयन्ति ॥ ५२ ॥
निशासु यस्मिन्नवतंसितानां समीपवर्ती जगतीरुहाणाम्[35] ।
तारागणः पुष्यति पुष्पशङ्कां मुग्धस्य सिद्धप्रमदाजनस्य ॥ ५३ ॥

[27] रुपचयमाणं C, A; रूपचयप्रमाणं B. [28] °रुपजीयमानम् A. [29] °श्चिन्नदी B; श्चिन्नदी A. [30] जुष्टा B, C, A. [31] °दारुन्म° B, A, C. राजहंसाः [32] विधिधानदधानम् B. [33] समाधि° B. [34] °देव्याः A. [35] जगतांरु° B, A, C.

अधित्यकाधिष्ठितपानगोष्ठी[56]गीतोत्कितोत्सङ्गकुरङ्गरुद्धः ।
मृगीदृशां राजति यत्र रात्रिकरः करप्राप्य इव क्षपासु ॥ ५४ ॥
यस्मिन्विदग्धा अपि सिद्धवध्वः संभूतभूतेषु वनान्तरेषु ।
फलैर्विपक्वाग्रमुखैः सवृक्षान्कीरान्विरावैरुपलक्षयन्ति ॥ ५५ ॥
न तद्वनं यत्र न कोकिलानां नृत्यन्ति गीतैरिव नीलकण्ठाः ।
यस्मिन्गिरौ तानि सरांसि यानि स्वेनेव शैत्येन वहन्ति कम्पम् ॥ ५६ ॥
यस्मिन्सदा स्मेरसरोजराजिविराजितासंख्यसरःपरीते ।
आकर्णयन्तोऽपि नवाब्दशब्दान्न मानसाय स्पृहयन्ति हंसाः[37] ॥ ५७ ॥
दिनाधिनाथेन[38] पुरो निरस्तमस्तस्थिताचन्द्रमसश्च बिभ्यत् ।
यत्कन्दराः संश्रयते तमिस्रं दत्ते हि दुःस्थस्य पदं महात्मा ॥ ५८ ॥
फलानि पुष्पाणि मनोरमाणि[39] यस्य द्रुमाः[40] प्रत्यहमुद्वहन्ति ।
अत्यन्तभक्तेषु भवत्यवश्यं श्रिये महत्यै महतामुपास्तिः[41] ॥ ५९ ॥
श्रीनेमिनाथेन जिनेश्वरेण पवित्रिते यत्र धराधरेन्द्रे ।
हिंस्राः समुज्झन्ति[42] परःसहस्राः स्वभावसिद्धामपि वैरबुद्धिम् ॥ ६० ॥
तं गोत्रमुख्यं विधृतक्षमं च सद्वंशजातं च समुन्नतं च ।
श्रीवस्तुपालः कमलाढ्यकुल्यं स्वकल्पमुर्वीधरमारुरोह[43] ॥ ६१ ॥
रीणान्धुरीणान्युगतो वियुज्य जनेषु यातेषु तमद्रिमुच्चैः ।
अस्थायि तेषां शकटैरधस्तान्न सद्गतिः स्याद्वृषवर्जितानाम् ॥ ६२ ॥
न केवलं शैलशिरोधिरूढः समानमानानधरीचकार ।
अधोविधातुं स विशुद्धबुद्धिः संसारमप्यारभते स्म मन्त्री ॥ ६३ ॥
श्रीनेमिनामानममानवीर्यस्तेजोभिरप्युज्ज्वलयन्तमाशाः ।
जिनेन्द्रमत्रैव[44] जनेन्द्रमन्त्री निदर्शनातीतमसौ ददर्श ॥ ६४ ॥

---

[36] गीतोत्कर्ता B, A, C. [37] हंसान् B, C, A. [38] विनाधि° B, C, A.
[39] मनोहराणि A. [40] द्रुमाग्र B, A. [41] °पासित C, B, A.
[42] समुन्ति B, A; समुद्यन्ति C. [43] °मुर्वाधर° B, C, A. [44] मंत्रैव C, B, A.

स्नानं स पात्रप्रतिपादितार्थस्तीर्थोदकैस्तीर्थकरस्य तस्य ।
कृत्वा च कृष्णागुरुचन्दनाद्यैर्विलेपनं धौतमलानुलेपः ॥ ६५ ॥
घनैः प्रसूनैर्वसनैरनूपैः[45] पत्रैः पवित्रैरशनैः प्रधानैः ।
नृत्तैर्वधूनां च गृहीतचित्तैर्गानैः सदानैर्विततामपूज्यम्[46] ॥ ६६[47] ॥
प्रभोः सपर्यावसरेषु तस्य कर्पूरपूरैः परितः स्फुरद्भिः ।
तमग्रिमेकं सुरभीचकार दिशो यशोभिः स पुनः समग्राः ॥ ६७ ॥
श्रीनेमिनाथावसथान्तरस्थे कर्पूरकृष्णागुरुधूपधूमे ।
पलायमानः कलिरेष कालस्तत्कालमासीन्मशकानुकारी[48] ॥ ६८ ॥
धर्मक्रियाविस्मृतराजकार्यस्तत्रैव निन्ये[49] स बहून्यहानि ।
असक्तमासक्तमतीप्सितेर्थे[50] कालातिपातं[51] न हि वेत्ति चेतः ॥६९॥
नमन्नमन्दप्रतिभः प्रभासे चन्द्रप्रभुं चन्द्रसमानकीर्तिः ।
श्लाघाचलत्कन्धरमालुलोके लोकेन सौराष्ट्रनिवासिनासौ ॥ ७० ॥
अभ्यर्च्य भक्त्या भवमत्र तीर्थे श्रीसोमनाथाभिधया प्रसिद्धम् ।
पत्रप्रसूनाञ्जलिना प्रदत्तो जलाञ्जलिस्तेन पुनर्भवाय ॥ ७१ ॥
तेनोपनीतैर्घनसारधूपैः स्वमङ्गमङ्गारितमीनकेतुः ।
सकेशलक्ष्मेश्वरकन्धरालुश्चिराय विश्वं सुरभीचकार ॥ ७२ ॥
अनेन सत्यापितसद्गुरूपदेशेन तद्देशनिवासिनीनाम् ।
सुवासिनीनां वदनाब्जराजौ निवेशिता स्वस्तुतिराजहंसी ॥ ७३ ॥
आत्मानमानतजिनेन्द्रपदारविन्दं
कृत्वा कृतार्थमयमर्थिजनं च दानैः ।
मन्त्री निमन्त्रितजनेन सहप्रकर्षः
पस्त्यं प्रयातुमथ तं प्रभुमापपृच्छे[52] ॥ ७४ ॥

---

[45] °नूनै° C. [46] विततान पूजाम् ? [47] B omits this verse altogether: evidently a mistake as the following verse is marked 67.
[48] °मासान्मश° B, C, A. [49] नित्ये B. [50] °मतीप्सितेर्थे° B.
[51] कालेपिपा° A; कालापिपा° B; कालोपिपा° C. [52] °मापगछे° B, C, A.

अस्य प्रभोः पितुरिव क्षणमप्यशक्तः[53]
सोढुं वियोगमहमित्यवगम्य सम्यक् ।
चौलुक्यचन्द्रसचिवः शुचितैकवित्ते[54]
चित्ते निवेश्य जिननाथमथ प्रतस्थे ॥ ७५ ॥

व्यावर्तमानमथ[55] मानवराजमन्त्रि-
राजं मुदा प्रतिपथं प्रमदास्तदानीम् ॥
पश्यन्त्यदृष्टमिव तं शतशोपि दृष्टं[56]
तृप्तिर्भवेन्न हि दृशां प्रियदर्शनेषु ॥ ७६ ॥

आगत्य स्वपुरं पुरन्दरसमस्यानम्य पादौ प्रभोः
स क्षेमेण समेत्य चात्मशरणं व्यापारिणामग्रणीः ।
देशाय प्रजिघाय संघजनतां सत्कृत्य तां कृत्यवि-
न्निर्विघ्नाः कृतिनां भवन्ति हि समारब्धक्रियासिद्धयः ॥ ७७ ॥

दूर्वापुष्पफलाक्षतैरुपचितं पात्रं दधत्यः करे
यस्मै मङ्गलमङ्गनाः[57] प्रणयिनां चक्रुस्तदा संमदात् ।
(स्फीतानि) स्वयशांसि बन्दिगदितान्याकर्णयन्कर्णत्र-[58]
दानोद्दानकराम्बुजः स जयतु श्रीवस्तुपालश्चिरम् ॥ ७८ ॥

इति श्रीगूर्जरेश्वरपुरोहितश्रीसोमेश्वरदेवविरचिते कीर्तिकौमुदीमहाका-
व्ये यात्रासमागमनोनाम नवमः सर्गः ॥ ९ ॥

---

[53] मन्यशक्तः B, A, मन्यसक्तः C.
[54] शुचितैकचित्तोपिस्वे B, C, A.
[55] व्यावृत्तमान॰ C.
[56] 'मिवशतशा' B, A; तृप्ति॰ C.
[57] 'मङ्गनाप्रण' B, A
[58] स्वयशांसिगदि॰ B; स्वयशांसिबन्दि॰ C, A.

# NOTES.

## CANTO I.

**P. 1. St. 1.** यामिकाः—guards or watchmen. Compare the vernacular words पाहरा and पाहरेकरी which are derived from प्रहर, a synonym of याम.

**P. 1. St. 2.** Mark the double sense of गिरिभू Pârvatî, the daughter of Himâlaya and mountain-land ; पयोधर ; चन्द्रक the moon and the circular spots on the feathers of a peacock ; and नीलकण्ठ Śiva and a peacock.

**P. 1. St. 3.** This refers to the form, half male and half female, in which Śiva is worshipped in some places. Such images are called अर्धनारीनटेश्वर. There is a temple in the Sholapur Collectorate in the Dekkan in which there is a small image of this kind.

**P. 1. St. 6.** Mark the two meanings of सरस्वतीः—the goddess of learning and the *river* of that name ; and those of उपास्ति viz., worship and vicinity.

**P. 2. St. 11.** सुपर्वोपाश्रितम्.—सुपर्वन् means a god ; the parts into which Mahâbhârata is divided are also called पर्वन्. The adjective is intended to apply to स्वर्ग as well as to भारत.

**P. 2. St. 13.** माघसेवाम्—the study of Mâgha's poem Śiśupâlavadham ; also मा अघसेवाम्. The double sense of the verse is clear.

**P. 2. St. 14.** तमीश्वर, when taken as one word means the moon, the lord of the night. The expression is also intended to be read as तम् ईश्वरम् meaning the well-known Śiva. जनितार्जुनतेजस्कम् means 'one who sheds a white light,' and also 'one who gave power to Arjuna.' The word कुवलयप्रिया also bears a double meaning: कोः पृथिव्याः मण्डलस्य प्रिया or कुवलयानां कमलानां प्रिया.

**P. 2. St. 15.** बाणध्वनौ—on hearing the words of the poet Bâṇa. It also means on hearing the sound of a musical instrument (वंशी) of that name. अनध्याय means cessation from study. It includes temporary stoppages of the lessons and also long holidays. They are variously enjoined by the various Smṛitis, and it would appear that, in order to avoid distraction and secure concentration, old teachers were very

liberal in granting remissions of study. The longest suspension of study, namely for one year, is enjoined for certain wild and ferocious beasts and sinners passing between the teacher and the pupil: गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नावावब्दमनध्याय:। If a less fierce animal happens to pass between the teacher and the class, shorter holidays are granted. अरण्यमार्जारसर्पनकुलपश्वनखादैरन्तरागमने त्रिरात्रम्। The holiday referred to in the text is a short one lasting as long as the disturbing cause lasts. Yâjñavalkya enumerates thirty-seven of these as follows:

> श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिस्वने ।
> अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ॥
> देशेशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
> भुक्त्वार्द्रपाणिरम्भोन्तरर्धरात्रेतिमारुते ॥
> पांसुप्रवर्षे दिग्दाहे संध्यानीहारभीतिषु ।
> धावत: पूतिगन्धे च शिष्टे च गृहमागते ॥
> खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे ।
> सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदु: ॥

बाण as used here is explained by हरदत्त to mean a musical instrument वंश: or शततन्तुर्वीणा. शिष्टागमनाध्याय is mentioned in Uttararâmacharita Act IV. Some of the अनाध्याय refer to the bodily position and health of the student. Manu numerates these as follows:—

> शयान: प्रौढपादश्च कृत्वा चैवावसक्थिकाम् ।
> नाधियीतामिषं जग्ध्वा सूतकान्नाद्यमेव च ॥
> न विवादे न कलहे न सेनायां न संगरे ।
> न भुक्तमात्रे नाजीर्णे न वमित्वा न सूतके ॥

It will be seeen from the lists of अनध्याय that the institution is an extremely practical one.

P. 2, St. 17. This verse contains a suggestion regarding the river Sarasvatî whose source is in the Mânasa lake, and which does not therefore get turbid in the rainy season like other rivers which take their rise in mountains. घनै: means a cloud; as an adjective qualifying दुर्जनै: it may be taken to mean thick or numerous.

P. 2, St. 18. ताम्रपर्णी a river in Southern India famous for rich stones found in mines on its banks.

P. 2, St. 19. सुमनसां श्रेष्ठम् and दर्पकोपचितम् are intended to be under-

stood in a double sense. The former may mean साधूनां श्रेष्ठम् or देवानां श्रेष्ठम्. The latter may be solved as दर्पकेण अमङ्गेन उपचितम् and also दर्पकोपाभ्यां मद्दरोषाभ्यां चितम्. नीलकण्ठ, the poet as well as god Śiva.

P. 2. St. 27. दन्तद्युता—instrumental singular of दन्तद्युत् (feminine) construe: दन्तद्युता मुखे भाती प्रकाश्यते। स्वर्णमुद्रया करे श्रीः प्रकाश्यते।

P. 3. St. 28. विधिरक्षेश नन्दिन्यौ—Sarasvatī and Lakshmī respectively.

P. 3. St. 30. This verse is not very easy. निष्याला मलयद्रुमाः and अमालिन्यकृतोदीपाः, which are in apposition to साधवः, each of them contain a व्यतिरेक in favour of साधवः and one would expect हृत्रापदः परित्यक्ताः to contain a similar व्यतिरेक too, but it is not possible to make out one from that expression. It must be taken to mean free from any embarrassment of the heart: हृत्रापदः being taken as कर्तरि षष्ठी and equivalent to हृत्रापदा. हृत्रापदा परित्यक्ताः is an adjunct of साधवः.

P. 3. St. 31. It is interesting to notice how the idiomatic expression, गुणान्गृह्णन्ति which means 'appreciating merit,' is used by taking advantage of its primary meaning to support an apparent contradiction between being good men and avariciousness.

P. 4. St. 34. The double meaning of रसवत्यां मालिन्यं जनयन्ति, one applicable to धूम and another to wicked men, may escape one whose ear is not accustomed to hear the word रसवती (ver. रसोई) applied to cooking. Its original meaning is a kitchen.

P. 4. St. 38. दोषज्ञ a wise man; वकरभूमि a place where sweepings are heaped up. घनरासभा means crowded with asses and qualifies वकरभूमिः. सहसाघनरा qualifies सभा; it may be explained as साधेः अपसहितैः नरैः सहिता. त्याज्या qualifies both सभा and वकरभूमी.

P. 4. St. 40. रतवानिव वायसः. It is considered as an ill omen to see crows pairing. The sight presages death to the person seeing it. Expiatory ceremonies are prescribed; and the popular belief is that bad consequences are averted if a false rumour regarding the death of the man seeing the crows is spread among his relatives and friends. शान्तिसार a book treating of expiatory ceremonies quotes the following verses from a Purāṇa:

काकस्य मिथुनं पश्येत्काकः शिरसि चेद्विशेत् ।
शिरस्युरसि वा कुर्यात्पक्षाघातं नखैस्तथा ॥
विदारणं च कुरुते शयानं च स्पृशेद्यदि ।
तदा वदेत्तु मरणं महारिष्टमथापि वा ॥

The grammar and syntax of the text, it will be observed, exhibit the characteristic looseness of later Purâṇas or later additions to more ancient Purâṇas.

P. 5. St. 51. शतचन्द्रं नभस्तलम्—This is a well-known example of what is called समस्यापूरण, or the feat of readily making verses containing a given collection of words which by itself may have no meaning at all or may even involve a contradiction.

दामोदरकराघातविह्वलीकृतचेतसः ।
आसीच्चाणूरमल्लस्य शतचन्द्रं नभस्तलम् ॥

is another completion of the same kind.

P. 6. St. 59. This is an उत्प्रेक्षा on the flags waving on the tops of houses. It may be translated as follows:—Which (city), having conquered all other cities, seems, by the flags on its palaces, to betake to wings in order to conquer the capital city of Indra.

P. 6. St. 60. गजपुर—Poets often called हस्तिनापुर by this name. It does not, however, seem to be the town meant here. For it is described as being on the banks of the Ganges. This is another city which is mentioned in the Mahâbhâshya also. अनुगङ्गं हास्तिनपुरम्. See the Bhâshya on Pâṇini II. 1. 16.

P. 6. St. 62. An outrageous conceit. Aruṇa feeling cold when fanned by the flags on the temples, for a time is not afflicted by the sun though blazing fully (youthful).

P. 6. St. 64. When taken with कौरवेश्वरसैन्यस्य, वल्गद्गाङ्गेयकर्णस्य is to be construed as वल्गन्तौ गाङ्गेयकर्णौ यस्मिन् तत्; in which Bhîshma and Karṇa are moving about; and when taken with स्त्रीजन as वल्गत् गाङ्गेयं यत्र तौ वल्गद्गाङ्गेयौ । एतादृशौ कर्णौ यस्य सः वल्गद्गाङ्गेयकर्णः—from whose ears ornaments of gold were hanging down.

P. 7. St. 67. The beautiful damsels of the city are described as the treasure of the god of love, because they bear the stamp of his royal seal in the form of the disc of the moon reflected in their bright cheeks.

**P. 7. St. 76.** Both the readings can be interpreted, according to one of them the epithet means 'charming like a stream of the favour of Śiva.' The other, adopted in the text is decidedly better. It means 'charming by the numerous temples of Śiva on its sides.' राजहंसैरलंकृतम् qualifies both सरः and नगरम्. When it qualifies सरः, राजहंसैः means by birds of that name, and when it qualifies नगरम् it is to be understood as राजान एव हंसास्तैः.

**P. 7. St. 77.** When applied to Krishṇa the epithets mean 'well-known as the holder of the discus and the conch-shell'; 'taking various incarnate forms'; and beloved of Kamalâ or Lakshmî. When applied to the lake they mean 'well known for its conch-shells and chakravâka birds'; 'having numerous flights of steps'; and 'beautiful on account of the lotuses in it.'

P. 8. St. 80. The poet regards the shining particles of foam as so many stars which have resorted to the lake to protect themselves from the heat of the sun.

P. 8. St. 81. श्रेयः सिन्धुरवर्णकम्बलधुरं धत्ते सरःसोदरः—This line offers some difficulty. The meaning is clear. The lake is described, on account of the various colours it shows, as resembling a shawl made into the trappings of an elephant. वर्ण means the housings or trappings of an elephant. The difficulty is with regard to the final र् of धुर्. It should be धुराम् according to Panini V. 4, 72. There appear to be two ways out of the difficulty. Either one must have recourse to the optional nature of all rules regarding the final vowels and consonants of compounds; समासान्तविधीनामनित्यत्वम्; or what is nearly the same thing, one must recognise a usage sanctioning the form. See Siddhânta Koumudi, Samâsâśrayaṇa. विष्णुपुरं क्लीबत्वं लोकात्। In Böthlingk's Pâṇini the example of धुर् is given as ending in a masculine termination राजधुरः but the Siddhânta Koumudi reads राजधुरा instead. It would seem best to read धुरां and take श्रेयः as a part of the compound which would then mean 'the foremost position among excellent shawls forming the trappings of an elephant.'

# CANTO II.

P. 9. St. 3. हास्तिकम् a collection of elephants. See Pâṇini IV. 2, 47.

P. 9. St. 4. सपत्राकृत—into whose body an arrow is driven up to the feathers. See Pâṇini V. 4, 64.

P. 9. St. 8. पङ्क्त्यवर्तित्व, कोशाविलास and वंशभेद apply in different senses both to a row of bees and a sword.

P. 9. St. 9. महीपतिमतल्लिका an excellent king.

P. 10. St. 13. कालेन &c. This refers to the still prevailing belief that treasures hidden under the earth are usually guarded by cobras. It is further believed that those who keep money under ground become cobras after death, and keep watch over their treasure. They allow only those persons to touch the money for whose use they left it.

P. 10. St. 17. एकधारा &c. The play upon the word धारा will not escape notice. In एकधारापतिः it means the city of that name in Malwá; द्विधार means doubled-edged, and शतधार means the weapon of Indra.

P. 10. St. 19. धात्रीं &c. This line as found in the texts is unintelligble. The reading suggested by C may be translated thus:—The king Śrîkarṇa governed the earth with the oceans as the helm governs a boat. But one would expect that पोत्री should be in the accusative as धात्रीं is. The word कर्ण is a proper name. It also means a helm.

P. 10. St. 21. इतीव अन्विरे &c. The line has two meanings. It means "it was as it were on this account that their likings followed Karṇa;" and also "the news entrusted to them always went from ear to ear." This last refers to the popular belief that women cannot keep a secret. Kuntî, the mother of the Pâṇḍavas, concealed from them the secret of Karṇa having been their brother, and thus made them commit unconsciously the sin of fratricide. She revealed the fact after the death of Karṇa; and Yudhishṭhira, who became angry at her conduct, cursed women thus: पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः । अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ॥ Popular belief attributes the supposed failing of women to this curse.

P. 11. St. 22. अर्जुन white and the Pâṇḍava of that name.

P. 11. St. 26. The double meanings of हरि (a horse and a monkey),

*strength* was equal. By going up higher, a man stands higher than his equals, but his strength does not increase. Yet this was the case when the minister climbed the Raivataka mountain.

P. 71. St. 66. विततामपुञ्ज्यम् unless the reading suggested in the foot-note is adopted, I cannot translate this verse.

P. 71. St. 69. असत्कम् would seem to require some modifying word, such as अन्यत्र or विषयेषु.

P. 71. St. 71. जलाञ्जलिर्दत्तः funeral offering of water was made. Comp. अन्यथा सिक्तं मे तिलोदकम् Śákuntala Act III.

P. 71. St. 72. An allusion is here made to the story that Râvaṇa cut off his own heads and worshipped Śiva with them. कन्धरा-भिधिराय विस्रम् would have been much better. It would have clearly explained why the body of Śiva was विस्र. stinking. As it is, it qualifies अङ्कुरितमीनकेतुः and may be translated as having the hairy head of the king of Laṅkâ.

P. 72. St. 78. The third line is imperfect in all the three manuscripts. Some such word as the one proposed in the text seems to have been omitted in copying.

---

BOMBAY: PRINTED AT THE EDUCATION SOCIETY'S PRESS, BYCULLA.

# INDEX OF NAMES OF PERSONS & PLACES OCCURRING IN THE TEXT.

to his accession to the throne served Siddharâja Chauḍa of Aṇahillavâḍa Paṭṭaṇa. See Rasmala, p. 90 to p. 118. Edition of 1878.

Jagatkampana II. 11, another name of king Vallabharâja.

Jayanta V, 52, the name of a soldier.

Jayasimha II. 23, Siddharâja, a king of Aṇahillavâḍa Paṭṭaṇa,

Jayasimha III. 37, the son of Vastupâla.

Jângala II. 46, 53, the name of a people ?

Kachchha II. 4, Cutch.

Karṇa II. 19, &c., a king of Aṇahillavâḍa Paṭṭaṇa.

Kâlidâsa I. 26, the well-known poet of Ujjayinî.

Kâśi I. 58, Benares, usually spelt as Kâśî.

Khangâra II. 25, a prince of the family of Junâgaḍa. See Râsmâlâ, p. 118.

Kumâra II. 84, the father of Someśvara, the poet.

Kumâradevî III. 22, the mother of Vastupâla.

Kumârapâla II. 40, a king of Aṇahillavâda Paṭṭaṇa.

Kunkuṇa II. 47, the Concan.

Kuntasimha V. 59, the name of a soldier.

Laksha II. 4, Lâkhâ Phulâni, who was called Badsha of the west. His capital was Kellakot. See *Indian Antiquary* for December, 1873, p. 339.

Lakshmadeva IV. 82 ?

Lalitâdevî III. 36, the wife of Vastupâla.

Lankâ I 57, the well-known capital of Râvaṇa.

Lavaṇaprasâda II 67, &c., IV. 57, a chief of Dholka.

Lâṭa II. 3, IV. 57, the southern portion of Gujerat.

Lâvanyaprasâda III. 50, the same as Lavaṇaprasâda.

Lâvaṇyasimha III. 50, the son of Tejaḥpâla.

Madhûpaghna I. 60. It is believed to be the same as the modern Mathurâ. See Raghuvanśa XVII.

Mahî IV. 50, a river in Gujerat.

Mahobaka II. 33, a town in Bundelkhaṇḍa, the capital of the Chanḍel dynasty. The king Madanavarmâ who ruled in this city at the time of the expedition of Jayasimha has left his memory in a tank called Madanasâgara. See Cunningham's Ancient Geography of India. Budhist Period, p. 485. Jaina writers describe him as a luxurious prince, who called Jayasimha, his conqueror, a labourer.

Malaya I. 30, a range of mountains.

Malladeva III. 24, 27, 28, a brother of Vastupâla.

Mallikârjuna II. 48, the name of a king, who ruled over the Concan.

Maru IV. 55, 59, Mârvâda.

Mâgha I. 13, 26, the author of Śiśupâlavadham.

Mâlava II. 10, 30, Mâḷvâ.

Mânasa I. 78, the great lake in Thibet.

Mithilâ I. 58, the capital of the Videhâs. It is identified with modern Tirhoot.

# APPENDIX A.

---

||९०|| वन्दे सरस्वतीं देवीं याति या कविमानसम् |
नीयमाना निजं *व ध (वेश्म) वान (मा) नसवासिना||१||

यः | न्ति मा न प्य भ. . त्त का मः

(यः कान्तिमानप्यपवृत्तकामः) शान्तोपि दीप्तः स्मरनिग्रहाय |
निमीलिताक्षोपि समग्रदर्शी स वः शिवायास्तु शिवातनूजः ||२||

अणहिलपुरमस्ति स्वस्तिपात्रं प्रजाना-
मज र जिरघुतुल्यैः पाल्यमानं चुलुक्यैः |
निरमतिरमणीनां यत्र वक्त्रेन्दुमन्दी-
कृत इव सितपक्षप्रक्षयेप्यन्धकारः || ३ ||

तत्र

प्राग्वाटान्वयमुकुटं कुटजप्रसूनविशदयशाः |
दानविनिर्जितकल्पद्रुमषण्डश्चण्डपः समभूत् || ४ ||
चण्डप्रसादसंज्ञः स्वकुलप्रासादहेमदण्डोस्य |
प्रसरत्कीर्तिपताकः पुण्यविपाकेन सूनुरभूत् || ५ ||
आत्मगुणैः किरणैरिव सोमो रोमोद्गमं सतां कुर्वन् |
उदगादगाधमध्यादुग्धोदधिबान्धवात्तस्मात् || ६ ||

---

* The words in brackets are proposed. The letters written at greater than ordinary intervals are those which appear doubtful in the inscription.

एतस्मादजनि जिनाधिनाथभक्तिं
बिभ्राणः स्वमनसि शश्वदश्वराजः ।
तस्यासीद्दयिततमा कुमारदेवी
देवीव त्रिपुरगुरोः कुमारमाता ॥ ७ ॥

तयोः प्रथमपुत्रोऽभून्मन्त्री लूणिगसंज्ञया ।
दैवादवाप बालोऽपि सालोक्यं वासवेन सः ॥ ८ ॥

पूर्वमेव सचिवः स कोविदैर्गण्यतेस्म गुणवत्सु लूणिगः ।
यस्य निस्तुषमतेर्मनीषया धिक्कृतेव धिषणस्य धीरपि ॥ ९ ॥

श्रीमल्लदेवः श्रितमल्लिदेवस्तस्यानुजो मन्त्रिमतल्लिकाभूत् ।
बभूव यस्यान्यधनाक्रमाद्धि लुब्धा न बुद्धिः शमलब्धबुद्धेः ॥१०॥

धर्मविधाने भुवनच्छिद्रपिधाने विभिन्नसंधाने ।
सृष्टिकृता न हि सृष्टः प्रतिमल्लो मल्लदेवस्य ॥ ११ ॥

नीलनीरदकदम्बकमुक्तश्वेतकेतुकिरणोद्धरणेन ।
मल्लदेवयशसा गलहस्तो हस्तिमल्लदशनांशुषु दत्तः ॥ १२ ॥

तस्यानुजो विजयते विजितेन्द्रियस्य
सारस्वतामृतकृताद्भुतहर्षवर्षः ।
श्रीवस्तुपाल इति भालतलस्थितानि
दौःस्थ्याक्षराणि सुकृती कृतिनां विलुम्पन् ॥ १३ ॥

विरचयति वस्तुपालश्चुलुक्यसचिवेषु कविषु च प्रवरः ।
न कदाचिदर्थहरणं श्रीकरणे काव्यकरणे वा ॥ १४ ॥

तेजःपालः पालितस्वासितेजःपुञ्जः सोयं राजते मन्त्रिराजः ।
दुर्वृत्तानां शङ्कनीयः कनीयानस्य भ्राता विश्वविश्रान्तकीर्तिः ॥१५॥

तेजःपालस्य विष्णोश्च कः स्वरूपं निरूपयेत् ।
स्थितं जगत्त्रयीसत्त्वं यदीयोदरकन्दरे ॥ १६ ॥

जाल्हूमाऊसाऊधनदेवीसोहगावयजुकाख्याः ।
पद्मलदेवी चैषां क्रमादिमाः सप्त सोदर्याः ॥ १७ ॥

एतेश्वराजपुत्रा दशरथपुत्रास्त एव चत्वारः ।
प्राप्ताः किल पुनरयनावेकोदरवासलोभेन ॥ १८ ॥

अनुजन्मना समेतस्तेजःपालेन वस्तुपालोयम् ।
मदयति कस्य न हृदयं मधुमासो माधवेनेव ॥ १९ ॥

पन्थानमेको न कदापि गच्छेदिति स्मृतिप्रोक्तमिदं स्मरन्तौ ।
सहोदरौ दुर्द्धरमोहचौरैः संभूय धर्माध्वनि तौ प्रवृत्तौ ॥ २० ॥

इदं सदा सोदरयोरुदेतु युगं युगव्यायतदोर्युगाभ्रि ।
युगे चतुर्थेप्यनघेन येन कृतं कृतस्यागमनं युगस्य ॥ २१ ॥

मुक्तामयं शरीरं सोदरयोः सुचिरमेतयोरस्तु ।
मुक्तामयं किल महीवलयमिदं भाति यत्कीर्त्या ॥ २२ ॥

एकोत्पत्तिनिमित्तौ यद्यपि पाणी तयोस्तथाप्येकः ।
वामोभूदनयोर्न तु सोदरयोः कोपि दक्षिणयोः ॥ २३ ॥

धर्मस्थानाङ्किताभुर्वी सर्वतः कुर्वतामुना ।
दत्तः पादो बलाद्बन्धुयुगुलेन कलेर्गले ॥ २४ ॥

इतश्चौलुक्यवीराणां वंशे शाखाविशेषकः ।
अर्णोराज इति ख्यातो जातस्तेजोमयः पुमान् ॥ २५ ॥

तस्मादनन्तरमनन्तरितप्रतापः
प्राप क्षितिं क्षतरिपुर्लवणप्रसादः ।
स्वर्गापगाजलवलक्षितशङ्खशुभ्रा
बभ्राम यस्य लवणाब्धिमतीत्य कीर्तिः ॥ २६ ॥

ऋतस्तस्मादासीद्दशरथककुत्स्थप्रतिकृतिः
    प्रतिक्ष्मापालानां कवलितबलो वीरधवलः ।
यशःपूरे यस्य प्रसरति रतिक्रान्तमनसा-
    मसाध्वीनां भ्रमाभिसरणकलायां कुशलता ॥ २७ ॥
चौलुक्यः सुकृतिः सवीरधवलः कर्णेजपानां जपं
    यः कर्णेपि चकार न प्रलपतामुद्दिश्य यो मन्त्रिणौ ।
आभ्यामभ्युदयातिरेकरुचिरं राज्यं स्वभर्तुः कृतं
    वाहानां निवहा घटाः करटिनां बद्धाश्च सौधाङ्गणे ॥ २८ ॥
तेन मन्त्रिद्वयेनायं आने जानू (नु) पर्वतिना ।
विभुर्भुजद्वयेनैव सुखमाश्लिष्यति श्रियम् ॥ २९ ॥
गौरीवरश्वशुरभूधरसंभवोय-
    मस्त्यर्बुदः ककुदमत्रिकदम्बकस्य ।
मन्दाकिनीं घनजटं दधदुत्तमाङ्गे
    यः श्यालकः शशिभृतोभिनयं करोति ॥ ३० ॥
क्वचिदिह विहरन्तीर्वीक्षमाणस्य रामाः
    प्रसरति रतिरन्तर्मोक्षमाकाङ्क्षतोपि ।
क्वचन मुनिभिरर्थ्यां पश्यतस्तीर्थवीथिं
    भवति भवविरक्ति (क्तौ) धीरधीरात्मनोपि ॥ ३१ ॥
श्रेयः श्रेणुवशिष्ठहोमहुतभुक्कुण्डान्मृतण्डात्मज-
    प्रद्योताधिकदेहदीधितिभरः कोप्याविरासीन्नरः ।
तं मत्वा परमारणैकरसिकं स व्याजहार श्रुते-
    राधारः परमार इत्यजनि तन्नामाथ तस्यान्वयः ॥ ३२ ॥
श्रीधूमराजः प्रथमं बभूव भूवासवस्तत्र नरेन्द्रवंशे ।
भूमीभृतो यः कृतवानभिज्ञान्पक्षद्वयोच्छेदनवेदनासु ॥ ३३ ॥

धन्धुकध्रुवभटादयस्ततस्ते रिपुद्विपघटाजितोभवन् ।
यत्कुलेजनि पुमान्मनोरमो रामदेव इति कामदेवजित् ॥ ३४ ॥
रोदःकन्दरवर्तिकीर्तिलहरीलिप्तामृतांशुद्युते-
रप्रद्युम्नवशो यशोधवल इत्यासीत्तनूजस्ततः ।
यश्चौलुक्यकुमारपालनृपतिप्रत्यर्थितामागतं
मत्वा सत्वरमेव मालवपतिं बल्लालमालब्धवान् ॥ ३५ ॥
शत्रुश्रेणीगलविदलनोन्निद्रनिस्त्रिंशधारो
धारावर्षः समजनि सुतस्तस्य विश्वप्रशस्यः ।
क्रोधाक्रान्तप्रधनवसुधानिश्चले यत्र जाता-
श्च्योतन्नेत्रोत्पलजलकणाः कोङ्कणाधीशपत्न्यः ॥ ३६ ॥
सोयं पुनर्दाशरथिः पृथिव्यामव्याहतौजाः स्फुटमुज्जगाम ।
मारीचवैरादिव योधनोपि मृगव्यमव्यग्रमतिः करोति ॥ ३७ ॥
सामन्तसिंहसमितिक्षितिविक्षतौजाः
श्रीगूर्जरक्षितिपरक्षणदक्षिणासिः ।
प्रह्लादनस्तदनुजो दनुजोत्तमारि-
चारित्रमत्र पुनरुज्ज्वलयांचकार ॥ ३८ ॥
देवी सरोजासनसंभवा किं कामप्रदा किं सुरसौरभेयी ।
प्रह्लादनाकारधरा धरायामायातवत्येष न निश्चयो मे ॥ ३९ ॥
धारावर्षसुतोयं जयति श्रीसोमसिंहदेवो यः ।
पितृतः शौर्यं विद्यां पितृव्यतो दानमुभयतो जगृहे ॥ ४० ॥
मुक्त्वाविप्रकरानरातिनिकरान्निर्जित्य तत्किंचन
प्रापत्संप्रति सोमसिंहनृपतिः सोमप्रकाशं यशः ।
येनोर्वीतलमुज्ज्वलं रचयताप्युच्चाम्यतामीर्ष्यया
सर्वेषामिह विद्विषां न हि मुखान्मालिन्यमुन्मूलितम् ॥ ४१ ॥

वसुदेवस्येव सुतः श्रीकृष्णः कृष्णराजदेवोस्य ।
मात्राधिकमतापो यशोदयासंश्रितो जयति ॥ ४२ ॥

इतश्च

अन्वयेन विनयेन विद्यया विक्रमेण सुकृतक्रमेण च ।
क्वापि कोपि न पुमानुपैति मे वस्तुपालसदृशो दृशोः पथि ॥४३॥

दयिता ललितादेवी तनयमवीतनयमाप सचिवेन्द्रात् ।
नाम्ना जयन्तसिंहं जयन्तमिन्द्रात्पुलोमपुत्रीव ॥ ४४ ॥

यः शैशवे विनयवैरिणि बोधवन्ध्ये
धत्ते नयं च विनयं च गुणोदयं च ।
सोयं मनोभवपराभवजागरूक-
रूपो न कं मनसि चुम्बति जैत्रसिंहः ॥ ४५ ॥

श्रीवस्तुपालपुत्रः कल्पायुरयं जयन्तसिंहोस्तु ।
कामादधिकं रूपं निरूप्यते यस्य दानं च ॥ ४६ ॥

स श्रीतेजःपालः सचिवश्चिरकालमस्तु तेजस्वी ।
येन जना निश्चिन्ताश्चिन्तामणिनेव नन्दन्ति ॥ ४७ ॥

यच्चाणक्यामरगुरुमरुद्व्याधिशुक्रादिकानां
प्रागुत्पादं व्यधित भुवने मन्त्रिणां बुद्धिधाम्नाम् ।
चक्रेभ्यासः स खलु विधिना नूनमेनं विधातुं
तेजःपालः कथमितरथाधिक्यमापैष तेषु ॥ ४८ ॥

'अस्ति स्वस्तिनिकेतनं तनुभृतां श्रीवस्तुपालानुज-
स्तेजःपाल इति स्थितिं बलिकृतामुर्वीस्थले पालयन् ।
आत्मीयं बहु मन्यते न हि गुणग्रामं च कामन्दकि-
श्चाणक्योपि चमत्करोति न हृदि प्रेक्षास्पदं प्रेक्ष्य यम् ॥ ४९ ॥

इतश्च महं श्रीतेजःपालस्य पत्न्याश्चानुपमदेव्याः पितृवंशवर्णनम् ।

प्राग्वाटान्वयमण्डनैकमुकुटः श्रीसान्द्रचन्द्रावती-
वास्तव्यः स्तवनीयकीर्तिलहरीप्रक्षालितक्ष्मातलः ।
श्री गागाभिधया सुधीरजनि यद्वृत्तानुरागादभू-
त्को नाम प्रमदेन दोलितशिरा नोद्भूतरोमा पुमान् ॥ ६० ॥

अनुसृतसज्जनसरणिर्धरणिगनामा बभूव तत्तनयः ।
स्वप्रभुहृदये गुणिना हारेणेव स्थितं येन ॥ ६१ ॥

त्रिभुवनदेवी तस्य त्रिभुवनविख्यातशीलसंपन्ना ।
दयिताभूदस्याः पुनरङ्गं द्वेधा मनस्त्वेकम् ॥ ६२ ॥

अनुपमदेवी देवी साक्षाद्दाक्षायणीव शीलेन ।
तद्दुहिता सहिता श्रीतेजःपालेन पत्न्याभूत् ॥ ६३ ॥

इयमनुपमदेवी दिव्यवृत्तप्रसून-
व्रततिरजनि तेजःपालमन्त्रीशपत्नी ।
नयविनयविवेकौचित्यदाक्षिण्यदान-
प्रमुखगुणगणेन्दुद्योतिताशेषगोत्रा ॥ ६४ ॥

लावण्यसिंहस्तनयस्तयोरयं रयं जयन्निन्द्रियदुष्टवाजिनाम् ।
लब्ध्वापि मीनध्वजमङ्गलं वयः प्रयाति धर्मैकविधायिनाध्वना ॥६५॥

श्रीतेजपालतनयस्य गुणानमुष्य
श्रीलूणसिंहकृतिनः कति न स्तुवन्ति ।
श्रीवन्धनोद्धुरतरैरपि यैः समन्ता-
दुद्दामता त्रिजगति क्रियते स्म कीर्तिः ॥ ६६ ॥

गुणधननिधानकलशः प्रकटोयमवेष्टितश्च खलसर्पैः ।
उपचयमयते सततं सुजनैरुपजीव्यमानोपि ॥ ६७ ॥

मल्लदेवसचिवस्य नन्दनः पूर्णसिंह इति लीलुकासुतः ।
तस्य नन्दति सुतोयमल्हणादेविभूः सुकृतवेश्म पेथडः ॥ ५८ ॥

अभूदनुपमा पत्नी तेजःपालस्य मन्त्रिणः ।
लावण्यसिंहनामायमायुष्मानेतयोः सुतः ॥ ५९ ॥

तेजःपालेन पुण्यार्थं तस्य पुत्रकलत्रयोः ।
हर्म्यं श्रीनेमिनाथस्य तेने तेनेदमर्बुदे ॥ ६० ॥

तेजःपाल इति क्षितीन्द्रसचिवः शङ्खोज्ज्वलाभिः शिला-
श्रेणीभिः स्फुरदिन्दुकुन्दरुचिरं नेमिप्रभोर्मन्दिरम् ।
उच्चैर्मन्दिरमग्रतो जिनवरावासाद्विपञ्चाशतं
तत्पार्श्वेषु बलानकं च पुरतो निष्पादयामासिवान् ॥ ६१ ॥

श्रीमच्चण्डपसंभवः समभवच्चण्डप्रसादस्ततः
सोमस्तत्प्रभवोश्वराज इति तत्पुत्राः पवित्राशयाः ।
श्रीमल्लूणिगमल्लदेवसचिवः श्रीवस्तुपालाह्वय-
स्तेजःपालसमन्विता जिनमतारामोन्नमन्नीरदाः ॥ ६२ ॥

श्रीमन्त्रीश्वरवस्तुपालतनयः श्रीजैत्रसिंहाह्वय-
स्तेजःपालसुतश्च विश्रुतमतिर्लावण्यसिंहाभिधः ।
एतेषां दश मूर्तयः करिवधूस्कन्धाधिरूढाश्रिरं
राजन्ते जिनदर्शनार्थमयतां दिङ्नायकानामिव ॥ ६३ ॥

मूर्तीनामिह पृष्ठतः करिवधूपृष्ठप्रतिष्ठाजुषां
तन्मूर्तीर्विमलाश्मखत्तकयुता कान्तासमेता दश ।
चौलुक्यक्षितिपालवीरधवलस्याद्वैतबन्धुः सुधी-
स्तेजःपाल इति व्यधापयदयं श्रीवस्तुपालानुजः ॥ ६४ ॥

तेजःपालः सकलप्रजोपजीव्यस्य वस्तुपालस्य ।
सविधे विभाति सफलः सरोवरस्येव सहकारः ॥ ६५ ॥

तेन भ्रातृयुगेन या प्रतिपुरग्रामाध्वशैलस्थलं
वापीकूपनिपानकाननसरःप्रासादसत्रादिका ।
धर्मस्थानपरंपरा नवतरा चक्रेथ जीर्णोद्धृता
तत्संख्यापि न बुध्यते यदि परं तद्वेदिनी मेदिनी ॥ ६६ ॥

शम्भोः श्वासगतागतानि गणयेद्यः सन्मतिर्योथवा
नेत्रोन्मीलनमीलनानि कलयेन्मार्कण्डनाम्नो मुनेः ।
संख्यातुं सचिवद्वयीविरचितामेतामपेतापर-
व्यापारः सुकृतानुकीर्तनततिं सोप्युज्जिहीते यदि ॥ ६७ ॥

सर्वत्र वर्ततां कीर्तिरश्वराजस्य शाश्वती ।
मु(उद्धर्तु)मुपकर्तुं च जानीते यस्य संततिः ॥ ६८ ॥

आसीच्चण्डपमण्डितान्वयगुरुर्नागेन्द्रगच्छश्रिय-
श्चूडारत्नमयत्नसिद्धमहिमा सूरिर्महेन्द्राभिधः ।
तस्माद्विस्मयनीयचारुचरितः श्रीशान्तिसूरिस्ततो-
प्यानन्दामरसूरियुग्ममुदयच्चन्द्रार्कदीप्रद्युति ॥ ६९ ॥

श्रीजैनशासनवनीनवनीरवाहः
श्रीमांस्ततोप्यघहरो हरिभद्रसूरिः ।
विद्वान्मनोमयगदेष्वनवद्यवैद्यः
ख्यातस्ततो विजयसेनमुनीश्वरोयम् ॥ ७० ॥

गुरोस्तस्याशिषां पात्रं सूरिरभ्युदयप्रभुः ।
मौक्तिकानीव सूक्तानि भान्ति यत्प्रतिभाम्बुधेः ॥ ७१ ॥

एतद्धर्मस्थानं धर्मस्थानस्य चास्य यः कर्त्ता ।
तावद्द्वयमिदमुदियादुदयत्ययमर्बुदो यावत् ॥ ७२ ॥
श्रीसोमेश्वरदेवश्चुलुक्यनरदेवसेविताङ्घ्रियुग्मः ।
रचयांचकार रुचिरां धर्मस्थानप्रशस्तिमिमाम् ॥ ७३ ॥
श्रीनेमेरम्बिकायाश्च प्रसादादर्बुदाचले ।
वस्तुपालान्वयस्यास्तु प्रशस्तिः स्वस्तिशालिनी ॥ ७४ ॥

सूत्रकारकल्हणसुतधांधलपुत्रेण चण्डेश्वरेण प्रशस्तिरियमुत्कीर्णा श्रीविक्रमसंवत् १२९३ वर्षे श्रीश्रावण वदि ३ रवौ श्रीविजयसेनसूरिभिः प्रतिष्ठा कारिता ॥

---

# TRANSLATION.

(1) I make a bow to *Sarasvati*, the goddess of learning, who resorts to the poet's mind (*Mánasa*), as if carried to its own abode by the inhabitant of the *Mánasa* lake (flamingo) whom she rides.

(2) May *Sivá's* son give you happiness, who, though possessed of beauty, is free from sensual desire; who, though calm (lit. quenched), is ever burning to put down passion; and who, though his eyes are shut, sees all.

(3) There is the city of *Aṇahilapura*, guarded by *Choulukya* kings who can bear comparison with kings like *Aja*, *Raji* (?) and *Raghu*; the city which affords happiness to people, and where even when the bright fortnight is over, darkness is lessened to a late hour by the faces of the fair, bright as the moon. In that town—

(4) There lived *Chaṇḍapa*, who was as it were the crown of the *Prágváta* family, whose fame was fair as the flower of *Kuṭaja*, and who surpassed in liberality the garden of wish-giving trees.

(5) In consequence of the fruition of his meritorious deeds, a son was born to him, whose name was *Chaṇḍaprasáda*, who was the gold flag-staff of the edifice of his family, whose banner, fame, was spread far and wide.

(6) From that minister of inscrutable heart, who was like the ocean of milk, there sprang *Soma* (the moon), who, by his rays, his virtues, so delighted good men as to make their hair bristle with joy.

(7) From him was born *Ásvarája*, who bore in his heart devotion to the great *Jina*. *Kumáradeví* was his beloved wife as *Párvatí*, the mother of *Kártikeya*, of the god *Siva*.

(8) Their first son was minister *Lúṇiga* by name, who, even when young, was carried by destiny to live in the same world as Indra.

(9) The minister *Lúṇiga*, whose refined intellect looked down even upon that of *Bṛihaspati*, was from the beginning counted among accomplished men by good judges.

(10) His son was the excellent minister *Malladeva*, who was attached to the god *Mallideva* (one of the *Jinas*). The mind of this minister who, by a perfect control over his passions acquired the highest knowledge, was never set on the wealth or wives of others.

(11) Indeed the creator did not create any one who could rival *Malladeva* in the practice of piety, in supplying people's wants, and in the re-establishment of disturbed peace.

(12) *Malladeva's* fame, which liberated rays of the moon from flakes of dark-blue clouds, throttled the white lustre of the tusks of powerful elephants.

(13) Illustriously lives the happy younger brother of this *Malladeva* who had subdued his passions, *Vastupâla* by name, who by the ambrosia of his words produces a wonderful shower of pleasure; and who effaces from the foreheads of learned men the lines of misery written by destiny.

(14) *Vastupâla,* foremost among poets and first among the ministers of *Chulukya* kings, never borrows thoughts in writing poetry, and never misappropriates money in the discharge of his ministerial duties.

(15) There shines his younger brother the great minister *Tejahpâla,* who always guards the treasury of his sword's glory, who is a terror to the wicked and whose fame spreads over every part of the world.

(16) Who can accurately delineate the nature of *Vastupâla* and *Vishṇu,* the interior of whose bosoms (literally stomachs) contains the power which regulates the three worlds?

(17) *Jâlhû, Mâ-û, Sâ-û, Dhanadevî Sohagâ, Vayajukâ,* and *Padamaladevî* are the seven sisters of these in order (of age).

(18) These sons of *Âśvarâja* are no others than the well-known four sons of *Daśaratha,* who have re-appeared in this world from a desire to dwell in one and the same womb.

(19) Whose heart does not *Vastupâla,* who is accompanied by his younger brother *Tejahpâla,* gladden as the month of *Chaitra* accompanied by that of *Vaiśâkha*?

(20) Remembering the commandment recorded in law that one should not venture on a journey alone, these two brothers set out together on the path of righteousness, which is infested by thieves in the form of irresistible temptations.

(21) May prosperity ever attend these two brothers, who looked glorious with their arms long as the yoke of a chariot, and who, being sinless, brought back to the earth the first (*krit* or golden) age even during this fourth (*kali* or iron) age.

(22) May these two brothers long enjoy health of body—these brothers, whose fame (bright white) spreading over the earth's entire globe makes it look as if it were made of pearl.

(23) Though sprung from the same source, these two were like two arms of the same man, yet both of them were right, and neither was the contrary* (left).

(24) These two brothers, marking the earth in all directions with places of charitable endowments, put their heel with force on the neck of the iron-age.

(25) Now, there was born in the race of *Choulukya* warriors a brilliant personage known as *Arṇorâja*, who was an ornament of his branch (of the *Chulukya* family).

(26) He was succeeded by *Lavaṇaprasâda*, whose victorious career was uninterrupted, who destroyed all his enemies, and whose fame, fair as conch-shells bleached by the waters of the Bhágîrathi, crossed the salt ocean and travelled freely beyond it.

(27) To him was born a son, whose name was *Vîradhavala*, who was like *Daśaratha* and *Kakutstha*, and who swallowed the forces of hostile kings. The bright stream of the fame of this king, as it spread forth, defeated all the arts of clandestinely visiting their lovers, which could be employed by lewd women afflicted with a longing for sensual pleasure.

(28) Indeed the *Choulukya* king *Vîradhavala* acted wisely, and did not lend his ear to the senseless words of those who whispered in his ear the slander of the two ministers. The ministers, too, rendered his dominion brilliant with increasing prosperity, and picketed in his court-yard troops of horses and crowds of elephants.

(29) It seems that this king† (*Vîradhavala*), with only two hands, easily embraced *Lakshmî* with those two ministers at hand. (The poet's meaning seems to be that *Vîradhavala* did with two hands only what Vishṇu does with four, the two ministers who were by his side serving as two hands in addition to his own).

Besides,

(30) There is this mountain *Arbuda*, the son of the mountain *Himâlaya*, the father-in-law of *Śiva*, who stands at the head of the whole

---

* दक्षिण, वाम, and सोदर are used in a double sense.

† The word here used for 'king' is a name of god Vishṇu also.

class of mountains, and who, bearing on his head the river *Mandákiní*, mimics *Śiva*, whose brother-in-law he is.

(31) At certain places on this mountain, amorous desire makes its way even into the heart of one who seeks heaven, when he sees beautiful damsels sporting; at other places, even a light-hearted man becomes disgusted with the world when he sees the numerous sacred places which even sages might covet.

(32) From the altar of the sacred fire which was fed by the offerings of *Vaśishṭha*, the greatest of great sages, there sprang up a wonderful man, whose great personal lustre surpassed that of the sun. This sage, who was a receptacle of Vedic lore, knowing this man to be exclusively devoted to the destruction of his foes, called him by the name *Paramára*. Hence all his descendants too bore the name.

(33) The first in that line of kings was *Dhúmarája*, who was like a terrestrial Indra, as he made kings to feel the pangs of having both the wings of their armies routed.*

(34) Then followed *Dhandhuka*, *Dhruvabhaṭa* and others who took in conquest, multitudes of enemies' elephants, and in whose family was born the beautiful *Rámadeva*, who surpassed the god of love.

(35) To him, the waves of whose fame filling the whole cavity of space enveloped in their whiteness the rays of the moon, succeeded his son *Yaśodhavala*, who never succumbed to the power of Cupid, and who promptly killed *Ballála*, the king of *Máḷwá*, having come to know that he had become hostile to the *Chouluk<br>ya* king, *Kumárapála*.

(36) His son was *Dhárávarsha*, who deserved the praise of the whole world, and the edge of whose sword was sharpened by being polished on the throats of his enemies, and in consequence of whose refusal to leave the field of battle, the wives of the king of the *Konkaṇa* unceasingly shed tears from their lotus-like eyes.

(37) This prince whose power knew no obstruction was clearly *Ráma*, the son of *Daśaratha*, who reappeared on the earth and who, though a great warrior, devoted himself exclusively to hunting, as if out of hatred to *Márícha* (who had deceived *Ráma* by assuming the form of a deer).

* The words used to denote kings and wings of armies are such that they may mean mountains and wings as well. Thus the description of the king applies to Indra also.

(38) His younger brother *Prahlâdana*, whose valour remained unsullied on the field of battle against *Sâmantasiṁha*, and whose sword was ever prompt in defending the king of Gujerat, exhibited once more exploits such as those which were performed by the enemy of the greatest of demons (probably *Râvana*).

(39) I cannot decide whether it was the daughter of *Brahman* (*Sarasvatí*) or the divine cow yielding all desired objects, that came to the earth in the form of this king *Prahlâdana*.

(40) Great is the son of *Dhârâvarsha, Somasiṁhadeva*, who inherited bravery from his father, learning from his uncle, and wisdom from both.

(41) Having won numerous pearls and shawls from his many enemies, the king *Somasiṁha* obtained fame which was bright like the moon, but which was peculiar in this respect, that, though it brightened the whole surface of the earth, it did not dispel the darkness on the faces of his enemies rendered uneasy by jealousy.

(42) His son *Kṛishnarâjadeva* is ever glorious like *Krishṇa*, the son of *Vasudeva*, the * former possessed fame and mercy as the latter was accompanied by his mother Yaśodâ, but was a degree greater than he in valour.

And here at the same time:

(43) There is no one anywhere within the range of my sight, who is like Vastupâla in lineage, in modesty, in learning, in heroic acts and in works of righteousness.

(44) To this great minister his beloved wife *Lalitâdevî* bore a son by name *Jayantasiṁha*, who never departed from justice; as *Sâchi*, the daughter of *Puloma*, bore *Jayanta* to *Indra*.

(45) Who is there whose heart does not feel pleasure when he thinks of *Jayantasiṁha*, who is ever on the alert to defeat the God of Love, and who even at a time of life, which is hostile to modesty and destitute of wisdom, possesses justice, politeness and growing virtues.

(46) May this *Jayantasiṁha*, the son of *Vastupâla*, live a thousand revolutions of the four ages, whose personal beauty excels that of the God of Love, and whose charity surpasses the desire (of the suitor).†

---

* The double sense of *Yaśodalyâ Saṅsrita* is easy to understand.

† 'God of Love' and 'desire' are expressed in the original by the same word, काम.

(47) May the glorious minister *Tejahpâla* live for ever, by means of whom all people rejoice, being freed from all cares as if by means of the wish-giving gem.

(48) Indeed the God *Brahman* was practising (trying his apprentice hand) in order to create ultimately this minister, when he created beforehand wise politicians such as *Châṇakya*, *Bṛihaspati*, *Marut* (?) *Vyadhi*-(?) *Sûkra* and others; otherwise, how did this *Tejahpâla* become better than all of them?

(49) There is the brother of *Vastupâla*, the minister *Tejahpâla*—a source of happiness to all living beings, and the preserver of the order established by Bali on this earth; seeing whom, full of wisdom, *Kâmandaki* ceases to think highly of his own qualifications and *Châṇakya* is struck with wonder in his heart.

Now follows the description of the paternal ancestors of *Anupamadevi* the wife of the great *Tejahpâla*.

(50) There was born a wise man, whose name was *Gâgâ*, who was the best crest-jewel that graced the family of *Prâgvâta* (*Porvâḷ Vaṇia*) who lived in the city of *Chandrâvatî*, which abounded in riches, and who laved the surface of the earth in the waves of his fame. Who did not nod his head, and whose hair did not stand on end for joy on account of the admiration of his conduct?

(51) His son was *Dharaṇiga* by name, who followed the path of the good, and who being* *full of accomplishments* was ever *present in the heart* of his Lord as a garland *woven upon a string on the chest*.

(52) His wife was *Tribhuvanadevî*, who bore a virtuous character well-known throughout the three worlds. Her body was different from that of her husband, but her mind was the same as his.

(53) Her daughter *Anupamadevî*, who by her character, equalled the Goddess *Pârvatî* herself, was married to the great *Tejahpâla*.

(54) This *Anupamadevî*, the wife of the great minister *Tejahpâla*, was a creeper that bore the splendid blossom of good character. The moon of her numerous virtues, such as justice, modesty, discrimination, kindness, charity, shed lustre on the whole family.

(55) *Lâvaṇyasiṁha* is their son, who overcomes the force of sensual desires which are like vicious horses, and who, though he has attained an age, the most propitious for love, follows a path in which piety alone is exercised.

---

* गुणि and हृदयस्थिति are used in a double sense.

(56) How many are there who do not praise the excellences of this blessed man, *Lûṇasiṁha*, the son of *Tejaḥpâla*, which (excellences), though bound hard by the ropes of wealth, made mischief—fame—all about the three worlds. (The meaning is that a man not in need of wealth does not go about to show off his excellences, yet those of this man were known throughout the world).

(57) (A vessel containing treasure, hidden under ground is guarded by snakes, and is such that it decreases when men live upon its contents; but) This minister is a vessel containing a treasure of virtues which is open to the sight. This treasure is not attended by snakes in the form of wicked companions. It is a treasure which increases though good men live by it.

(58) The son of the minister *Malladeva*, by *Lîlukâ*, is *Pûrṇasiṁha* by name. His son, *Pethaḍa*, the home of all good acts, lives in happiness.

(59) *Anupamâ* was the wife of the minister *Tejaḥpâla;* and this long-lived youth, whose name is *Lâvaṇyasiṁha*, is the son of the two.

(60) That minister has built on the mountain *Arbuda* (Mount Aboo) this temple of *Nemimâtha* for the spiritual good of his wife and son.

(61) *Tejaḥpâla*, the minister of the great king, caused to be built of stone as bright as Śaṅkha shells, a temple for *Nemināthа*, beautiful as the shining moon or *kunda* flowers—a lofty hall in the front—fifty-two rooms for *Tîrthankaras* on the sides, and further on a *Balânaka* (?)

(62) From the great *Chaṇḍâpa* was born *Chaṇḍaprasâda*, from him *Soma*, from him *Aśvarâja;* his sons were the great *Luṇiga* and minister *Malladeva*, and he named *Vastupâla* and *Tejaḥpâla*, who were like rain-clouds, hovering over the garden of Jainism.

(63) The great *Jaitrasiṁha*, the son of the great minister *Vastupâla;* he far-famed for intelligence, called *Lâvaṇyasiṁha*, the son of *Tejaḥpâla:* there stand for ever the ten statues of these (mentioned above), mounted on the shoulders of female elephants, like those of the presiding gods of the ten quarters, come down to visit *Jina*.

(64) Behind these statues, mounted on the backs of female elephants, were placed their ten likenesses along with those of their wives in bright marble,* by the younger brother of the great *Vastupâla*, *Tejaḥpâla* the wise, the most sincere friend of the *Choulukya* king *Vîradhavala*.

(65) By the side of *Vastupâla*, the supporter of all, shines his brother *Tejaḥpâla*, as a mango tree by the side of a lake.

* विमलाश्मखत्तकयुता: I do not understand the meaning of खत्तक. It may be an adaptation of तख्त. If so, the adjective may mean with thrones of white marble.

(66) The series of charitable constructions, such as wells with steps, drawing wells, ponds, gardens, tanks, temples, places for the distribution of corn and food to the needy, newly constructed, or repaired by these two brothers at every city, by every road, and on every mountain are so numerous that even their number cannot be ascertained. If anybody can, the earth may know them all.

(67) The clever man who can count the exhalations and inhalations of the God *Śiva*, and who can count the openings and shuttings of the sage *Mârkaṇḍa's* eyes, may possibly aspire, if he gives up all other occupations, to enumerate the series of praiseworthy deeds done by these two ministers.

(68) May the fame of *Aśvarâja*, whose sons knew how to repair (old works of public utility) and how to oblige, everlastingly spread in all directions.

(69) There was a sage named *Mahendra*, who without any effort became possessed of extraordinary powers, who was the crest-jewel of the glory of the *Nâgendra* clan, and who was the preceptor of the family adorned by *Chaṇḍapa*. He was succeeded by *Śânti Sûri*, whose excellent life was worthy of admiration. He was followed by the pair *Ânandasuri* and *Amarasûri*, whose lustre was brilliant like that of the sun and the moon.

(70) Then followed *Haribhadrasûri*, the destroyer of sin, who was like a fresh cloud to the garden of the great Jain religion. He was succeeded by this great and celebrated sage, *Vijayasena*, who is a learned and blameless doctor of all mental diseases.

(71) The sage *Abhyudayasûri* is the object of the blessings of that preceptor. From the sea of his genius spring forth the pearls of good words (poetry).

(72) May this holy edifice as well as he who erected it flourish as long as there stands this mountain *Arbuda* (*Aboo*).

(73) *Someśvaradeva*, whose pair of feet is worshipped by the *Chulukya* king, composed this beautiful panegyric of this holy place.

(74) By the blessing of the God *Nemi* and Goddess *Ambikâ*, may this panegyric (standing) on the mountain *Arbuda* give happiness to *Vastupâla* and his descendants.

This panegyric was engraved by *Chaṇḍeśvara*, the son of *Dhândhala*, who was the son of the artisan *Kalhaṇa*. The ceremony of installation was caused to be performed by *Vijayasenasûri* on Sunday, the third of the dark fortnight of *Śravaṇa* in the year 1287 of the *Vikrama* era.

---

# APPENDIX B.

Copy of an inscription on a tablet fixed in a wall in the right side of the Peristyle of the temple of *Tejpála.*

१ द्ण ॥ ॐ नमः × × × × × × × × × × × × × × × × वत् १२८७ वर्षे लौकिक फाल्गुन वदि ३ रवौ । अद्येह श्रीमदणहिलपाटके चौलुक्यकुलकमलराजहंससमस्तराजावलीसमलंकृतमहाराजाधिराजश्री भ × × × × ×

२ विजयिराज्ये त × × × × × × × × × × × × × × (धा?) श्रीवशिष्ठकुण्डयजनानलोद्भूत श्रीमद्धूमराजदेवकुलोत्पन्नमहामण्डलेश्वरराजकुलश्रीसोमसिंहदेवविजयिराज्ये तस्यैव महाराजाधिराजश्री भीमदेवस्य प्रसाद × × × ×

३ रात्रामण्डले श्रीचौलुक्यकुलोत्पन्नमहामण्डलेश्वरराणकश्री लवणप्रसाददेवसुतमहामण्डलेश्वरराणकश्रीवीरधवलदेवसक्तसमस्तमुद्राव्यापारिणा श्रीमदणहिलपुरवास्तव्यश्रीप्राग्वाटज्ञातीय ठ० श्रीचण्डपसुत ठ० श्री

४ चण्डप्रसादात्मजमहं० श्रीसोमतनुज ठ० श्रीआसराजभार्याठकुर श्रीकुमारदेव्योः पुत्रमहं० श्रीमल्लदेवसंघपतिमहं० श्रीवस्तुपालयोरनुजसहोदरभ्रातृमहं० श्रीतेजःपालेन स्वकीयभार्यामहं० श्रीअनुपमादेव्यास्तत्कुक्षिस × × ×

५ वित्रपुत्रमहं० श्रीलुणसिंहस्य च पुण्ययशोभिवृद्धये श्रीमदर्बुदाचलोपरि देउलवाडाग्रामे समस्तदेवकुलिकालंकृतं विशालहस्तिशालोपशोभितं श्रीलुणसिंहवसहिकाभिधानश्रीनेमिनाथदेवचैत्यमिदं कारितम् ॥ छ.

६ प्रतिष्ठितं श्रीनागेन्द्रगच्छे श्रीमहेन्द्रसूरिसंताने श्रीशान्तिसूरिशिष्य श्रीआनन्दसूरि श्रीअमरचन्द्रसूरिपट्टालंकरणप्रभु श्रीहरिभद्रसूरिशिष्यैः श्रीविजयसेनसूरिभिः ॥ छ ॥ अत्र च धर्मस्थाने कृतश्रावकगोष्ठिकानां नामा

७ नि यथा ॥ महं॰ श्रीमल्लदेवमहं॰ श्रीवस्तुपालमहं॰ श्रीतेजःपालप्रभृतिभ्रातृत्रयसंतानपरंपरया तथामहं॰ श्रीलूणसिंहसत्कमातृकुलपक्षे श्रीचन्द्रावतीवास्तव्यप्राग्वाटज्ञातीयठ॰ श्रीसावदेवसुतठ॰ श्री शालिगतनुजठ॰

८ श्रीसागरतनयठ॰ श्रीगागापुत्रठ॰ श्रीधरणिगभ्रातृमहं॰ श्री राणिगमहं॰ श्रीलीला॰ तथा ठ॰ श्रीधरणिगभार्याठ॰ श्रीतिहुणदेवीकुक्षिसंभूतमहं॰ श्रीअनुपमादेवीसहोदरभातृठ॰ श्रीखीम्वसीह ठ॰ श्रीआम्वसीह श्रीऊदल

९ तथा महं॰ श्रीलीलासुतमहं॰ श्रीलूणसीह तथा भातृठ॰ श्रीजगसीहठ॰ रत्नसिंहानां समस्तकुटुम्बेन एतदीयसंतानपरंपरया च एतस्मिन्धर्मस्थाने सकलमपिस्नपनपूजासारादिकं सदैव करणीयं निर्वाहणीयं च ॥ तथा ॥

१० श्रीचन्द्रावत्याः सत्कसमस्तमहाजनसकलजिनचैत्यगोष्टिकप्रभृतिश्रावकसमुदायः ॥ तथा उंवरणीकी सरउलीग्रामीयप्राग्वाटज्ञा॰ श्रे॰ रासल उ॰ आसधर तथा ज्ञा॰ माणिभद्र उ॰ श्रे॰ आल्हण तथा॰ ज्ञा॰ श्रे॰ देल्हण उ॰ खीम्वसी-

११ हधर्कटज्ञातीयश्रे॰ नेहा उ॰ साल्हा तथा ज्ञा॰ धउलिग उ॰ आसचंद्र तथा ज्ञा श्रे॰ वहुदेव उ॰ सोम प्राग्वाट ज्ञा॰ श्रे॰ सावडउ॰ श्रीपाल तथा ज्ञा॰ श्रे॰ जीन्दा उ॰ पाल्हण धर्कट ज्ञा॰ श्रे॰ पासु उ॰ सादा प्राग्वाटज्ञातीयपूना उ॰ सा-

१२ ल्हा तथा श्रीमालज्ञा० पूना उ० साल्हाप्रभृतिगोष्ठिकाः ॥ अमीभिः श्रीनेमिनाथदेवप्रतिष्ठावर्षग्रन्थियात्राष्टाहिकायां देवकीयचैत्रवदि ३ तृतीयादिने स्नपनपूजाद्युत्सवः कार्यः ॥ तथा कासन्हदग्रामीय ऊएसवालज्ञा-

१३ तीयश्रेष्ठसोहि उ० पाल्हण तथा ज्ञा० श्रे० सलखण उ० वालण प्राग्वाट ज्ञा० श्रे० सांतुय उ० देल्हय तथा ज्ञा० श्रे० गोसल उ० आल्हा तथा ज्ञा० श्रे० कोला ऊ० आम्बा तथा ज्ञा० श्रे० पासचन्द्र उ० पूनचन्द्र तथा ज्ञा० श्रे० जसवीर उ० ज-

१४ गा तथा ज्ञा० ब्रह्मदेव उ० राल्हा श्रीमाल ज्ञातीय कडुयरा उ० कुलधरप्रभृतिगोष्ठिकाः । अमीभिस्तथा ४ दिने श्रीनेमिनाथदेवस्य द्वितीयाष्टाहिकामहोत्सवः कार्यः ॥ तथा ब्रह्माणवास्तव्य प्राग्वाटज्ञातीयमहाजनि०

१५ आंमिग उ० पुनड ऊ एसलज्ञा० महा० धान्वा उ० सागर तथा ज्ञा० महा० साटा उ० वरदेव प्राग्वाटज्ञातीय महा० पाल्हण उ० उदयपाल ऊंहसवाल ज्ञा० महा आंबोधन उ० जगसीह श्रीमाल ज्ञा० महा० वीसल उ० पासदेवप्रा–

१६ ग्वाटज्ञातीयमहा० वीरदेव उ० अरसीह तथा ज्ञा० श्रे० धनचन्द्र उ० रामचन्द्र प्रभृतिगोष्ठिकाः । अमीभिस्तथा ५ पञ्चमीदिने श्रीनेमिनाथदेवस्य तृतीयाष्टाहिकामहोत्सवः कार्यः ॥ तथा धउलीग्रामीय प्राग्वाटज्ञातीयश्रे० सा–

१७ जण उ० पासवीर तथा ज्ञा० श्रे० वोहडिउ० पुना तथा ज्ञा० श्रे० जसडय उ० जेगण तथा ज्ञातीय श्रे० साजण उ० भोला तथा ज्ञा० पासिल उ० पूनुय तथा ज्ञा० श्रे० राजुय० ऊ सावदेव तथा ज्ञा० दूगसरण उ० साहणीय ऊंहसवाल.

१८ ज्ञा० श्रे० सलखणऊँ मह० जोगा तथा ज्ञा० श्री देवकुंयार उ० प्रभृतिगोष्ठिका: ।। अमीभिस्तथा ६ षष्टीदिने श्रीनेमिनाथदेवस्य चतुर्थाष्टाहिकामहोत्सवः कार्यः ।। तथा मुण्डस्थलमहातीर्थवास्तव्यप्राग्वाटज्ञातीय

१९ श्रेष्ठ संधीरण उ० गुणचन्द्रपाल्हा तथा श्रे० सोहिय उ० आस्वेसर तथा श्रे० जेजा उ० खांखण तथा फीलिणिग्रामवास्तव्य श्रीमाल ज्ञा० वापलगाजणप्रमुखगोष्ठिका: । अमीभिस्तथा ७ सप्तमींदिने श्रीनेमिनाथदेवस्य पञ्चमाष्टाहिकाम

२० होत्सवः कार्यः ।। तथा हण्डाउद्राग्रामडबाणीग्रामवास्तव्य श्रीमालज्ञातीय श्रे० आस्वुय उ० जसराज तथा ज्ञा० श्रे लखमण उ० आसू तथा ज्ञा० श्रे० आसल उ० जगदेव तथा ज्ञा० श्रे० समिग उ० धणदेव तथा ज्ञा० श्रे० जिणदेव उ० जाला

२१ प्राग्वाट ज्ञा० श्रे० आसल उ० सादा श्रीमाल ज्ञा० श्रे० देदा उ० वीसल तथा ज्ञा० श्रे० आसधर उ० आसल तथा ज्ञा० श्रे० थिरदेव उ० वीरुय तथा ज्ञा० श्रे० गुणचन्द्र उ० देवधर तथा ज्ञा० श्रे० हरिया उ० हेमा प्राग्वाट ज्ञा० श्रे० लखमण

२२ उ० कडुयाप्रभृतिगोष्ठिका: । अमीभिस्तथा ८ अष्टमीदिने श्रीनेमिनाथदेवस्य षष्ठाष्टाहिकामहोत्सवः कार्यः ।। तथा मडाहडवास्तव्य प्राग्वाटज्ञातीय श्रे० देसल उ० ब्रह्मसर (सा?)ण तथा ज्ञा० जसकर उ० श्रे० धणिया तथा ज्ञाश्रे०

२३ देल्हण उ० आल्हा तथा ज्ञा० श्रे० वाला उ० पद्मसीह तथा ज्ञा० श्रे० आंवुय उ० वोहडि तथा ज्ञा० श्रे० वोसरि उ० पूनदेव तथा ज्ञा० श्रे० वीरुय उ० साजण तथा ज्ञा० श्रे० पाहुय उ० जिणदेवप्रभृतिगोष्ठिका: । अमीभिस्तथा ९ नवमीदिने

२४ श्रीनेमिनाथदेवस्य सप्तमाष्टाहिकामहोत्सवःकार्यः ॥ तथा साहिलवाडावास्तव्य ऊहसवालज्ञातीयश्रेदेल्हण उ० आल्हण श्रे० नागदेव उ० आम्वदेव श्रे० काल्हण उ० आसल श्रे० बोहिथ उ० लाखण श्रे० जसदेव उ० वहडा श्रे०

२५ सीलण उ० देल्हण श्रे० वहुदा श्रे० महघरा उ० धनपाल श्रे० पूनिग उ० बाघा श्रे० गोसल उ० वहडाप्रभृतिगोष्ठिकाः । अमीभिस्तया दशमीदिने श्रीनेमिनाथदेवस्य अष्टमाष्टाहिकामहोत्सवः कार्यः ॥ तथा श्रीअर्बुदोपरिदेउलवा

२६ डावास्तव्य समस्तश्रावकैः श्रीनेमिनाथदेवस्य पञ्चापि कल्याणिकानि यथादिनं प्रतिवर्षं कर्तव्यानि ॥ एवमियं व्यवस्था श्रीचन्द्रावतीपतिराजकुलश्रीसोमसिंहदेवेन तथा तत्पुत्र राज० श्रीकान्हडदेवप्रमुखकुमारैः समस्तराजलोकैस्तथा श्रीचन्द्रावतीयस्थानपतिभट्टारकप्रभृतिकविलास तथा गूगुलीब्राह्मणसमस्तमहाजनगोष्ठिकैश्च तथा अर्बुदाचलोपरि श्रीअचलेश्वर श्रीवशिष्ठ तथा संनिहिता ग्राम देउलवाडाग्राम श्रीश्रीमातामहबुग्राम आबुयाग्राम ऊरासाग्राम ऊ-

२८ तरछग्राम सिहरग्राम सालग्राम हेठउजीग्राम आखीग्राम श्रीधान्धलेश्वरदेवीय कोटडी प्रभृति द्वादश ग्रामेषु संतिष्ठमान स्थानपति तपोधन गुगुलि ब्राह्मण राठिय प्रभृति समस्तलोकैस्तथा भालिभाडाप्रभृति ग्रामेषु संतिष्ठमानश्रीप्रतीहा

२९ रवंशीय सर्वराजपुत्रैश्च आत्मीयात्मीयस्वेच्छया श्रीनेमिनाथदेवस्य मण्डपे समुपविश्योपविश्य महं० श्रीतेजःपालपार्श्वात्स्वीयस्वीय प्रमोदपूर्वकं श्रीलुणसीहवसहिकाभिधानस्यास्य धर्मस्थानस्य सर्वोपि रक्षापभारः स्वीकृतः । तदेतदा

३० त्मीयवचनं प्रमाणीकुर्वाङ्गिरेतैः सर्वैरपि तथा एतदीय-संतानपरंपरया च धर्मस्थानमिदमाचन्द्रार्कं यावत्परिरक्षणीयम्।। यतः। किमिह कपालकमण्डलुवल्कलसितरक्तपटजटापटलैः । व्रतमिद-मुज्ज्वलमुन्नतमनसां प्रतिपन्ननिर्वहणम् ।।

३१ तथा महाराजकुल श्रीसोमसिंहदेवेन अस्यां श्रीलूणसिंह-वसहिकायां श्रीनेमिनाथदेवाय पूजाङ्गभोगार्थं वाहिरहद्यां डवाणि-ग्रामः शासनेन प्रदत्तः ।। स च श्रीसोमसिंहदेवाभ्यर्थनया प्रमारा-न्वयिभिराचन्द्रार्कं यावत्प्रतिपाल्यः ।।

३२ सिद्धिक्षेत्रमिति प्रसिद्धमहिमा श्रीपुण्डरीको गिरिः श्रीमान्रै-वतकोपि विश्वविदितः क्षेत्रं विमुक्तेरिति । नूनं क्षेत्रमिदं द्वयोरपि तयोः श्रीअर्बुदस्तत्प्रभू भेजाते कथमन्यथा सममिदं श्रीआदिनेमी स्वयम् १ ।। संसारसर्वस्वमिहैव मुक्ति(ः?)

३३ सर्वस्वमप्यत्र जिनेशदृष्टम् । विलोक्यमाने भुवने तथास्मि-न्पूर्वं परं च त्वयि दृष्टिपान्थे ।। २ श्रीकृष्णर्षीयश्रीनयचन्द्रसूरेरिमे । संसरवणपुत्र संसिहराजसाधूसाजणसं सहसा साहदेपुत्री सुनथव प्रणमन्ति ।। शुभम् ।।

---

*Note.*—Lines 32 and 33 which are partly unintelligible are not so carefully inscribed as the rest of the inscription. The letters are badly shaped, and there occur in those lines five instances in which the single mâtrâ is written on the top of the letter to which it belongs.

# APPENDIX C.

---

An extract containing a brief statement of the doctrine of Syâdvâda.

सर्वं वस्तु सप्तभङ्गस्वभावं भजते । ते सप्तभङ्गाश्चामी

१ स्वद्रव्यक्षेत्रकालभावापेक्षया—स्यादस्ति ।

२ परद्रव्यक्षेत्रकालभावापेक्षया—स्यान्नास्ति ।

३ कस्यचिदंशस्य स्वद्रव्याद्यपेक्षया विवक्षितत्वात्कस्यचिच्चांशस्य परद्रव्याद्यपेक्षया विवक्षितत्वाच्च } स्यादस्तिनास्ति ।

४ वचनस्य क्रमगोचरत्वादनयोरेव धर्मयोर्यौगपद्येनाभिधातुमशक्यत्वात् } स्यादवक्तव्यम् ।

५ एकस्यांशस्य स्वद्रव्याद्यपेक्षया परस्य तु सामस्त्येन स्वपरद्रव्याद्यपेक्षया विवक्षितत्वात् } स्यादस्त्यवक्तव्यम् ।

६ एकस्यांशस्य परद्रव्याद्यपेक्षया परस्य तु यौगपद्येन स्वपरद्रव्याद्यपेक्षया विवक्षितत्वात् } स्यान्नास्त्यवक्तव्यम् ।

७ एकस्यांशस्य स्वद्रव्याद्यपेक्षया परस्य तु परद्रव्याद्यपेक्षया अन्यांशस्य तु स्वपरद्रव्याद्यपेक्षया विवक्षितत्वात् } स्यादस्ति च नास्ति चावक्तव्यं च ।

(1). Everything is, when viewed with reference to its own material, time, place, and qualities.

(2). Everything is non-existent when viewed with reference to material, time, place, and qualities not its own, but those of others.

(3). Everything is, and is non-existent, when viewed alternately in the above two relations.

(4). Everything is beyond the sphere cf speech when viewed in both the relations at the same time.

(5), (6), & (7). Seem to be arrived at by combining the first three views, each at a time with the last.

---

# ERRATA.

---

## KÎRTIKAUMUDÎ.

P. 1, l. 11. For °पास्ति समु°. read °पास्तिसमु°.
P. 2, l. 21. „ दुःखार्तो „ दुःखार्ता.
P. 13, l. 22. „ °पाली अ° „ °पालोअ°.
P. 19, l. 3. „ वीर धवलेन „ वीरधवलेन.
P. 19, l. 7. „ तत्र भवती „ तत्रभवती.
P. 40, l. 20. „ दूर्वाभा° „ दूर्वाभ°.
P. 42, l. 14. „ वाचि वाचि ग° „ वाचि वाचिग.
P. 43, l. 19. „ °सिहः „ सिहं.
P. 45, l. 19. „ पुण्डे „ पुण्ड्रे°.
P. 47, l. 14. „ पुरो „ पुरा.
P. 48, l. 10. „ समये „ समयो.
P. 49, l. 1. „ लीलामरन्द „ लीला मरन्द.
P. 49, l. 16. „ सकूसं „ स कूसं.
P. 49, l. 21. „ घन „ धन.
P. 53, l. 9. After the first सान्द्रे supply in brackets चान्द्रे.
P. 54, l. 13. „ नखान्तं „ नखान्तः
P. 55, l. 6. For लेखाख° read लेखा ख.
P. 56, l. 1. „ विलंघ्य „ विलङ्घ्य.
P. 56, l. 12. „ तथामवेन „ तथा मवेन.
P. 57, l. 11. „ श्रमः स्रि° „ श्रमस्रि°.
P. 57, l. 16. „ °रमाकम° „ °रमा कम°.
P. 63, l. 20. „ चिराय वैरा „ चिरायवैरा.
P. 64, l. 6. „ शिलिन्धे° „ शिलीन्धे°.
P. 67, l. 14. „ मान्तः करणं „ मान्तःकरणं.

ERRATA.

## NOTES.

P. 1, l. 25. Read 'well known Śiva,' as in inverted commas.

P. 2, l. 23. For numerates read 'enumerates.'

P. 3, l. 5. Supply a semi-colon after 'feminine.'

P. 7, l. 19. For 'Arnorâja' read 'Ajayapâla.'

P. 7, l. 27. „ 'Aśura' „ 'Asura.'

P. 9, l. 9. „ 'Soreṭh' „ 'Bundelkhund.'

P. 12, l. 10. „ समानै: supply a comma.

P. 12, l. 27. After चापक्य „ 'for contrast.'

P. 14, l. 9. Read 'temples and' after 'repairing.'

...... For 'and thus, &c.,' read 'Inscriptions lately discovered by Professor Bhandarkar and Mr. K. T. Telang prove, that the word कीर्तन was used in the sense of a temple.

P. 15, l. 6. For 'arbitrator' read 'mediator.'

P. 19, l. 2. „ 'battle' „ 'battle-field.'

P. 20, l. 14. After 'same' „ 'time.'

P. 24, l. 8. „ 'those' „ 'two.'

P. 26, l. 12. For 'is' „ 'was.'

P. 27, l. 14. After 'sides' supply a comma.

P. 29, l. 19. „ 'as' read 'a.'

---